आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः

( ८२ )

# हरिदीक्षितकृता ब्रह्मसूत्रवृत्तिः ।

मूल्यं–पञ्चसप्ततिपणाधिकं रूपकत्रयम् [ ३–७५ ]

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८२

# हरिदीक्षितकृता ब्रह्मसूत्रवृत्तिः ।

एतत्पुस्तकं

वे० शा० रा० वैद्योपाह्व रङ्गनाथशास्त्रिभिः

संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३९

खिस्ताब्दाः १९१७



मूल्यमाणकसप्तकाधिकं रूपकद्वयम् ( २८७ )

ॐ तत्सद्ब्रह्मणे नमः ।

# हरिदीक्षितकृतब्रह्मसूत्रवृत्तिः ।

रज्जौ सर्पवदध्यस्तं यस्मिन्मायामयं जगत् ।
नृसिंहाख्यं परं ब्रह्म भावयामि तदात्मकम् ॥ १ ॥
शंकरभगवत्पादा विजयन्ते जगति यद्यशोऽजस्रम् ।
माप्यद्यापि कलाऽपि द्वैताचार्यैस्त्रिभिस्त्रिविधैः ॥ २ ॥
परशिवविष्णुविरिञ्चीन्वसिष्ठशक्ती पराशरव्यासौ ।
शुकगौडपादसञ्ज्ञौ वन्दे गोविन्दशंकरौ क्रमशः ॥ ३ ॥
ओम् नमः श्रीब्रह्मविद्यासंप्रदायकर्तृभ्यो महागुरुभ्यः ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि-नावधीतमस्तु । मा विद्विषावहै । ओम् शान्तिः । शान्तिः । शान्तिः ।

गुरवे साष्टाङ्गप्रणामान्कुर्यात् । एवं वेदान्तश्रवणसंप्रदायः ।

तत्र वेदान्तशास्त्रं प्रस्थानत्रयात्मकम् । सूत्रभाष्यप्रस्थानमुपनिषद्भाष्यप्रस्थानं गीताभाष्य-प्रस्थानं चेति । तत्रेदानीं जिज्ञासूनां सुखबोधाय सूत्रभाष्यसंग्रहः क्रियते । अध्यायचतु-ष्टयात्मकस्यास्य शास्त्रस्य ब्रह्मविचारो विषयः । अध्यायास्तु चत्वारः ।

सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमेनाध्यायेन प्रतिपाद्यते । द्वितीयेन संभावितविरोधः परिह्रियते । तृतीयेन विद्यासाधनानां निर्णयः । चतुर्थेनाध्या-येन विद्याफलनिर्णय इत्येतेऽध्यायार्थाः । तदुक्तम्—

शास्त्रं ब्रह्मविचाराख्यमध्यायाश्च चतुर्विधाः ।
समन्वयाविरोधौ द्वौ साधनं च फलं तथा ॥ इति ।

तत्रैकैकाध्यायस्य चत्वारश्चत्वारः पादाः । एवं षोडश पादा भवन्ति । तत्र प्रथमाध्या-यगतपादार्था उच्यन्ते । स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमपादे चिन्त्यम् । अस्पष्टब्रह्मलि-ङ्गत्वे सत्युपास्यविषयकं वाक्यजातं द्वितीयपादे चिन्त्यम् । तृतीयपादे ज्ञेयब्रह्मविषयं वाक्य-जातं चिन्त्यम् । चतुर्थपादे त्वव्यक्तपदमजापदं चेत्येवमादिसंदिग्धपदजातं चिन्त्यम् । अथ द्वितीयाध्यायगतपादार्था उच्यन्ते । प्रथमपादे सांख्ययोगकाणादस्मृतिभिर्विरोधो वेदा-न्तसमन्वयस्य परिहृतः । द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम् । तृतीयपादे पूर्वभागेण पञ्चमहाभूतश्रुतीनां विरोधः परिहृतः । उत्तरभागेण च जीवश्रुतीनाम् । चतुर्थपादे लिङ्गशरीरश्रुतीनां विरोधः परिहृत इति । तृतीयाध्यायगतपादार्था उच्यन्ते ।

प्रथमपादे जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितम् । द्वितीयपादे पूर्वभागेण त्वपदार्थः शोधितः । उत्तरभागेण तत्पदार्थः शोधितः । तृतीयपादे सगुणविद्यासु गुणोपसंहारो निरूपितः । चतुर्थपादे निर्गुणज्ञानस्य बहिरङ्गभूतशमदमादिसाधनानि निरूपितानि । चतुर्थाध्यायगतपादार्था उच्यन्ते । प्रथमपादे श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा साक्षात्कृत्य जीवतः पुण्यपापलेपविनाशलक्षणा मुक्तिरभिहिता । द्वितीयपादे म्रियमाणस्योत्क्रान्तिप्रकारो निरूपितः । तृतीयपादे मृतस्य सगुणब्रह्मविद उत्तरमार्गोऽभिहितः । चतुर्थपादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरभिहिता । उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकस्थितिर्निरूपिता । एव षोडशपादार्थसंग्रह । अथ संगतिविचार । शास्त्रसगतिरध्यायसंगतिः पादसगतिश्चेति त्रिविधा सगति । तद्यथा ईक्षत्यधिकरणे तदैक्षतेति वाक्यं प्रधानपर ब्रह्मपर वेति विचार्यते । तस्य विचारस्य ब्रह्मसंबन्धित्वाद्ब्रह्मविचारशास्त्रे संगतिः । वाक्यं ब्रह्मणि तात्पर्यवदिति निर्णयात्समन्वयाध्यायसगति. । ईक्षणस्य चेतने ब्रह्मण्यसाधारणत्वेन स्पष्टलिङ्गत्वात्प्रथमपादसंगतिः । एव सर्वेष्वप्यधिकरणेषु यथायोग सगतित्रयमूहनीयम् । अवान्तरसगतिस्त्वनेकविधा । आक्षेपसंगतिर्दृष्टान्तसगति. प्रत्युदाहरणसगतिः प्रासङ्गिकसगतिरित्येवमादिः । सेयमवान्तरसंगतिर्व्युत्पन्नेनोहितु शक्यते । तद्यथा प्रथमाधिकरणस्य ब्रह्मविचारशास्त्रमारम्भणीयमिति सिद्धान्तः । तत्र युक्तिः—ब्रह्मणः संदिग्धत्वादिति । द्वितीयाधिकरणस्य जगज्जन्मादि ब्रह्मलक्षण न भवतीति पूर्व. पक्षः । तत्र युक्तिः—जन्मादेर्जगन्निष्ठत्वादिति । तदुभयमवलोक्य तयोराक्षेपसगति योजयेत् । संदिग्धत्वाद्ब्रह्म विचार्यमित्येतदयुक्तम् । जन्मादेरन्यनिष्ठत्वेन ब्रह्मणो लक्षणाभावे सति ब्रह्मैव नास्ति कुतस्तस्य संदिग्धत्वं विचार्यत्वं वेत्याक्षेपसगतिः । दृष्टान्तप्रत्युदाहरणसगती सर्वत्र सुलभे । पूर्वाधिकरणसिद्धान्तवदुत्तराधिकरणपूर्वपक्षे हेतुत्वसाम्यस्योत्तराधिकरणसिद्धान्ते हेतुशून्यत्ववैलक्षण्यस्य चोत्प्रेक्षितुं शक्यत्वात् । आक्षेपादिसगतयो यथायोगमुन्नेयाः । तदुक्तम्—

'पूर्वन्यायस्य सिद्धान्तयुक्ति वीक्ष्य परे नये ।
पूर्वपक्षोक्तयुक्तिं च तत्राऽऽक्षेपादि योजयेत् ' इति ॥

प्रासङ्गिकसंगतिरुदाह्रियते —पूर्वाधिकरणेऽङ्गुष्ठमात्रवाक्यस्य ब्रह्मरूपत्वादङ्गुष्ठमात्रत्वं ब्रह्मणो मनुष्यहृदयापेक्षं मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तम् । तत्प्रसङ्गेन देवाधिकारसंगतिरिति । अस्मिञ्छास्त्र एककमधिकरण पञ्चावयवम् । विषयः संशयः सगतिः पूर्वपक्षः सिद्धान्तश्चेति पञ्चावयवाः । इत्युदाहारः समाप्तः । अथेदानीं सूत्रार्थो भाष्यानुसारेण संगृह्यते । तत्र शास्त्रस्य प्रथमं सूत्रम्—अथतो ब्रह्मजिज्ञासेति । ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' [ बृ० २ । ४ । ५ ] इत्यात्मदर्शनफलमुद्दिश्य तत्साधनत्वेन श्रवण विधीयते । श्रवणं नाम वेदान्तवाक्याना ब्रह्मणि तात्पर्यज्ञानानुकूलो

न्यायादिविचारः । तदेतद्विचारविधायकं वाक्यं विषयः । ब्रह्मविचारात्मकन्यायनिर्णयात्मकं वेदान्तशास्त्रमनारम्भणीयमारम्भणीयं वेति संशयः । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यम् । तत्र वेदान्तशास्त्रमनारम्भणीयमिति तावत्प्राप्तम् । विषयप्रयोजनाभावात् । तथा हि—संदिग्धं हि विचारस्य विषयो भवति । 'संदिग्धेऽर्थे न्यायः प्रवर्तते' इति न्यायात् । ब्रह्मत्वं संदिग्धम् । तत्किं ब्रह्माकारेण संदिह्यते जीवात्माकारेण वा । नाऽऽद्यः । 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २।१।१ ] इत्यादिभिर्ब्रह्मस्वरूपस्य निश्चितत्वात् । न द्वितीयः । अहंप्रत्ययेनाऽऽत्माकारस्यापि निश्चयात् । न च 'तत्त्वमसि' [ छा० ६ । ८ । ७ । ] 'अयमात्मा ब्रह्म' ( बृ० २ । ५ । १९ ] इत्यादिवाक्यैरैक्यप्रतिभासनादहंप्रत्ययेन च भेदप्रतिभासनात्संदेह इति वाच्यम् । अबाधिताहंप्रत्ययविरोधेनैक्यश्रुतेरुपचरितार्थत्वात् । न चाध्यस्तात्मविषयत्वेन भ्रान्तोऽहंप्रत्यय इति वाच्यम् । स्वयंप्रकाशे ब्रह्मणि कर्तृत्वाद्यध्यासासंभवात् । तस्मान्न विषयः संभवति । नापि प्रयोजनं पश्यामः । उक्तप्रकारेण ब्रह्मात्मैक्यज्ञाने जातेऽपि मुक्तेरदर्शनात् । तस्माद्ब्रह्मविचारात्मकं शास्त्रमनारम्भणीयमिति पूर्वः पक्षः । सिद्धान्तस्तु—वेदान्तशास्त्रमारम्भणीयम् । विषयप्रयोजनसद्भावात् । श्रुत्यहंप्रत्ययोर्विरोधेन ब्रह्मणि संदेहात् । न च श्रुतेरुपचरितार्थत्वम् । उपक्रमादितात्पर्यलिङ्गसहकृतानेकवाक्यानामुपचरितार्थस्य वक्तुमशक्यत्वात् । अहंप्रत्ययस्य तु मनुष्योऽहमित्यादौ परैरपि भ्रमत्वाङ्गीकारात् । कर्तृत्वाद्यंशेऽपि श्रुतिबलाद्भ्रमत्वमास्थेयमिति नाध्यासानुपपत्तिः । न च स्वयंप्रकाशे ब्रह्मण्यध्यासासंभव इति वाच्यम् । अनाद्यविद्यावशात्स्वयंप्रकाशेऽप्यध्यासस्यानुभवसिद्धतया स्वरूपज्ञानस्याविरोधकल्पनात् । दृष्टानुसारित्वात्कल्पनायाः । न हि दृष्टेऽनुपपन्नं नाम । न चैवमविद्यानिवृत्त्यनुपपत्तावनिर्मोक्षप्रसङ्गः । श्रवणमनननिदिध्यासनादिक्रमेण ब्रह्मसाक्षात्कारे सत्यविद्यानिवृत्तिसंभवात् । तथा च श्रुतिः—'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] 'यो वेद निहितं गुहायाम्' [ तै० २ । १ । १ ] 'सोऽविद्याग्रन्थिं विकिरतीह सौम्य' [ मुण्ड० २ । १ । १० ] इत्यादि । स्मृतिश्च—

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' ॥ इत्यादि ।

तस्माद्विषयप्रयोजनसद्भावाच्छास्त्रमारम्भणीयमिति । इदं भाष्यं भामतीनिबन्धानुसारेणोक्तम् । तथा हि युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाऽप्यन्योन्यस्मिन्नन्योन्या-

१ क. °ण वा वि° ।

त्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेति नैसर्गिकोऽयं लोकव्यवहार इतिभाष्यम्। आहुरत्र वाचस्पतिमिश्राः—अथ यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः । यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्तो वा तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । अस्यार्थमाह कल्पतरु:—जिज्ञास्यत्वव्यापके संदेहप्रयोजने तद्विरुद्धे चासंदिग्धत्वानिष्प्रयोजनत्वे तयोरुपलब्धिः । ततश्च व्यापकाभावे व्याप्यजिज्ञास्यत्वाभाव इत्यर्थः । अत्र प्रयोगः—मुमुक्षुणा ब्रह्म न विचार्यम् । तत्प्रत्यसंदिग्धत्वात्तथाविधकुम्भवत्। तथाऽप्रयोजनत्वात्काकदन्तवदिति । इत्यादिनोपचरितार्थो एवोपनिषद इति युक्तमुत्पश्याम इत्यन्तेन ग्रन्थेनासंदिग्धत्वानिष्प्रयोजनत्वे आशङ्क्य परिहरति —युष्मदस्मत्प्रत्ययगोचरयोरिति । अत्र युष्मदित्यादिर्मिथ्या भवितुं युक्तमित्यन्तः शङ्काग्रन्थः । तथाऽपीत्यादिः परिहारग्रन्थ इत्यादिर्विस्तरो भामत्या द्रष्टव्यः । ननु श्रवणं विधीयत इत्यनुपपन्नम् । अधीतसाङ्गस्वाध्यायस्य विदितपदपदार्थसंगतः ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ [ तै० २ । १ । १ ] इत्यादिवाक्ये ब्रह्मणा विधिं विनैव ज्ञातत्वात् । नन्वापातप्रतिपत्तिः साऽवधारणात्मकं ज्ञानं त्वध्ययनमात्रान्न प्राप्यत इति चेन्न । तस्याविद्यानिवृत्तौ नित्यप्राप्तत्वेन विध्यनर्हत्वात् । न चात एव विचारः श्रवणशब्देन विवक्षित इति वाच्यं विधौ लक्षणापत्तेरिति चेत् । अत्राऽऽहुः ‘ न वा अरे पत्युः कामाय पतिः प्रियो भवति ’ इत्यादिना ‘ आत्मनस्तु कामाय सर्वं प्रियं भवति ’ [ बृ० २ । ४ । ५ ] इत्यन्तेनाऽऽत्मन एव निरतिशयसुखरूपत्वेन परमपुरुषार्थत्वमुक्त्वा ‘ आत्मनि विज्ञाते सर्वमिदं विज्ञातम् ’ । ‘ एतावदरे खल्वमृतत्वम् ’ [ बृ० ४ । ५ । १५ ] इत्युपसंहारादात्मज्ञानमेव तत्प्राप्त्युपाय इति निश्चीयते । तथा च तादृशमात्मज्ञानं द्रष्टव्य इत्यनूद्य तत्साधनाकाङ्क्षायां श्रोतव्य इत्यादिना साधनविधिरिति निश्चिते शाब्दज्ञानेऽसाधारणकारणतया विचार एव लक्षणया विधेयोऽवगम्यते । ‘ तं त्वौपनिषदं पुरुषं पृच्छामि ’ [ बृ० ३ । ९ । २६ ] ‘ नावेदविन्मनुते तं बृहन्तम् ’ इत्यादिश्रुत्योपनिषन्मात्रवेद्ये ब्रह्मणि मानान्तराभावात् । द्रष्टव्य इत्यत्र दर्शनसाधनाकाङ्क्षायां वेदान्तवाक्यमेव तत्साधनम् । तच्चाविचारितं न निश्चयायालमिति मनननिदिध्यासनसहकृतं विचारितवेदान्तवाक्यमात्मसाक्षात्कारहेतुरित्ययमर्थः संपद्यते । न च विधौ लक्षणा क्वाप्यदृष्टचरीति वाच्यम् । ‘ अर्धमन्तर्वेद्यर्धं बहिर्वेदि ’ इत्यत्र देशविशेषलक्षणायां ‘ जातपुत्रः कृष्णकेशोऽग्नीनादधीत’ इत्यत्र वयोविशेषलक्षणायाः ‘ यावतोऽश्वान्प्रतिगृह्णीयात् ’ इत्यत्र णिजर्थलक्षणायाः ‘ सोमेन यजेत ’ इत्यत्र मत्वर्थलक्षणायाश्च बहुलमुपलब्धेः । तस्माल्लक्षणया विचारविधिर्युक्तः । ननु विचारोऽपि विचार्यनिर्णयहेतुत्वेन लोकसिद्ध इति कथं विधेय इतिचेन्न । अपूर्वविध्यसंभवेऽपि नियमविधेरवकाशात् । तथाहि—त्रिविधः खलु विधेर्विधाः । अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति । तत्र कालत्रयेऽपि मानान्तराप्राप्तस्य प्रापिफलकोऽपूर्वविधिः । यथा ‘ व्रीहीन्प्रोक्षति ’

इति । अत्र विधिव्यतिरेकेण प्रोक्षणं केनापि प्रमाणेन न प्राप्तम् । पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको नियमविधिः । यथा 'व्रीहीनवहन्ति' इति । अत्र विध्यभावे पुरोडाशप्रकृतिद्रव्याणां तण्डुलनिष्पत्त्याक्षेपादेवावहननं प्राप्यत इति नापूर्वविधिः किंत्वाक्षेपान्नखविदलनमपि प्राप्नुयादिति तदानीमप्यवहननप्राप्त्यर्थः । द्वयोरेकत्र नित्यप्राप्तावितरनिवृत्तिफलकः परिसंख्याविधिः । यथा 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति । अत्र लिङ्गादेव मन्त्रो रशनाग्रहणे नित्यं प्राप्नोतीति नापूर्वनियमविधी किं तु लिङ्गाविशेषादश्वाभिधान्यामिव गर्दभाभिधान्यामपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः । एवं चात्रावहन्तिवच्छ्रोतव्य इति नियमविधिः । न च व्यावर्त्याभावः । भिन्नात्मविचारस्य व्यावर्त्यत्वात् । न च तस्य मोक्षसाधनज्ञाने प्राप्त्यभाव इति वाच्यम् । 'द्वा सुपर्णा' [ श्वे० ४ । ६ ] 'द्वे ब्रह्मणी वेदितव्ये' [ मैत्र्यु० ६ । २२ ] इत्यादिवाक्यादापातप्रतिपत्तिदशायां तस्यापि प्राप्तिसंभवात् । न च वस्तुतः साधनान्तरप्राप्तावेव नियमविधिः । अपूर्वीयव्रीहिषु नखविदलनस्याप्यप्राप्तेर्नियमो न स्यात् । कथंचित्तण्डुलीभावमात्रे तत्प्राप्त्या नियमेऽत्राप्यात्मज्ञानत्वेन भिन्नात्मविचारप्राप्त्याऽद्वितीयात्मविचारनियमविधिरस्तु । इहाऽऽत्मशब्दस्य 'इदं सर्वं यदयमात्मा' [ बृ० ४ । ५ । ७ ] । 'आत्मनि विज्ञाते सर्वमिदं विज्ञातम्' इत्यादिप्रकरणपर्यालोचनयाऽद्वितीयात्मपरत्वात् । समन्वयसूत्रे भगवत्पादैः श्रोतव्य इत्यत्राऽऽत्मज्ञानविधिर्निराकृतो न तु ज्ञानोद्देशेन विचारविधिरिति न तद्विरोधोऽपीति ज्ञेयम् । तस्माद्विचारविधौ न किंचिद्बाधकमिति । एवं स्थिते श्रवणविधेरपेक्षिताधिकारिविषयफलान्यागमिकान्यपि न्यायेन निर्णेतुमिदं सूत्रम्—

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्र सूत्रेऽनुवादपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येतिपदमध्याहर्तव्यम् । जिज्ञासापदेन विचारो लक्षणीयः । अथशब्देन च साधनचतुष्टयानन्तर्याभिधानम् । साधनचतुष्टयं च नित्यानित्यवस्तुविवेक इहामुत्रार्थभोगविरागः शमादिसंपत्तिर्मुमुक्षुत्वं चेति । यद्यपि मुमुक्षायां सत्या विचारप्रवृत्तौ न विलम्बस्तथाऽपि विवेकादीना मुमुक्षासाधनत्वेनोपयोगः । कर्तृत्वभोक्तृत्वादेरध्यस्तत्वमतःशब्देन सूच्यते । तेन ज्ञानेन बन्धनिवृत्तिलक्षणो मोक्षः सिध्यति । तथा च साधनचतुष्टयसंपन्नेन यतो बन्धस्याध्यस्तत्वमतो बन्धनिवृत्तये मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रार्थः संपद्यते । अध्यासस्तु स्मृतिरूपः परत्र पूर्वदृष्टावभास इति । अत्र परत्रावभास इत्येव लक्षणम् । शिष्टपदद्वयं तदुपपादनार्थम् । तथा हि—अवभासत इत्यवभासो रजताद्यर्थः । तस्यायोग्यमधिकरणं परत्रपदार्थः । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वम् । तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यधिकरणेऽवभास्यत्वमध्यस्तत्वमित्यर्थः । संयोगेऽतिव्याप्तिवारणायैकावच्छेदेनेति । संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्य-

न्ताभावयोर्मूलाग्रावच्छेदेन भेदान्नातिव्याप्तिः । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिवारणाय स्वसमृज्यमानेति । अध्यासोऽविद्येत्यनर्थान्तरम् । अध्यासस्य दुर्निरूपत्वमलकारायेति विद्यारण्यपादा आहुः । अध्यासस्य मिथ्यात्वे 'मायामात्रमिदं द्वैतम्' [ गौड० १।१७ ] 'अनृतेन हि प्रत्यूढाः ।' [ छा० ८ । ३ । २ ] 'नीहारेण प्रावृता.' इत्याद्याः श्रुतयः 'अज्ञानेनाऽऽवृतं ज्ञानम्' [भ० गी० ५।१५ ] इत्याद्याः स्मृतयश्च महतामनुभवश्च प्रमाणम् । किं चाध्यासस्य ज्ञाननिवर्त्यत्व श्रुतिसिद्धम् । श्रुतयस्तु—'तमेव विदित्वाऽति मृत्युमति' । मृत्युमविद्यामित्यर्थः । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ।' [ श्वेता० १ । १० ] 'तरत्यविद्यां वितताम्' । 'अविद्यायाः परं पारं तारयसीति' [ प्रश्नो० ६ । ८ ] इत्याद्याः ।

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते [ भ० गी० ७ । १४ ] ॥
'ज्ञानेन तु तदज्ञानं येषा नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्' [ भ० गी० ५ । १६ ॥ ]

इत्यादिस्मृतिषु प्रसिद्धम् । श्रुतार्थापत्तिश्च—जीवस्य ब्रह्मज्ञानाद्ब्रह्मभावः श्रूयमाणस्तत्प्रतिबन्धकाज्ञाननिवृत्तिमन्तरेण नोपपद्यत इति । सत्यस्य बन्धस्य प्रमाणसहस्रेणाप्यनिवर्त्यत्वान्मिथ्यात्वम् । भेदवादिदर्शन तु व्यावहारिकार्थप्रतिपादकमेव न परमार्थप्रतिपादकमिति दिक् ॥ १ ॥ ( १ )

यस्य ब्रह्मणो जिज्ञासा कर्तव्येत्युक्तं तस्य किं लक्षणमित्याकाङ्क्षाया तल्लक्षणार्थं सूत्रम्—

## जन्माद्यस्य यतः ॥ २ ॥ ( २ )

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' । [ तै० ३ । १ । १ ] 'सत्यं ज्ञानमनन्त ब्रह्म [ तै० २ । १ । १ ] इतिवाक्यद्वयं विषयः । तत्र श्रूयमाणं ब्रह्मलक्षण न घटते घटते वेति संशयः । न घटते । तथा हि—किं जन्मादिकं तल्लक्षण सत्यादिकं वा । नाऽऽद्यः । तस्य जगन्निष्ठत्वेन ब्रह्मसंबन्धाभावात् । न द्वितीयः । लोकप्रसिद्धसत्यज्ञानादिस्वीकारे भिन्नार्थत्वादखण्डब्रह्मासिद्धेः । अप्रसिद्धस्य सत्यादेर्लक्षणत्वानुपपत्तेश्च । तस्मात्तटस्थलक्षण स्वरूपलक्षणं वा न घटत इति पूर्वः पक्षः । अत्रोच्यते—जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्ग समासार्थः । पूर्वसूत्राद्ब्रह्मपदमनुवर्तते । तच्छब्दश्चाध्याहार्यः । तेनास्य प्रपञ्चस्य यतः सकाशाज्जन्मादि भवति तद्ब्रह्मेति सूत्रार्थः । यदुक्तं जन्मादिकं प्रपञ्चनिष्ठं व्यधिकरणत्वान्न ब्रह्मलक्षणम् । तदसारं जन्मादेरन्यनिष्ठत्वेऽपि तत्कारणत्वं ब्रह्मणि कल्पितं तटस्थलक्षणं भविष्यति । कल्पितप्रपञ्चप्रतियोगिककारणत्वस्य ब्रह्मणि

कल्पितत्त्वेन ब्रह्मस्वरूपत्वाभावात् । स्वरूपभिन्नत्वे सति व्यावर्तकत्वं तटस्थत्वम् । यो भुजङ्गः सा स्रगितिवद्यज्जगज्जन्मादिकारणं तद्ब्रह्मेति कल्पितेनापि लक्षणेनोपलक्षयितु शक्यत्वात् । यद्यप्यव्यभिचाराज्जन्मादिकारणत्व प्रत्येकमपि लक्षण संभवति तथाऽपि जन्मकारणत्वमात्र निमित्तकारणेऽप्यस्तीत्युपादानकारणप्राप्तये लयग्रहणम् । न हि निमित्त-कारणे कार्यलयः संभवति । न च तावतैवोपादानत्वलाभादुत्पत्तिस्थितिग्रहण व्यर्थमिति वाच्यम् । उत्पत्तिस्थित्योरन्य एवाधिष्ठाता स्यात् । कुम्भकार इव कुम्भोत्पत्तौ राजेव राज्यस्थेम्नीति मा शङ्कीरित्युत्पत्तिस्थितिग्रहणेन ब्रह्मैवाभिन्ननिमित्तोपादानमिति प्रतिपत्तये तदुभयग्रहणात् । अत्र जगज्जन्मादिकारण सगुण ब्रह्मैव । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचि-न्त्यरचनारूपस्य जन्मस्थितिभङ्ग यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेष इति भाष्यात् । स्वरूपलक्षणं तु ‘ सत्यं ज्ञानमनन्त ब्रह्म ’ [ तै० २।१।१ ] इतिवाक्यप्रतिपादित सत्यादिस्वरूपत्वम् । ननु सत्यत्वादेर्ब्रह्मणः सकाशाद्भेदे स्वरूपलक्ष-णत्वं न स्यादभेदे वाक्यार्थासिद्धिः । गुणप्रधानभावापन्नपदार्थससर्गो हि सर्वत्र वाक्यार्थः । नचाभेदे तत्संभव इति चेन्न । यत्र पदार्थः प्रमितस्तत्र संसर्गो वाक्यार्थः । यत्र पदार्थ-प्रमितिपरः पदसंदर्भस्तत्राखण्ड एव वाक्यार्थः । यथाऽस्मिञ्ज्योतिर्मण्डले कश्चन्द्र इति प्रश्ने प्रकृष्टप्रकाशश्चन्द्र इति वाक्यमखण्डचन्द्रस्वरूपप्रतिपत्तिपरम् । न च प्रकृष्टप्रकाश-वैशिष्ट्यं वाक्यप्रमेयम् । मानान्तरासिद्धत्वात् । नापि चन्द्रत्ववैशिष्ट्यम् । एकव्यक्तितया चन्द्रत्वजातेरभावात् । न च चन्द्रशब्दवाच्यत्ववैशिष्ट्यम् । तस्यापृष्टत्वात् । स्वरूपमात्रप्रश्ने तस्याभिधानानौचित्यात् । किं च लक्षणवाक्ये न पदार्थससर्गपरत्वनियमः । तथाहि कीदृशं ब्रह्मेति बुभुत्सायां सत्यादिभिश्चतुर्भिः पदैस्तत्स्वरूपमुच्यते । तानि च पदानि समानाधि-करणत्वाद्विशेषणविशेष्यरूपाणि । तत्र वेद्यतया विवक्षितत्वात्प्रधानं ब्रह्म विशेष्यम् । सत्यादिपदानि स्वार्थविपरीतेभ्यस्तद्ब्रह्म व्यावर्तयन्ति । नन्वेकमेव ब्रह्म तस्य व्यावर्त्या-भावात्सत्यादिविशेषणानि व्यर्थानीति चेन्न । तेषां लक्षणरूपविशेषणत्वेन व्यावर्त्यस-द्भावात् । सजातीयमात्राद्व्यावर्तक विशेषण विजातीयाद्व्यावर्तकं लक्षणमिति तयोर्विवेकः । तथा चासत्यजडपरिच्छिन्नेभ्यो व्यावृत्तये सत्यादिपदानि भविष्यन्ति । एवमानन्दपदमपि दुःखव्यावृत्तये । अवकाशरूपमाकाशमित्येतस्मिँल्लक्षणे सजातीयस्याऽऽकाशान्तरस्य व्याव-र्त्यस्याभावेऽपि विजातीयानि मूर्तद्रव्याणि यथा व्यावर्त्यन्त तद्वत् । यद्वस्तु कदाऽपि न व्यभिचरति तत्सत्यमित्युच्यते । यथा सर्पस्याधिष्ठानभूता रज्जुः । यस्य तु व्यभिचारोऽस्ति तदनृतम् । यथा रज्ज्वां प्रतीतः सर्पः । तथा सर्वजगदधिष्ठानभूतं ब्रह्म मुक्तावपि व्यभिचाराभावात्सत्यम् । ज्ञानबाध्यत्वेन मुक्तौ व्यभिचरितत्वाज्जगदनृतम् । ननु ‘ वाचाऽऽ-रम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यम् ’। [ छा० ६ । १ । ४ ] इति श्रुतेर्ब्रह्म जडं

भवितुमर्हति मृत्तिकाघदित्याशङ्क्य ज्ञानमित्युच्यते । व्यावहारिकसत्यत्वेन मृत्तिकाया जडत्वं ब्रह्म तु परमार्थिकसत्यत्वाच्चिद्रूपमित्यभिप्रायः । ब्रह्म परिच्छिन्नं भवितुमर्हति घटज्ञानवदित्याशङ्क्यानन्तमित्युच्यते । ज्ञायते स्फोर्यते घटादिकमनेनेति व्युत्पत्त्या घटस्फुरणयोः संबन्धजनको वृत्तिविशेषो लोके ज्ञानशब्दार्थः । तस्माद्युक्त तस्य ज्ञानस्य परिच्छिन्नत्वम् । इह तु ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या स्फुरणमेवोच्यते तस्य ब्रह्मरूपस्य स्फुरणस्यानन्तत्वं युक्तमेव । तदेवं सत्या[दि]शब्दैर्मिथ्यात्वजाड्यपरिच्छेदेभ्यो यद्व्यावर्तितं तद्ब्रह्मेति वाक्यार्थः संपद्यते । ननु विशिष्टवाचकैः सत्यादिपदैः कथमखण्डबोध इति चेत् । लक्षणयेति गृहाण । उक्त च कल्पतरौ—उपायस्तु वैशिष्ट्यमखण्डचन्द्रप्रतिपत्तौ । तच्चाविरोधाच्चन्द्रे न बाध्यते सत्यादिवाक्ये तु सत्यादिपदैर्वैशिष्ट्यमभेदश्रुतिसहस्राद्बाध्यत इति । किं च सत्यादिपदानामनृतादिव्यावर्त्यसद्भावादपर्यायत्वम् । तदुक्तम्—' अविशिष्टमपर्यायानेकशब्दप्रकाशितम् । एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ' इति । शिवविष्णुकारणवादस्त्वीश्वरकारणवादेन गतार्थत्वादाग्रहमूलक एव । विस्तरस्त्वाकरादवगन्तव्यः ॥ २ ॥ ( २ )

जगत्कारणत्वेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह—

**शास्त्रयोनित्वात् ॥ ३ ॥ ( ३ )**

जगत्कारणत्वेनोक्तमार्थिकं सर्वज्ञत्वं हेत्वन्तरेण समर्थयति । ' अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः ' [ बृ० २ । ४ । १० ] इति वाक्य विषयः । यदृग्वेदादिक तदेतस्य महतो भूतस्य नित्यसिद्धस्येश्वरस्य निःश्वास इवायत्नेन जातमित्यर्थ. । ब्रह्म वेद न करोति करोति वेति संदेहः । न करोतीति पूर्वपक्षः । वेदस्य नित्यत्वात् । ' वाचा विरूपनित्यया ' इत्यस्मिन्मन्त्रे विरूपेति देवतां संबोध्य नित्यया वाचा स्तुतिं प्रेरयेति प्रार्थ्यते । नित्या वाग्वेद एव । ' अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ' इति श्रुतिस्मृतिभ्याम् । अतो ब्रह्म न वेदस्य कर्तृ । तस्मान्न सर्वकारणत्व ब्रह्मण इति प्राप्ते ब्रूमः । ब्रह्म वेदस्य कर्तृ भवितुमर्हति । निःश्वसितन्यायेन ब्रह्मणः सकाशादप्रयत्नेन वेदोत्पत्तिश्रवणात् । ' तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इति श्रुत्यन्तराच्च । सर्वहुतः सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्यादीश्वरादृगादीनि जातानीत्यर्थः । तस्माद्ब्रह्म वेदस्य कर्तृ । न चैवं वेदस्य पौरुषेयत्वापत्तिः । पूर्वपूर्वानुपूर्वीसजातीयानुपूर्वीकत्वेनानादित्वादपौरुषेयत्वात् । ' धाता यथापूर्वमकल्पयत् ' [म०ना० ५'७] इति श्रुत्या पूर्वकल्पानुपूर्वीसजातीयानुपूर्वीकवेदराशेरुत्पत्त्यवगमात् । अत एव सजातीयानादितया प्रवाहरूपेण वेदानां नित्यता । वास्तवनित्यत्वं तु न कस्याप्यस्ति । अद्वैतश्रुतेः । तस्मात्सर्वजगद्व्यवस्थावभासकस्य वेदस्य कर्तृत्वाद्ब्रह्मणः सर्वज्ञत्वं सिद्धम् । अस्य सूत्रस्य द्वितीयं वर्णकम्—' तं त्वौपनिषदं पुरुषं पृच्छामि ' [ बृ० ३।९।२६ ] इति शाकल्यं

प्रति याज्ञवल्क्येनोक्ते वाक्ये परब्रह्मरूपस्य पुरुषस्योपनिषद्वेद्यत्वं प्रतीयते । तद्वाक्यं विषयः । तत्र ब्रह्मणः प्रत्यक्षादिप्रमाणगम्यत्वमस्ति न वेति संशयः । पूर्वपक्षस्तु—अङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानमपि ब्रह्मण्यङ्गीकर्तव्यमितिप्राप्ते ब्रूमः । ब्रह्म मानान्तरवेद्यं न भवति । कुतः । शास्त्रयोनित्वात् । शास्त्रं वेदो योनिः प्रमाणं यस्य तथात्वादित्यर्थः । 'तं त्वौपनिषद पुरुषं पृच्छामि' [ बृ० ३ । ९ । २६ ] इति श्रुत्या समर्थाधिकारविहित-तद्धितेनोपनिषत्स्वेवाधिगत इति प्रतीतेः । 'नावेदविन्मनुते तं बृहन्तम्' इति श्रुत्या स्पष्टं मानान्तरनिषेधाच्च ब्रह्मण उपनिषन्मात्रवेद्यत्वम् । भाष्यकारैर्जन्मादिसूत्रे श्रुत्यादयोऽनुभवाद-यश्च यथासंभवमिह प्रमाणमित्यन्यमेयत्वमङ्गीकृतमिति चेद्बाढम् । प्रथमतः श्रुत्यैव प्रमिते ब्रह्मणि पश्चादनुवादरूपेणानुमानानुभवयोरङ्गीकारात् । अत्रानुमानादि प्रमाणं श्रुत्यनुग्राहकतयै-वोपयुज्यते न स्वातन्त्र्येण । ननु 'यतो वाचो निवर्तन्ते' [ तै० २ । ४ । १ ] इति श्रुतेर्वेदवेद्यत्वमपि कथमिति चेन्न । वेदान्तजन्यवृत्तिविषयत्वेन शास्त्रयोनित्वं चैतन्याविषय-त्वेनाप्रमेयत्वमित्युभयश्रुत्युपपत्तेरिति दिक् ॥ ३ ॥ ( ३ )

## तत्तु समन्वयात् ॥ ४ ॥ ( ४ )

पूर्वसूत्रे द्वितीयवर्णके शास्त्रप्रमाणकत्वमुक्तं तदत्राऽऽक्षिप्य समाधीयते । वेदान्ताः किं कर्मशेषभूतकर्तृप्रतिपादका उत नित्यशुद्धबुद्धोदासीनब्रह्मप्रतिपादका इति संशये जीवप्रति-पादकाः सर्वे कर्माङ्गकर्तृप्रतिपादनपराः । ब्रह्मप्रतिपादकाश्च देवताप्रकाशनपराः सृष्टिप्रति-पादकाः साधनपरा इति । तथा सत्यनुष्ठानोपयोगितया वेदान्तानां सप्रयोजनत्वं भविष्यत्य-न्यथा निष्प्रयोजनत्वं स्यादिति पूर्वः पक्षः । सिद्धान्तस्तु तत्तु समन्वयात् । तुशब्दः पूर्वपक्षनि-रासार्थः । तच्छब्देन वेदान्तेषु ब्रह्मैव प्राधान्येन प्रतिपाद्यत इति प्रतिपाद्यते । कुतः । समन्वयात् । सम्यगन्वयः समन्वयः । अन्वयस्य सम्यक्त्वं तात्पर्यवत्त्वम् । वेदान्ता न कर्त्रादिप्रतिपादकाः । भिन्नप्रकरणस्थत्वात् । नोपासनाविधिशेषाः । 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्यादेरुपासनाविधिरहितस्यैव बहुलमुपलब्धेः । स्वरूपज्ञानादपि नायं सर्प इतिवदनर्थनिवृत्तिप्रयोजनसंभवेन कथंचिद्विशेषकल्पनायोगात् । न च कार्य एवार्थे लोके पदानां व्युत्पन्नत्वात्कार्यपरत्वं कल्पनीयम् । पुत्रस्ते जात इत्यादौ सिद्धेऽपि व्युत्पत्ति-दर्शनात् । 'सदेव सौम्येदमग्र आसीत्' [ छा० ६ । २ । १ ] 'एकमेवाद्वितीयं ब्रह्म' बृ० २ । ५ । १९ ] इत्यादिषु तात्पर्यतः सिद्धब्रह्मप्रतिपादनपरे समन्वयेऽव-गम्यमाने सिद्धज्ञानस्यापि 'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] इत्यादिश्रु-तिभिरनर्थनिवृत्तिलक्षणप्रयोजने चाऽवगम्यमाने कार्यपरत्वकल्पनानौचित्यात्, तात्पर्यग्राहक लिङ्गषट्कं पूर्वाचार्यैर्दर्शितम् 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति । 'सदेव सौम्येदमग्रआसीत्' [ छा० ६ । २ । १ ] इत्युपक्रमः । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' [ छा० ६ । ८ । ७ ]

इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनेकरूपमेक लिङ्गम् । ‘ तत्त्वमसि ’ इति नवकृत्वोऽभ्यासः । मानान्तरागम्यत्वमपूर्वत्वम् । एकविज्ञानेन सर्वज्ञान फलम् । उत्पत्तिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः । ‘ यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्यात् ’ [ छा० ६ । १ । ४ ] इत्यादिमृदादिदृष्टान्ता उपपत्तयः । एतैर्लिङ्गैर्ब्रह्मपरत्वनिश्चयान्नाकस्माद्विधिशेषकल्पन युक्तम् । ननु सिद्धब्रह्मप्रतिपादने प्रयोजनाभावात्प्रयोजनवत्कर्मशेषत्वं वक्तव्यम् । न चाविद्यानिवृत्तिस्तत्प्रयोजनम् । सा किं ब्रह्मभिन्नाऽभिन्ना वा । आद्ये सत्या मिथ्या वा । नाऽऽद्यः । अद्वैतभङ्गात् । न द्वितीयः । मोक्षस्य मिथ्यात्वेनानित्यत्वप्रसक्त्या पुनः ससारापत्तेः । न चरम. । ब्रह्मणो नित्यसिद्धतया निवृत्त्यनुपपत्तेर्मुक्तिससारयोरविशेषप्रसङ्गाच्च । ब्रह्मस्वरूपस्येदानीमपि विद्यमानत्वादिति चेन्न । अविद्यानिवृत्तिर्ब्रह्मभिन्नैव । न चाद्वैतहानिः । भावाद्वैतस्वीकारात् । न च तत्र प्रमाणाभावः । मोक्षप्रतिपादकशास्त्रस्यैव प्रमाणत्वात् । अन्ये तु अविद्यावत्तन्निवृत्तिरप्यनिर्वचनीयैव । न चानिर्वचनीयस्याविद्योपादानकत्वादविद्यानुवृत्तौ ससारानुवृत्तिप्रसङ्ग इति वाच्यम् । अविद्यानुवृत्तौ मानाभावात् । ‘ सोऽविद्याग्रन्थिं विकिरतीह सौम्य ’ [ मुण्ड० २ । १ । १० ] इत्यादिश्रुतिविरोधाच्च । वर्णकान्तरम् । एकदेशी मन्यते । ब्रह्मपरत्वेऽपि वेदान्ता न ब्रह्मण्येव पर्यवसिताः किंतर्हि पारोक्ष्येण ब्रह्मतत्त्व प्रतिपाद्य पश्चादपरोक्षप्रतिपत्ति विदधति । तथा च सति पुरुषप्रवृत्तिपरत्वाच्छास्त्रमुपपद्यते । किं च श्रोतव्य इति श्रवण शाब्दज्ञानात्मक विधायाथ मन्तव्यो निदिध्यासितव्य इत्यनुभवज्ञानात्मक मननादिकं स्पष्टमेव विधीयते । तस्मात्प्रतिपत्तेर्विधातारो वेदान्ता इति प्राप्ते ब्रूमः । तुशब्दः पूर्वपक्षनिरासार्थः । तद्ब्रह्मैव सर्ववेदान्तैः प्राधान्येन प्रतिपाद्यत । न तु विधिपरैरिति प्रतिज्ञा । कुतः । समन्वयात् । सिद्धब्रह्मण्येव वेदान्तानां विधिमन्तरेणापि सम्यगन्वयादित्यर्थः । अयं भावः—विधि विनाऽपि सिद्धब्रह्मज्ञानेनानर्थनिवृत्तेः । पुरुषार्थस्य प्रतिपादनाच्छास्त्रत्व सभवतीति न विधिपरत्व कल्पनीयम् । न च श्रोतव्य इति विधिश्रवणात्तत्परत्व कल्पनीयमिति वाच्यम् । आत्मज्ञानविधेर्निराकृतत्वात् । शास्त्र त्वनुष्ठेयशासन एव न नियतम् । सिद्धवस्तुशसनेनापि तदुपपत्तेः । ननु ‘ एतत्प्रत्यवेक्षितमाज्य भवति ’ इतिवदात्मज्ञानेऽपि विधिरस्त्विति चेन्न नित्यशुद्धबुद्धोदासीन आत्मन्युत्पत्त्याप्तिविकृतिसस्कृतिरूपाणा चतुर्णां क्रियाफलानामभावात् । ननु

> ‘ श्रोतव्य. श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
> ज्ञात्वा तु सतत ध्येय एते दर्शनहेतवः ’ ॥

इतिवचनाद्दर्शनसाधनत्वेनैव श्रवणादौ विधिरस्त्विति चेन्न । परोक्षं वा शाब्दज्ञानं दर्शनसाधनत्वेन विधीयतेऽपरोक्ष वा । नाऽऽद्यः । दशमस्त्वमसीत्यादावपरोक्षे वस्तुनि शब्दस्याप्यपरोक्षज्ञानजनकत्वेनापरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वायोगात् । न चेन्द्रियजन्यत्वेनापरोक्षत्व व्याप्तम् । तच्च न शब्दजन्यज्ञान इति कथमपरोक्ष्यमिति वाच्यम् । इन्द्रियजन्यत्वस्याऽऽपरो-

क्ष्याप्रयोजकत्वात् । परमत ईश्वरज्ञानस्याजन्यस्याप्यपरोक्षत्वात् । सिद्धान्ते ब्रह्मणस्तथात्वाच्च । एवं च नित्यापरोक्षे ब्रह्मणि शब्दादप्यपरोक्षमेव ज्ञान जन्यते न तु परोक्षम् । न द्वितीयः । तस्यैव तत्प्रति विधानायोगात् । तस्मान्न विधिपरा वेदान्ताः किं तु सिद्धब्रह्मप्रतिपादनपरा इति सिद्धम् । यत्तु कश्चिदाह—अस्तु शास्त्रैकगम्यता विष्णोस्तथाऽपि शास्त्रत एव शिवविरिञ्च्योरपि जगत्कर्तृत्वप्रतीतेरतिव्याप्तिरिति पूर्वपक्ष प्रापय्य सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयाद्विष्ण्वाख्य ब्रह्मैव जगत्कारणतया शास्त्रगम्यमिति सिद्धान्त इति । अत्र सिद्धान्तो दुरुपपादः । तथा हि श्वेताश्वतरोपनिषदि शिव एव जगत्कर्ता प्रतीयते । ' यदाऽतमस्तन्न दिवा न रात्रिर्न सन्नचासञ्छिव एव केवलः । तदक्षर तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ' [ श्वे० ४ । १८ ] इति । ' माया तु प्रकृतिं विद्यान्मायिन तु महेश्वरम् ' । [ श्वे० ४ । १० ] कारण तु ध्येयः सर्वैश्वर्यसपन्नः सर्वेश्वरः शभुः । ' सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माण लोकसभवम् । वामपार्श्वात्तथा विष्णु लोकरक्षार्थमीश्वरम् । युगान्ते चैव सप्राप्ते रुद्र शंभुरथासृजत् ' इत्यादिभिरनेकश्रुतिस्मृतिप्रमाणैः शिव एव जगत्कारणत्वमवसीयते । अस्मत्सिद्धान्ते तु सगुण ब्रह्मैव जगत्कारणं तस्यैव ब्रह्मादयो लीलाविग्रहास्तेषां पूज्यत्वाविशेषेऽपि न हि निन्दान्यायेन कस्यचिन्निकर्षोक्तिरिति दिक् ॥ ४ ॥ ( ४ )

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

ब्रह्मलक्षणस्य प्रधानादावतिव्याप्तिनिरासायेदमधिकरणम् । छान्दोग्ये षष्ठाध्याये ' सदेव सौम्येदमग्र आसीत् ' [ बृ० ६ । २ । १ ] ' एकमेवाद्वितीयं ब्रह्म ' [ बृ० २ ५ । १९ ] इति प्रस्तुत्य ' तदैक्षत बहु स्या प्रजायेयेति । तत्तेजोऽसृजत ' [ छा० ६ २ । ३ ] इति श्रूयते । तदेतद्वाक्यजातमस्य सूत्रस्य विषयः । अत्र सशयः । तत्र साङ्ख्यो मन्यते । सच्छब्दवाच्यं जगत्कारण प्रधान न तु ब्रह्म । प्रधानस्य सत्त्वगुणयुक्ततया परिणामितया च ज्ञानशक्तिक्रियाशक्तिसंभवात् । निर्गुणस्य कूटस्थस्य ब्रह्मणस्तदसंभवादिति । अत्रोच्यते—सांख्यादिपरिकल्पितं प्रधानं जगत्कारण न भवति । कुतः । अशब्दमिति । हेतुगर्भं विशेषणमेतत् । अशब्दत्वात् । अवेदमूलत्वादित्यर्थः । अवेदमूलकत्वे हेतुरीक्षतेरिति । ' सदेव सौम्य ' [ बृ० ६ । २ । १ ] इत्याद्युक्तकारणवाक्येषु तथा ' आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत ' [ ऐत० १ । १ ] इत्यादिकारणवाक्येषु च सदादिशब्दप्रतिपाद्यस्य ब्रह्मण एवेक्षापूर्वक तेजःप्रभृतिस्रष्टृत्वप्रतिपादनात् । अचेतनस्य प्रधानस्येक्षितृत्वायोगात् । ज्ञानक्रियाशक्ती तु ब्रह्मणि मायया सभविष्यतः । ' पराऽस्य शक्ति-

---

१ क. स ऐक्ष° ।

र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' [ श्वे० ६ । ८ ] इति श्रुतेः । स्वाभाविकी यावद्व्यवहारमनपायिनीत्यर्थः । ननु ' अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ' । [ श्वे० ४ । ५ ] इत्यनया श्रुत्याऽजाशब्दवाच्यस्य प्रधानस्य जगत्कारणत्वं श्रूयत इति चेत् । सदनुविद्धस्यैव तन्न स्वतन्त्रस्येति गृहाण । परिणाम्युपादानत्वं प्रधानस्य विवर्तोपादानत्व ब्रह्मण इति सिद्धान्तः । सांख्यैस्तु प्रधानमेव जगत्कारणमित्युक्तं तदनेनाधिकरणेन खण्डितमिति दिक् ॥ ५ ॥

ननु ' तत्तेज ऐक्षत ' [ छा० ६ । २ । ३ ] ' ता आप ऐक्षन्त ' [ छा० ६ । २ । ४ । ] इत्यत्रापतेजसोरिव प्रधानेऽपीक्षितृत्वं गौणमस्तु तत्राऽऽह—

**गौणश्चेन्नाऽऽत्मशब्दात् ।**

ईक्षतिशब्दः प्रधाने गौण इति चेन्न । किं कारणम् । आत्मशब्दात् । आत्मशब्दश्रवणादित्यर्थः । ' सदेव सौम्येदमग्र आसीत् ' [ बृ० ६ । २ । १ ] इत्युपक्रम्य ' तदैक्षत ' 'तत्तेजोऽसृजत' [छा० ६।२।३] इति तेजोबन्नानां सृष्टिमुक्त्वैतदेव प्रकृतमीक्षितृ । तत्कर्तृकानि च तेजोबन्नानि परामृश्याऽऽह—' सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ' [ छा० ६।३।२ ] । तत्र यदि प्रधानमेवेक्षित्रिति गुणवृत्त्या कल्प्येत । तदेव प्रकृतत्वात् । ' सेयं देवतेति ' परामृश्येत । तदा देवतात्मान जीवमात्मशब्देनाभिदध्यात् । जीवो हि नाम चेतनः शरीराध्यक्षः । स कथमचेतनस्य प्रधानस्याऽऽत्मा भवितुमर्हति । आत्मा हि नाम स्वरूपम् । ब्रह्मणि तु जीवविषय आत्मशब्द उपपद्यते ' अयमात्मा ब्रह्म ' [ बृ० २।५।१९ ] इति श्रुतेः ।

नाऽऽत्मता ब्रह्मणोऽन्यत्र ब्रह्मता नाऽऽत्मनोऽन्यतः ।
सामानाधिकरण्य च नीलोत्पलविलक्षणम् ' ॥

इति वचनाच्च । तस्मान्न गौणमीक्षितृत्वं प्रधानस्य सभवतीति सिद्धम् ॥ ६ ॥

ननु यथैक एव ज्योतिःशब्दः क्रतुज्वलनयोर्वर्तते तथैक एवाऽऽत्मशब्दोऽपि नानार्थकतया ममाऽऽत्मा भद्रसेन इतिवदुपचारेण वा प्रधाने वर्तताम् । आत्मशब्दादीक्षतेरगौणत्वं तत्राऽऽह—

**तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥**

न प्रधानमात्मशब्दवाच्यम् । कुतः । तन्निष्ठस्य श्वेतकेतोश्चेतनस्य मोक्षयितव्यस्य ' स आत्मा ' [ छा० ६। १६ । ३ ] इति प्रकृतं ' स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं

---

१ क. बह्वीं प्रजां जनयन्ती स° ।

स आत्मा तत्त्वमसि श्वेतकेतो ' [ छा० ६।८।७ ] इति सदणिमानमादाय मोक्षोपदेशात् । न हि चेतनस्याचेतनतादात्म्यं वास्तव संभवतीति तादात्म्यशास्त्रमप्रमाणं स्यात् । तस्माच्चेतनविषय एवाऽऽत्मशब्दः ॥ ७ ॥

ननु गुणवृत्त्याऽऽत्मशब्दः प्रधानस्य वाचकस्तथा च स्थूलारुन्धतीन्यायेन प्रधानतादात्म्योपदेशद्वारेण मुख्यात्मतादात्म्योपदेशोऽयमस्तु तत्राऽऽह—

**हेयत्वावचनाच्च ॥ ८ ॥**

यदि प्रधानतादात्म्योपदेशोऽयं तदा मुख्यतादात्म्योपदेशानन्तरं तस्य हेयत्वं ब्रूयात् । यथाऽरुन्धतीं दिदर्शयिषुस्तत्समीपवर्तिनीं स्थूलतारा प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति तद्वन्नायमात्मेति प्रधानं प्रत्याख्याय पश्चादात्मतादात्म्यमुपदिश्यात् । नैवमवोचत् । चशब्दः प्रतिज्ञाविरोधप्रदर्शनार्थः । सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत । कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम् । ' उत तमादेशमप्राक्ष्यो येनाश्रुत श्रुत भवति ' [ छा० ६ । १ । ३ ] इत्यादि । ' कथं नु भगवः स आदेशो भवति ' इति । ' यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मय विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' [ छा० ६।१।२ ] 'एवं सौम्य स आदेशो भवति ' [ छा० ६।१।६ ] इति वाक्योपक्रमे कारणविज्ञानेन सर्वविज्ञानात् । न च सच्छब्दवाच्ये प्रधाने ज्ञाते भोग्यवर्गज्ञानेऽपि भोक्तृवर्गज्ञानं न संभवति । अप्रधानविकारत्वाद्भोक्तृवर्गस्य । न च सच्छब्दवाच्ये ब्रह्मणि ज्ञाते तदविकारस्य भोग्यवर्गस्य ज्ञानं कथं स्यादिति वाच्यम् । तस्य तद्विवर्तत्वात् । तस्मान्न प्रधानं सच्छब्दवाच्यम् ॥ ८ ॥

इतश्च न सच्छब्दवाच्यं प्रधानम्——

**स्वाप्ययात् ॥ ९ ॥**

स्वस्मिन्नप्ययः स्वाप्ययः । अप्ययो लय इत्यर्थः । सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते— ' यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ' [ छा० ६।८।१ ] इति । स्वशब्देन प्रकृतसच्छब्दवाच्य आत्मा निर्दिश्यते । तमपीतो भवत्यपिगतो भवति । अपिपूर्वस्यैतेर्लयार्थत्व प्रसिद्धम् । प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात् । इन्द्रियजन्यज्ञानावस्था जाग्रत् । तद्विशिष्टो जीवो जागर्तीत्युच्यते । यदा घटादिविषयावच्छिन्नचैतन्यमन्तःकरणवृत्त्यवच्छिन्नचैतन्यमन्तःकरणावच्छिन्नचैतन्यं चैकी भवति तदाऽयं घट इति ज्ञानमुत्पद्यते तासां वृत्तीनां सादित्वात्तदवच्छिन्नं ज्ञानमपि सादीत्युच्यते । पर्वतो वह्निमानिति ज्ञानं तु पर्वतांशे ह्यपरोक्षम् । प्रमातृप्रमाणविषयचैतन्यानामभेदात् । वह्न्यंशे तु परोक्षम् । तत्रान्तःकरणवृत्तिसंबन्धाभावात् । अत एवानुभवो वह्निमनुमिनोमि पर्वतं

पश्यामीति । इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति । अविद्यावृत्तिमत्या सुषुप्तावतिव्याप्तिवारणायान्तःकरणेति । अविद्यावृत्त्यवस्था सुषुप्तिः । तस्यामवस्थायामुपाधिकृतविशेषाभावाज्जीवः स्वात्मनि प्रलीनो भवति। श्रुत्यन्तरं च—' प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरम् ' [ बृ० ४। ३।२१ ] इति । यदि प्रधानमेव स्वशब्देनोच्येत । चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत। अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणम् ॥ ९ ॥

किं च—

## गतिसामान्यात् ॥ १० ॥

यदि तार्किकसमय इव वेदान्तेषु भिन्ना कारणावगतिरभविष्यत्क्वचिद्ब्रह्म जगत्कारणं क्वचित्प्रधानं क्वचिदन्यदेवेति । तर्हि कदाचित्प्रधानकारणवादानुरोधेनापीक्षत्यादिश्रवणमकल्पयिष्यत् । न त्वेतदस्ति । समानैव हि सर्वेषु वेदान्तेषु चेतनकारणतावगतिः । न क्वचिदपि विरुद्धोपलभ्यते ' तस्माद्वा एतस्मादात्मन आकाशः संभृतः ' [ तै० २ । १ ] इति । ' आत्मत एवेदं सर्वम् ' [ छा० ७ । २६ । १ ] इति । ' आत्मन एष प्राणो जायते ' [ प्रश्नो० ३ । ३ ] इति । आत्मन एव जगत्कारणत्वं दर्शयन्ति सर्वे वेदान्ताः । आत्मशब्दश्चेतनवचनः । अतो गतिसामान्यात्सर्वज्ञं ब्रह्म जगत्कारणम् ॥ १० ॥

इतश्च ब्रह्म जगत्कारणम्—

## श्रुतत्वाच्च ॥ ११ ॥ ( ५ )

स्वशब्देनैव च सर्वज्ञ ईश्वरो जगत्कारणमिति श्रूयते । श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य ' स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ' [ श्वे० ६ । ९ ] इति । तस्मात्सर्वज्ञं ब्रह्म जगतः कारणं नाचेतनं प्रधानमन्यद्वेति सिद्धम् । यत्तु—' ईक्षतेर्नाशब्दम् । ' [ ब्र० सू० १ । १ । ५ ] ब्रह्मणः सर्वशास्त्रस्थशब्दप्रवृत्तिनिमित्तसकलगुणपूर्तिसिद्ध्यै वाच्यवृत्त्या कृत्स्नशास्त्रविषयता समन्वयाधिकरणे दर्शिता । तद्ब्रह्मणः सर्वशब्दवाच्यत्वमिहाऽऽक्षिप्य समर्थ्यते । ' यतो वाचो निवर्तन्ते ' [ तै० २ । ४ । १ ] इत्यादिश्रुतिभिर्ब्रह्मणो वाच्यत्वनिषेधान्न तत्र समन्वय इति प्राप्ते सिद्धान्तः— ब्रह्म, अशब्दं न । ईक्षते. । ' परात्परं पुरिशयं पुरुषमीक्षते ' [ प्रश्नो० ५ । ५ ] इति प्रश्नोपनिषदि ब्रह्मण ईक्ष्यत्वं श्रुतम् । ईक्षणं चौपनिषदस्य वचनमूलकमेव तच्च वाच्यत्वं विना न संभवति । न च लक्षणया निर्वाहः । वाच्यसंबन्धप्रतीतिमूलभूतवृत्त्यन्तरायोगात् । तस्मात्परिशेषाच्छक्तिरेव । एवमधिकरणसूत्रानुसारेण गौणसूत्राण्यपि केनचिद्व्याख्यातानि तन्न । तेनैवोक्ताधिकरणान्तरेण विरोधात् । तथा हि—' तथाऽन्यप्रतिषेधात् ' [ ब्र० सू० ३ । २ । ३६ ] इत्यत्र ध्येयं ब्रह्मैव नान्यदिति तेन निर्णीतम् ।

तेनोपासनाविधिषु प्रविष्टानां ब्रह्मादिशब्दानां तद्वाचकत्वं नेत्यर्थसिद्धम् । अत एव हि केनोपनिषदि ' यन्मनसा न मनुते ' [ के०५ ] इति मन्त्रस्य संनिधावाम्नायमानं ' यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्व विद्धि नेदं यदिदमुपासते ' [ के० ४ ] इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति। उपास्यसमर्पकपदवाच्यत्व उपास्यत्वापत्तिः । न चोपास्यसमर्पकपदावाच्यत्वेऽपि सृष्ट्यादिवाक्यस्थपदवाच्यता सभवत्येवेति वाच्यम् । तन्मते सृष्ट्यादिवाक्यानामप्युपासनापरत्वात् ' आध्यानाय प्रयोजनाभावात् ' [ ब्र० सू० ३ । ३ । १४ ] इत्याधिकरणे तेन तथैव सिद्धान्तितत्त्वात् । तथा च तन्मतं निष्क्रम्यमाणमित्थं पर्यवस्यति । वाङ्मनसातीतमुपासनानन्तरमुच्यमान साक्षात्कारस्यैव विषयभूत परं ब्रह्म । 'तदेव त्व विद्धि' इत्यादिभिर्वचनैर्लक्षणया प्रतिपाद्यम्। तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्तोपास्यश्च । स एव सृष्ट्यादिश्रुतिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपादित इति । ' यतो वाचो निवर्तन्ते ' [ तै० २ । ४ । १ ] इत्यादिबहुश्रुतिविरोधान्न वाच्यत्व परब्रह्मण इति दिक् ॥ ११ ॥ ( ९ )

' जन्माद्यस्य यतः ' इत्यारभ्य ' श्रुतत्वाच्च ' इत्येवमन्तैः सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि तेषां सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वं प्रतिपादितम् । तदेकमपि ब्रह्मापेक्षितोपाधिसबन्ध निरस्तोपाधिसंबन्ध चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेपूपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते—

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

तैत्तिरीयके ' अन्नमय ' ' प्राणमय ' मनोमयं ' ' विज्ञानमय ' [ तै० २ । १ । ] चानुक्रम्याऽऽम्नायते—' तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः ' [ तै० २ । ५ ] इति । तत्र देहप्राणमनोबुद्ध्यानन्दरूपा अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयसञ्ज्ञकाः पञ्च पदार्थाः क्रमेणैकैकस्मादान्तराः पठिताः । तत्र सर्वान्तर आनन्दमयः संसारी परमात्मा वेति संशयः । संसारीति प्राप्तम् । आनन्दस्य विकार आनन्दमय इति व्युत्पत्तेः ससारिणि सभवात् । अविकृते तु परमात्मन्यसौ न सभवति । किं च ' तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ' [ तै० २ । ५ । ] इत्यानन्दमयस्य पञ्चावयवा उच्यन्ते । अभीष्टविषयदर्शनजन्यं सुखं प्रियम् । तल्लाभजन्यं सुख मोद. । तद्भोगजन्य सुख प्रमोदः । सुषुप्तावज्ञानोपहित सुखसामान्यमानन्दः । निरुपाधिक सुख ब्रह्म । प्रियादीना पञ्चावयवानां शिरआदिरूपत्वं प्रतिपत्तिसौकर्याय कल्प्यते । प्रियाद्यवयवयोगाच्छारीरत्वश्रवणाच्च ससार्येवाऽऽनन्दमय इत्येव प्राप्ते ब्रूमः—आनन्दमयः परमात्मा । कुतः । अभ्यासात् । आनन्दमयं प्रस्तुत्य 'रसो वै सः' । [ तै०२ ७ ] इति तस्यैव रसत्वमुच्यते । 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात् । कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्' [ तै० २ । ७ ]

---

१ क, °भ्युदिता त° ।

'सैषाऽऽनन्दस्य मीमाꣳसा भवति' [ तै० २ । ८ ] 'एष ह्येवाऽऽनन्दयाति' [ तै० २ । ७ ] इत्यादिनाऽऽनन्दोऽभ्यस्यते । अभ्यासश्च तात्पर्यलिङ्गम् । तात्पर्यं च वेदान्तानां ब्रह्मण्येवेत्यवोचाम । किं च 'सत्यं ज्ञानमनन्तं ब्रह्म [ तै० २ । १ ] इति ब्रह्मोपक्रमात्—'इदꣳ सर्वमसृजत' [ बृ० १ । २ । ५ ] इत्यादिभ्यश्चाऽऽनन्दमयः परमात्मा । अन्नमयादिकोशाना ग्रहणं शाखाचन्द्रन्यायेन ब्रह्मप्रतिपत्त्यर्थम् । 'इदꣳ सर्वमसृजत' इत्यस्यायमर्थः—साङ्ख्यास्तु क्षीरदधिन्यायेन सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहङ्कारादिजगदाकारेण परिणमत इति वर्णयन्ति । नैयायिकादयस्तु मृद्घटादिन्यायेन परमाणुभिः पृथिव्यादिक जगदारभ्यते तत्रेश्वरो निमित्तमित्याहुः । वेदान्तास्तु रज्जुसर्पन्यायेन सर्वजगत्कल्पनाधिष्ठानभूतं यदखण्डैकरस ब्रह्म तदेव मायावशादाकाशादिजगदाकारेण विवर्तत इति वर्णयन्ति । माया तु ब्रह्मशक्तिः । तथा श्वेताश्वतरा आमनन्ति 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [ श्वे० ४ । १० ] इति । ब्रह्मणः शक्तिमत्त्वं च तत्रैवाऽऽम्नातम् । 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' [ श्वे० १ । ३ ] इति । तस्याः शक्तेर्मिथ्यात्वं च 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' । [ गौ० का० १।१।१ । ७ ] इत्यादिश्रुत्यन्तरेणावसीयते । न खलु शक्तिः क्वचिदपि स्वाश्रयमुल्लङ्घ्य स्वतन्त्राऽवतिष्ठते । अतः शक्तिरूपायाः प्रकृतेर्यदेव प्रकृतित्वं तदेव ब्रह्मणः शक्तिमतः प्रकृतित्वम् । योऽयं प्रकृतिरूपः परमात्मा मायी महेश्वरोऽन्यत्र श्रुतः सोऽयमत्राऽऽत्मन इति पञ्चम्यन्तेन निर्दिश्यते । 'तस्माद्वा एतस्मात्' इतिपदद्वयसामानाधिकरण्येन प्रत्यग्ब्रह्मणोस्तादात्म्यमुच्यते । तदुक्तं 'नाऽऽत्मता ब्रह्मणोऽन्यत्र ब्रह्मता नाऽऽत्मनोऽन्यतः । सामानाधिकरण्य हि नीलोत्पलविलक्षणम् । इति । तस्मान्मायोपाधिकादात्मनो महदादिकं जगत्कामसंकल्पाभ्या जायते । तत्र जगति जडत्वादिर्मायांशो ह्यस्ति भाति प्रियं चेति ब्रह्मांशश्चोभावनुगतौ । मायाविशिष्टस्य ब्रह्मणो महदादिकं स्रक्ष्यामीत्येवंविधेच्छा कामः । आकाशो निष्पद्यतामित्येवंविधा भावना संकल्पः । एतौ मायावृत्तिरूपौ कामसंकल्पौ । तद्वृत्त्यवच्छिन्नः परमात्मा सत्यकामः सत्यसंकल्प इत्युच्यते । एवं सत्युत्तरोत्तरपदार्थान्यथा यथाऽसौ सकल्पयति तथा तथा ते सर्वे महदादय उत्पद्यन्ते । उत्पन्नेषु तेषु सर्वेषु सोपाधिकस्य निरुपाधिकस्य च ब्रह्मणोऽनुगतिरस्ति ।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।

कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' [ श्वे० ६ । ११ ] इति श्रुतेः ।

एतादृशः परमात्माऽऽनन्दमयः । तथा च भाष्यम् । 'यथाऽरुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु याऽन्त्या+ प्रदर्श्यते सा मुख्यैवारुन्धती भवत्ये-

---

+ ब्र. सू. भाष्यस्थोऽयं पाठो लिखितपुस्तक एतस्मिंस्तु याऽन्ते प्र° ।

वमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वमिति । तस्य प्रियाद्यवयवा अपि विषयदर्शनाद्युपाधिकृता जीवसंबन्धिनोऽपि तदधीनत्वात्तदवयवत्वेनोपचर्यन्ते । तमेवाऽऽनन्दमयं परमात्मानमुपासीनो जीवोऽन्नमयादिकोशाध्यासरहितो ब्रह्मपुच्छं निरुपाधिकं ब्रह्मैवाऽऽप्नोति । तस्मादानन्दमयः परमात्मेति सिद्धम् । ननु परमात्मन आनन्दमयत्वे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासम्' [ म० ना० २० । १५ ] इति शुद्धिप्रार्थना व्यर्था स्यात् । अतोऽयमानन्दमयो जीव एव न परमात्मेति चेन्न । तस्य नित्यशुद्धस्य पूर्णस्य परमात्मनो दर्शने व्यवधायकाज्ञानरूपमलनिवृत्तिरेव शुद्धिः । यथा चन्द्रस्य तिरोधायकघनापगम एव प्रसादस्तद्वत् । सा शुद्धिर्जीवेन तत्तत्कोशाध्यासनिवर्तकब्रह्मात्मैक्यज्ञानेन प्रार्थ्यत इति न काऽप्यनुपपत्तिरिति दिक् ॥ १२ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

नाऽऽनन्दमयः परमात्मा भवितुमर्हति । आनन्दमय इति मयटो विकारार्थत्वात् । अन्नमयादिशब्दवद्विकारविषय एवाऽऽनन्दमयशब्द इति चेन्न । प्राचुर्यार्थेऽपि मयटः स्मरणात् । आनन्दप्रचुरत्वं च 'स एको मानुष आनन्दः' [ तै० २ । ८ । १ ] इति प्रकृत्योत्तरोत्तरं शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वश्रवणात् । यस्मात्प्राचुर्यार्थे मयट् तस्मादानन्दमयः परमात्मा ॥ १३ ॥

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

पूर्वं 'तत्प्रकृतवचने मयट्' [ पा० सू० ५ । ४ । २१ ] इतिव्याकरणस्मृत्याऽऽनन्दमयत्वं साधितम् । इदानीमग्रिमवाक्यपर्यालोचनयाऽपि प्राचुर्यार्थे मयडित्युच्यते । तस्य जीवानन्दस्याऽऽनन्दमयो हेतुरिति श्रुतिर्व्यपदिशति । व्यपदेशः कीर्तनं तस्मादित्यर्थः । 'एष ह्येवाऽऽनन्दयाति' [ तै० २ । ७ ] इति । आनन्दयतीत्यर्थः । यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धम् । यथा लोके योऽन्यान्धनिकत्वमापादयति स प्रचुरधन इति गम्यते तद्वदिति । तस्मात्प्राचुर्यार्थेऽपि मयटः संभवादानन्दमयः परमात्मा ॥ १४ ॥

## मान्त्रवर्णिकमेव च गीयते ।

इतश्चाऽऽनन्दमयः परमात्मा । यस्मान्मान्त्रवर्णिकमेव 'ब्रह्मविदाप्नोति परम्' [ तै० २ । १ ] इत्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ ] इत्यस्मिन्मन्त्रे प्रतिपाद्यते । तदेव ब्रह्म मायया जगत्सृष्ट्वा तदनुप्रविश्य 'सच्च त्यच्चाभवत्' [ तै० २ । ६ ] इत्युक्तम् । तदेव गुहायामवस्थितम् । यस्य विज्ञानाय 'अन्योऽन्तर आत्मा [ तै० २ । ५ ] इति प्रक्रान्तम् । तन्मान्त्रवर्णिकमेवेह ब्रह्म गीयते—'अन्योऽन्तर आत्माऽऽनन्दमयः' इति । मन्त्रब्राह्मणयोरेकार्थत्वात् । वेदो हि मन्त्रब्राह्मणभेदेन द्विविधः । तत्रेयं ब्रह्मवल्ली ब्राह्मणरूपा । तत्रापि तदेषाऽभ्युक्तेत्युक्त्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यारभ्य

' ब्रह्मणा विपश्चिता ' इत्यन्तोऽयं मन्त्रः । अन्यत्सर्वं ब्राह्मणमिति । अन्यथा प्रकृतहाना-प्रकृताभ्यागमौ प्रसज्येयाताम् । तस्मादानन्दमयः परमात्मा ॥ १५ ॥

**नेतरोऽनुपपत्तेः ॥ १६ ॥**

किंचेतरः परमात्मनोऽन्यो जीवो नाऽऽनन्दमयः । कुतः । ' सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत ' [ तै० २ । ६ ] इत्यग्रिमवाक्यसंदर्भप्रतिपाद्यस्यार्थस्यान्यस्मिन्ननुपपत्तेः । तत्र प्राक्शरीराद्युत्पत्तेः ' सोऽका-मयत ' इत्यभिध्यानं सर्वविकारसृष्टिश्च परमात्मनोऽन्यत्र नोपपद्यते ॥ १६ ॥

**भेदव्यपदेशाच्च ॥ १७ ॥**

इतश्च नाऽऽनन्दमयो जीवः । कुतः । जीवानन्दमययोर्भेदेन व्यपदेशात् । आनन्दमया-धिकारे ' रसो वै सः । रस९ ह्येवायं लब्ध्वाऽऽनन्दी भवति ' [ तै० २ । ७ ] इति । न हि लब्धैव लब्धव्यो भवति । नन्वात्मलाभान्न परं विद्यत इति श्रुतेरात्मनोऽन्यो लब्धव्य एव नास्ति तत्कथं जीवानन्दमययोर्भेदव्यपदेश इति चेन्न । सोपाधिकत्वनिरुपाधिकत्वाभ्यां तयोर्भेदात् । यथा महाकाशाद्घटाकाशभेदोऽस्ति तद्वत् । ईदृशं च विज्ञानात्परमात्मनोभेद-माश्रित्य ' नेतरोऽनुपपत्तेः ' । ' भेदव्यपदेशाच्च ' इत्युक्तम् ॥ १७ ॥

**कामाच्च नानुमानापेक्षा ॥ १८ ॥**

किंच । अनुमीयते कार्यद्वारेत्यनुमानं प्रधानं तस्यापेक्षा स्वीकार आनन्दमयत्वेन कारणत्वेन च न संभवति । कुतः । कामात् । आनन्दमयाधिकारे ' सोऽकामयत । बहु स्यां प्रजायेय ' [ तै० २ । ६ ] इति कामयितृत्वश्रवणात् । ' ईक्षतेर्नाशब्दम् ' इति निराकृतमपि प्रधानं गतिसामान्यप्रपञ्चनाय पुनर्निराकृतमिति ज्ञेयम् ॥ १८ ॥

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ ( ६ ) (५)**

इतश्च प्रधाने जीवे वा नाऽऽनन्दमयशब्दः संभवति । यस्मादानन्दमये प्रकृत आत्मनि प्रतिबुद्धस्य जीवस्य तद्योग शास्ति शास्त्रम् । तदात्मना योगस्तद्योगस्तं तथोक्तम् । तद्भावापत्तिमित्यर्थः । ' यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ' [ तै० २ । ७ ] । अस्यार्थः—एष जिज्ञासुरेतस्मि-न्ब्रह्मण्यभयं यथा भवति तथा गुरुशास्त्रविश्वासेनेत्यर्थः । प्रतिष्ठां तादात्म्येनावस्थितिं यदा लभते । अथ तदानीं स विद्वानभयं जन्ममरणादिभयरहितं मोक्षं गतः प्राप्तो भवति । एवशब्देन कालविलम्बो व्यावर्त्यते । अस्मिन्नर्थे विद्वत्प्रसिद्धिं हिशब्दो द्योतयति । तद्ब्रह्म विशिनष्टि अदृश्यम् । इन्द्रियैरगम्यत्वात् । अनात्म्यमात्मीयं लिङ्गं तद्रहितमनात्म्यम-नुमानेनाप्यगम्यमित्यर्थः । हेतुदृष्टान्तवर्जितमिति श्रुत्यन्तरात् । निःशेषेण वक्तुं शक्यं निरुक्तं तद्विपरीतमनिरुक्तम् । ' यतो वाचो निवर्तन्ते [ तै० २ । ४ ] इतिश्रुतेः । निलयन-

माधारस्तद्रहितम् । 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' [ छा० ७ । २४ । १ ] इतिश्रुतेरिति । एतस्मिन्नानन्दमये भेदबुद्धौ दोषमाह—'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' [ तै० २ । ७ ] । उच्छब्दोऽप्यर्थे । अरशब्दोऽल्पार्थे । अन्तरशब्दो भेदे । स्वल्पमपि भेदं कुरुत इत्यर्थः । स्पष्टमन्यत् । एतच्च परमात्मपरिग्रहे घटते नान्यथा । तस्मादानन्दमयः परमात्मेति सिद्धम् । भेदवादिमतं तु 'ब्रह्मैव सन्ब्रह्माप्येति' [ बृ० ४ । ४ । ६ ] 'ब्रह्मविद्ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] इत्यादिश्रुतिविरुद्धम् । इदं त्वेकदेशिनां मतम् । शंकरभगवत्पादैस्त्वेकदेशिमतेन व्याख्याय पश्चादन्नमयादिवदानन्दमय इत्यस्यापि विकारार्थमयट्प्रवाहपतितत्वात्प्राचुर्यार्थस्वीकारेऽपि किंचिद्दुःखसद्भावप्रतीतेश्च 'आनन्दमयोऽभ्यासात्' [ ब्र० सू० १ । १ । १२ ] इत्यादीनि सूत्राणि ब्रह्मपरत्वेन व्याख्यातानि । तथा हि—

**'आनन्दमयोऽभ्यासात्'** । 'ब्रह्म पुच्छं प्रतिष्ठा [ तै० २ । ५ ] इत्यत्र यच्छ्रुतं ब्रह्म तत्किमानन्दमयस्याङ्गत्वेन निर्दिश्यते किं वा स्वप्रधानत्वेनेति संशयः । आनन्दमयस्यावयवत्वेनेति तावत्प्राप्तं लोके पुच्छशब्दस्यावयववाचित्वेन प्रसिद्धत्वादिति पूर्वः पक्षः । अत्रोच्यते— **'आनन्दमयोऽभ्यासात्'** । आनन्दमयशब्देनाऽऽनन्दमयवाक्यसंबन्धि 'ब्रह्म पुच्छं प्रतिष्ठा' इत्येतद्गतं ब्रह्मपदमुपलक्ष्यते । तद्ब्रह्मपद स्वप्रधानमिति प्रतिज्ञा । कुतः । अभ्यासात् । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' [ तै० २ । ६ ] इत्यादौ ब्रह्मणोऽभ्यस्यमानत्वात् । ननु 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्ष । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' [ तै० २ । ५ ] इत्यनेन ब्रह्माऽऽनन्दमयस्यावयवत्वेन निर्दिश्यते । अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादिवत् । तत्कथं ब्रह्मणः स्वप्रधानत्वमिति चेत् । उच्यते-लाङ्गूलवाचिनः पुच्छशब्दस्य मुख्यार्थासभवे सति पुच्छवत्पुच्छमितिनिर्दिष्टं ब्रह्म तदानन्दमयस्य जीवस्य पुच्छमाधारः प्रतिष्ठा परायणम् । तथा च भाष्यम्—कथं पुनः स्वप्रधानं सद्ब्रह्माऽऽनन्दमयस्य पुच्छत्वेन निर्दिश्यते ब्रह्म पुच्छ प्रतिष्ठेति । नैष दोषः । पुच्छवत्पुच्छं प्रतिष्ठा परायणमेकनीडं लौकिकस्याऽऽनन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वमिति । किं च प्रतिशरीर प्रियमोदादिभेदादानन्दमयस्यापि भिन्नत्वमस्ति । ब्रह्मणस्तदवयवत्वे भेदः स्यात् । तथात्वेऽद्वितीयत्वप्रतिपादकश्रुतिव्याकोपः स्यात् । किं च सर्वत्राऽऽनन्द एवाभ्यस्यते न त्वानन्दमयः । 'यदेष आकाश आनन्दो न स्यात्' । [ तै० २ । ७ ] 'सैषाऽऽनन्दस्य मीमांसा भवति' [ तै० २ । ८ ] 'आनन्दं ब्रह्मणो विद्वान्' । [ तै० २ । ९ ] 'आनन्दो ब्रह्मेति व्यजानात्' [ तै० ३ । ६ ] इत्यादिषु । तस्मादानन्दमयशब्दोपलक्षितं ब्रह्म स्वप्रधानं न त्वानन्दमयस्यावयव इति सिद्धम् । **'विकारशब्दान्नेति चेन्न प्राचुर्यात्'** । पुच्छमित्यवयवशब्दान्न प्रधा-

नत्वं ब्रह्मण इति चेन्न । कुतः । प्राचुर्यात् । प्राचुर्यं प्रायपाठः । पूर्वमवयवप्रधानप्रश्नोक्त्तस्यैव बुद्धौ संनिधानात्पुच्छशब्देन ब्रह्म व्यपदिश्यते । न तु मुख्यं पुच्छत्वम् । पुच्छशब्देनाऽऽधारलक्षणोपपत्तेरिति । '**तद्धेतुव्यपदेशाच्च**'। हेतुत्वेन व्यपदेशो हेतुव्यपदेशः । तस्य ब्रह्मणो विकारजातं प्रति हेतुत्वेन व्यपदेशादित्यर्थः । 'इदꣳ सर्वमसृजत । यदिदं किं च' [ बृ० १ । २ । ५ ] इति । न च कारणं ब्रह्म स्वविकारस्याऽऽनन्दमयस्य मुख्यया वृत्त्याऽवयवः सभवतीति स्वप्रधान ब्रह्म पुच्छ ज्ञेयत्वेन विवक्ष्यत इति सिद्धम् । '**मान्त्रवर्णिकमेव च गीयते**'। यत् 'सत्यं ज्ञानम्' [ तै० २ । १ ] इत्यादिमन्त्रवर्णप्रतिपाद्य ब्रह्म तदेव ब्रह्म पुच्छमिति ब्राह्मणे स्वप्राधान्येन गीयते । मन्त्रब्राह्मणयोरैकार्थ्यात् । '**नेतरोऽनुपपत्तेः**'। ब्रह्म पुच्छ नेतरः । नाऽऽनन्दमयस्यावयवः किं तु परं ब्रह्मैव । कुतः । अनुपपत्तेः । अग्रिमवाक्यप्रतिपाद्यस्य जगत्स्रष्टृत्वस्यान्यस्मिन्ननुपपत्तेरित्यर्थः । '**भेदव्यपदेशाच्च**'। इतश्च पुच्छं परं ब्रह्मैव । 'रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' [ तै० २ । ७ ] इत्यानन्दमयब्रह्मणो व्यवहारे भेदेन व्यपदेशादित्यर्थः । '**कामाच्च नानुमानापेक्षा**'। '**अस्मिन्नस्य च तद्योगं शास्ति**'। अनयोः पूर्ववदेव व्याख्यानम् । तस्माद्ब्रह्म पुच्छमिति परं ब्रह्म ज्ञेयत्वेन सिद्धम् ॥ १९ ॥ ( ६ )

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

छान्दोग्यस्य प्रथमाध्याय उद्गीथोपासनायामुपसर्जनान्युपास्यान्यभिधाय प्रधानमुपास्यमभिधातुमिदमाम्नायते—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' [छा० १। ६ । ६–७ ] इत्याद्यधिदैवतम् । अथाध्यात्ममपि 'अथ य एषोऽन्तराक्षिणि पुरुषो दृश्यते' [ छा० १।७।५ ] इत्यादि । तत्र संशयः । किं विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चिज्जीवो देवभावमुपेत्य जगदधिकारं निष्पादयन्नादित्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते । किं वा नित्यसिद्धः परमेश्वरः सर्वगतत्वान्मण्डले वर्तत इति तयोः संशयः । तत्र देवतात्मेति तावत्प्राप्तम् । कुतः । हिरण्यश्मश्रुरित्यादिशरीरश्रवणात् । जीव एवेति प्राप्ते ब्रूमः । आदित्याक्ष्णोरन्तः श्रूयमाणः परमेश्वर एव । कुतः । तद्धर्मोपदेशात् । तस्य परमेश्वरस्य ये धर्मास्तेषामस्मिन्वाक्य उपदेशात् । तद्यथा—'स एष सर्वेभ्यः पाप्मभ्य उदितः' [ छा० १ । ६ । ६–७ ] इति सर्वपापराहित्यस्य 'सैवर्क् तत्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म' [ छा० १ । ७ । ५ ] इत्यृक्सामाद्यात्मकत्वादिकस्य चेश्वरधर्मत्वात् । एतत्सर्वपापराहित्यादिकं जीवे न संभवति । नन्वीश्वरे हिरण्यश्मश्रुत्वादिरूपश्रवणं कथमुपपद्येतेति चेत । उच्यते—साधकानुग्रहायेश्वरस्यापि मायामयरूपग्रहणमुपपद्यत एव ।

' माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं त्वं द्रष्टुमर्हसि ' ॥

इतिस्मरणात् । तथा च भाष्येऽप्युक्तम्—सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते ' सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः ' [ छा० ३ । १४ । २ ] इत्यादिनेति । यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते भवति तत्र शास्त्रम्—' अशब्दमस्पर्शमरूपमव्ययम् ' [ क० ३ । १५ ] इत्यादीति च । स्वमहिमप्रतिष्ठितस्यापि सर्वगतत्वात्सूर्यमण्डलाद्याधारविशेषोऽप्युपासनार्थमुपपद्यते । तस्मात्परमेश्वर एवाक्ष्यादित्ययोरन्तर उपदिश्यते ॥ २० ॥ (६)

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥ ( ७ ) ।

किंचाऽऽदित्याक्ष्णोरन्तः श्रूयमाण आदित्यशरीराभिमानिजीवादन्यः । कुतः । भेदव्यपदेशात् । ' य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्याऽऽदित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ' [ बृ० ३ । ७ । ९ ] इति श्रुत्यन्तरे भेदव्यपदेशात् । अत्राप्यन्तःशब्दश्रवणेन तत्प्रत्यभिज्ञानात्परमेश्वर एवेहोपदिश्यत इति सिद्धम् । एनेन विमतव्याख्यान शिवनारायणपर प्रतिषिद्ध तयोः परमेश्वरावतारत्वात् ॥ २१ ॥ ( ७ ) ।

## आकाशस्तल्लिङ्गात् ॥ २२ ॥ ( ८ ) ।

तत्रैव छान्दोग्ये हिरण्मयवाक्यादुपरि शालावत्येन महर्षिणा सर्वलोकाधारे वस्तुनि ' अस्य लोकस्य का गतिः ' इति पृष्टे प्रवाहणो राजोत्तरमाह । तत्रत्यं वाक्यमेतत् ' आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाश प्रत्यस्तं यन्त्याकाशो ह्येभ्यो ज्यायानाकाशः परायणम् ' [ छा० १ । ९ । १ ] इति । तत्राऽऽकाशशब्दार्थो वियद्वा ब्रह्मेति संशयः । तत्र भूताकाशमिति तावत्प्राप्तम् । प्रचुरप्रसिद्धेः । सर्वभूतोत्पत्तिलयहेतुत्वं च वियत उपपद्यते । ' आकाशाद्वायुर्वायोरग्निः ' [ तै० २ । १ ] इत्यादौ वाय्वादीना सर्वभूताना वियत्कार्यत्वश्रवणात् । विभुत्वादिभिर्धर्मैराकाशसदृशं ब्रह्मेति ब्रह्मण्याकाशशब्दस्य गौणत्वादिति प्राप्ते ब्रूमः । आकाशशब्देनात्र ब्रह्मैवोच्यते । कुतः । तल्लिङ्गात् । ' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ' इति ब्रह्मलिङ्गदर्शनादित्यर्थः । सर्वाणि ह वा इत्यत्रासंकुचितसर्वशब्देन वियत्सहितसर्वभूतोत्पत्तिहेतुत्वं गृह्यते । न हि वियतो वियद्धेतुत्वं संभवति । रूढिस्तु लौकिकवियत्येवास्तु । श्रौती तु ब्रह्मण्यपि । ' आकाशो* वै नाम नामरूपयोर्निर्वहिता ' [ छा० ८ ।

* छान्दोग्यपुस्तकस्थोऽयंपाठो लिखित एतत्पुस्तके तु—°शोह वै नामरूपयोरिति ।

१४ । १ ] इतिप्रयोगदर्शनात् । किंचाऽऽकाशादेवेत्येवकारः कारणान्तरं व्युदस्यति । न चैतद्वियत्पक्षे संभवति । घटादिषु वियद्व्यतिरिक्तानां मृदादिकारणानामुपलम्भात् । ब्रह्मपक्षे तु ब्रह्मणः सद्रूपस्य सर्वानन्यतया कारणान्तरव्युदास उपपद्यते । ज्यायस्त्वपरायणत्वे च श्रुत्यन्तरे ब्रह्मणः श्रूयेते—'ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' [ छा० ३ । १४ । ३ ] इति । तथा परायणत्वमपि परमकारणे परमात्मन्येवोपपन्नतरम् । तथा च श्रुतिः 'विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्' [ बृ० ३ । ९ । २८ ] इति । कर्मफलं दातुं समर्थमित्यर्थः । अत एवाऽऽकाशपर्यायवाचिनां शब्दानामपि ब्रह्मण्येव श्रुतिप्रयोगो दृश्यते । 'ऋचो अक्षरे परमे व्योमन्' [ ऋ० सं० १ । १६४ । ३९ ] 'सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता' [ तै० ३ । ६ । ] 'कं ब्रह्म' [ छा० ४ । १० । ५ ] 'खं ब्रह्म' [ बृ० ५ । १ । १ ] इत्यादौ । वाक्योपक्रमे वर्तमानस्याऽऽकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा । तस्मादाकाशशब्दवाच्यं ब्रह्मेति सिद्धम् ॥ २२ ॥ ( ८ )

## अत एव प्राणः ॥ २३ ॥ ( ९ ) ।

आकाशवाक्यादुत्तरस्मिन्वाक्ये प्रस्तावनाम्नः सामभागस्य देवतायां प्रस्तोत्रा पृष्टायामुषस्तिरुत्तरं ददौ । तत्रत्यं वाक्यमेतत् 'प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' ( छा० १ । ११ । ५ ) इति । तत्र प्राणशब्दः शरीरान्तःसंचारिवायुवाची भवेत् । सर्वभूतलयस्य तत्र सुसंपादत्वात् । 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वा*गप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्ते' ( श० प० ब्रा० १० । ३ । ३ । ६ ) इति । सुषुप्तौ भूतसाराणामिन्द्रियाणां प्राणे प्रविलयादिति प्राप्ते ब्रूमः । इन्द्रियमात्रलयपरत्वे व्यायमाने सर्वाणि ह वा इत्यसौ सर्वशब्दः संकुचितः स्यात् । आकाशशब्दवत् । प्राणशब्दोऽपि श्रौतरूढ्येवकाराभ्यां ब्रह्मवाचकः । अस्ति हि प्राणशब्दस्य ब्रह्मणि श्रौते रूढिः । 'प्राणस्य प्राणम्' ( बृ० ४ । ४ । १८ ) इत्यत्र ब्रह्मविवक्षया प्राणशब्दस्य द्वितीयस्य प्रयोगात् । तदुक्तं भाष्यकृद्भिः—यथा पितुः पितेति प्रयोगेऽन्यः पिता षष्ठीनिर्दिष्टोऽन्यः प्रथमानिर्दिष्टः पितुः पितेति गम्यते तद्वत्प्राणस्य प्राणमिति शब्दभेदात्प्रसिद्धात्प्राणादन्यः प्राणस्य प्राणमिति निश्चीयत इति । तस्मादीश्वरः प्राण इति सिद्धम् ॥ २३ ॥ ( ९ ) ।

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

छान्दोग्यतृतीयाध्याये गायत्रीविद्यायां हृदये छिद्रोपासनमभिधायेदमाम्नायते—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव

* ब्र० सू० भाष्यानुसारीयं पाठ एतल्लिखितपुस्तके तु—गप्येति प्राणं चक्षुः प्राणं श्रोत्रं सेति ।

तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः ' [ छा० ३ । १३ । ७ ] इति । तत्र संशयः— किमिह ज्योतिःशब्देन कार्यरूपं नेत्रानुग्राहकं तेज उत ब्रह्मेति । कार्यरूपं तेजस्ताव-त्प्राप्तम् । ब्रह्मणोऽसंनिहतत्वेन वाक्यस्य ब्रह्मपरत्वायोगात् । कार्यरूपतेजःपरत्वं तूपपद्यत एव । तल्लिङ्गसद्भावात् । ' इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः ' [ छा० ३।१३। ७ ] इति जाठराग्न्यभेदस्तेजोलिङ्गम् । किं च चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा न युक्ता । कार्यस्य तेजसो द्युलोकादिमर्यादा तु युक्तैव । प्रसिद्धिवशादपि कार्य-रूपं ज्योतिरिति प्राप्ते, अत्रोच्यते—असिद्धोऽसंनिधिः । पूर्वं गायत्रीखण्डे ' पादोऽस्य विश्वा+ भूतानि त्रिपादस्यामृतं दिवि ' [ छा० ३ । १२ । ६ ] इति चतुष्पदो ब्रह्मणः प्रकृतत्वात् । तस्य चात्र प्रकृतवाचिना यच्छब्देनानुवर्तमानस्य ब्रह्मण एकांशतया सर्व-भूतानामभिधानात् । अवशिष्टं पादत्रयोपलक्षितमनन्तस्वरूपं द्योतनात्मकत्वे स्वस्मिन्नव-तिष्ठते । न च ज्योतिःशब्दस्य ब्रह्मणि वृत्त्यनुपपत्तिः । सर्वजगदवभासके ब्रह्मणि तद्वृत्त्यु-पपत्तेः । ' तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ' [ कठो० ५।१५ ] ' * तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ' [ बृ० ४ । ४ । १६ ] इत्यादि-श्रुतिभ्यश्च । किं च ' त्रिपादस्यामृतं दिवि ' [ छा० ३ । १२ । ६ ] इत्यनेन मन्त्रेण यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतसंबन्धिरूपं निर्दिष्टं तदेवेह द्युसंबन्धित्वेन निर्दिष्टमिति प्रत्यभिज्ञायते । तत्परित्यज्य प्राकृतं ज्योतिरभ्युपगच्छतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्ये-यातामिति भाष्ये प्रतिपादनात् । यदप्युक्तं सर्वगतस्य ब्रह्मणो द्युमर्यादत्वं नोपपद्यत इति । वार्तमेतत् । सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते । तस्मा-ज्ज्योतिर्ब्रह्म ॥ २४ ॥

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्प-णनिगदात्तथाहि दर्शनम् ॥ २५ ॥**

ननु ' गायत्री वा इदꣳ सर्वं भूतं यदिदं किं च ' [ छा० ३ । १२ । १ ] इति गायत्र्याः प्रकृतत्वात्तस्या एव ' पादोऽस्य सर्वा भूतानि ' [ छा० ३ । १२ । ६ ] इति भूतपादव्यपदेशो न ब्रह्मण इति चेन्न । गायत्र्याख्यच्छन्दोद्वारेण तद्गते ब्रह्मणि सर्वा-त्मकत्वं प्रतिपाद्यते । न ह्यक्षरसंनिवेशमात्राया गायत्र्याः सर्वात्मकत्व सभवति । तस्माद्गाय-त्र्याख्यविकारे यदनुगतं जगत्कारणं ब्रह्म तदेव ' गायत्री वा इदꣳ सर्वम् ' [ छा० ३ । १२ । १ ] इत्युच्यते । सूत्रार्थस्त्वेवम्—छन्दोभिधानाद्गायत्र्याख्यच्छन्दस एव पूर्वं प्रक्रान्तत्वान्न ब्रह्मणः प्रकृतत्वमिति चेन्न । कुतः । तथा छन्दोद्वारेण तद्गते ब्रह्मणि चेतो-र्पणस्य चित्तसमाधानस्य निगदादभिधानात् । तत्र दृष्टान्तः । तथा हि दर्शनम् । दृश्यत

---

+ सर्वाभूतानीतिछान्दोग्यपुस्तके पाठः । * तद्देवाज्योतिरितिबृहदारण्यके पाठः ।

इति दर्शनम् । अन्यत्रापि तत्तद्द्वारेण ब्रह्मण उपासनं दृष्टमित्यर्थः । ' एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः ' [ ऐ० आ० ३ । २ । ३। १२ ] इति । तस्माद्ब्रह्म पूर्वस्मिन्वाक्ये प्रकृतम् ॥ २५ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

किंच गायत्रीवाक्ये ब्रह्मैव प्रकृतमित्यभ्युगन्तव्यमित्येवंशब्दार्थः । कुतः । भूतादिपादव्यपदेशोपपत्तेः । भूतपृथिवीशरीरहृदयैश्चतुष्पदेति पादव्यपदेशस्य ब्रह्मण्येवोपपत्तेः । नहि ब्रह्मानाश्रितस्य गायत्र्याख्यच्छन्दसो भूतादिपादव्यपदेश उपपद्यते । अपि च ब्रह्मानाश्रयणे गायत्र्यां नेयमृक्सबध्यते * ' एतावानस्य महिमा ' [ छा० ३ । १२ । ६ ] इति । अनया ह्यृचा स्वरसेन ब्रह्मैवाभिधीयते । ब्रह्मण्येव सर्वात्मके पादोपपत्तेः । पुरुषसूक्तेऽपीयमृग्ब्रह्मपरतयैव समाम्नायते । एतदर्थप्रतिपादिका स्मृतिश्च—' विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' [ भ० गी० १० । ४२ ] इति । तस्माद्गायत्रीवाक्ये ब्रह्मैव प्रकृत तदेव ज्योतिर्वाक्यैर्द्युसबन्धात्प्रत्यभिज्ञायत इति सिद्धम् ॥ २६ ॥ ( ९ )

## उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ (१०)

ननु पूर्ववाक्ये ' त्रिपादस्यामृतं दिवि ' [ छा० ३ । १२ । ६ ] इति सप्तम्या द्यौराधारत्वेन निर्दिश्यते । इह पुनः ' अथ यदतः परो दिवो ज्योतिः ' [ छा० ३।१३। ७ ] इति पञ्चम्यवधित्वेन निर्दिश्यते । एवं विभक्तिभेदेनोपदेशभेदाज्ज्योतिर्वाक्ये प्रत्यभिज्ञानं न संभवतीति चेन्न । कुतः । उभयस्मिन्नप्यविरोधात् । विभक्तिभेदेनोपदेशभेदेऽपि प्रत्यभिज्ञाया अविरोधादित्यर्थः । प्रधानप्रातिपदिकार्थेन प्रत्यभिज्ञायां गुणभूतविभक्तिविरोधो न प्रतिबन्धक इति भावः । तदुक्तं भाष्ये—यथा लोके वृक्षाग्रेणासंबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च । एव च दिवः परमपि सद्ब्रह्म दिवीत्युपदिश्यत इति । तस्माद्विभक्तिविरोधेऽपि न प्रत्यभिज्ञाविरोधस्तस्मात्परमेव ब्रह्म ज्योतिःशब्दवाच्यमिति सिद्धम् ॥ २७ ॥ (१०)

## प्राणस्तथानुगमात् ॥ २८ ॥

अस्ति कौषीतकिब्राह्मण इन्द्रप्रतर्दनाख्यायिका—' प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च ' [ कौषी० ३ । १ ] इत्याम्नाता । तस्यां श्रूयते ' प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व [ कौषी० ३ । २ ] इति प्रतर्दनमिन्द्रो वक्ति । तथोत्तरत्र ' अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति '

---

* तावानस्येतिच्छान्दोग्यपुस्तके पाठः ।

[ कौ० ३ । ३ ] इति । तथा 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' [ कौ० ३ । ८ ] इत्यादि । अन्ते च 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' [ कौ० ३ । ८ ] इत्यादि । तत्र प्राणशब्देन वायुरभिधीयत इन्द्रो वा जीवो वा परं ब्रह्म वेति संशयः । सन्ति ( अस्ति ) ह्यत्रानेकलिङ्गदर्शनं संशयोत्थापकम् । 'मामायुरमृतमुपास्स्व' इतीन्द्रलिङ्गम् । 'इदं शरीरं परिगृह्योत्थापयति' इति प्राणलिङ्गम् । 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति जीवलिङ्गम् । 'आनन्दोऽजरोऽमृतः' इति ब्रह्मलिङ्गम् । अतश्चतुर्विधलिङ्गवशादुपपन्नः संशयः । तत्र प्रसिद्धेः प्राणो वायुरिति पूर्वपक्षः । सिद्धान्तस्तु । अत्र प्राणशब्दः परब्रह्मपर एव । कुतः । तथाऽनुगमात् । तथा ब्रह्मत्वेनानुगमादवगमादित्यर्थः । अस्मिन्प्रकरण उपक्रमादिलिङ्गतात्पर्यपर्यालोचनयाऽऽनन्दाजरामृतप्रज्ञादीनां परमात्मधर्माणामनुगमात् । तथा हि उपक्रमे तावद्वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' [ कौ० ३ । १ ] इति हिततमत्वमेकं लिङ्गम् । प्रज्ञात्मत्वं द्वितीयम् । न ह्यचेतनस्य वायोस्तत्संभवति । 'न साधुना कर्मणा भूयान्भवति । नो एवाऽसाधुना कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष एवासाधु कर्म कारयति तं यमधो निनीषते' [ कौ० ३ । १ ] इति सर्वकर्मकारयितृत्वं तृतीयम् । 'स यो मां विजानीयान्नास्य केन चन कर्मणा लोको मीयते न मातृवधेन न पितृवधेन' [ कौ० ३ । २ ] इति ब्रह्मज्ञानमात्रेण महापातकाद्यलेपोऽपरं लिङ्गम् । एवमन्यान्यपि लिङ्गान्युदाहर्तव्यानि । एतल्लिङ्गजातं ब्रह्मण्येवोपपद्यते न प्राणेन्द्रजीवेषु । तस्मात्प्राणो ब्रह्म ॥ २८ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

ननु नात्र ब्रह्म प्राणशब्दवाच्यम् । कुतः । वक्तुरात्मोपदेशात् । वक्ता हीन्द्रो नाम देवताविशेषः स्वमात्मानं प्रतर्दनायाऽऽचचक्षे 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इति वक्तुरिन्द्रस्याऽऽत्मत्वेन प्राणोपदेशादिन्द्र एव प्राणशब्देनोच्यत इति चेत् । अत्राभिधीयते । अध्यात्मसंबन्धभूमा ह्यस्मिन् । हि यस्मादस्मिन्नध्यायेऽध्यात्मसंबन्धस्य परमात्मसंबन्धस्य भूमा बाहुल्यं विद्यत इत्यर्थः । तथाहि—उपक्रमे तावत् 'यं त्वं मनुष्याय हिततमं मन्यसे' इति हिततमतयोपासनं प्रारब्धम् । तच्चावश्यं परमात्मविषयम् । तदुपासनस्यैव मोक्षसाधनत्वेन हिततमत्वात् । 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' [ कौ० ३ । ८ ] इति विषयेन्द्रियव्यवहारैरनभिभूतस्य विषयेन्द्रियाश्रयस्य परमात्मनः संबन्धस्य बाहुल्यात्परमात्मोपदेश एवायं न देवतात्मोपदेशः ॥ २९ ॥

नन्वेवं सति कथमिन्द्रेण प्रतर्दनं प्रति 'मामेव विजानीहि' इत्युक्तं तत्राऽऽह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥**

इन्द्रस्य 'मामेव विजानीहि' इत्युपदेशः शास्त्रदृष्ट्या नेतव्यः। 'अहमेव परं ब्रह्म' इति शास्त्रदृष्ट्या स्वानुभवेन च पश्यन्नेवमुक्तवान् 'मामेव विजानीहि' इति। अत्र दृष्टान्तः। वामदेववत्। यथा वामदेवः शास्त्रदृष्ट्या 'अहं मनुरभवं सूर्यश्च' [ बृ० १ । ४ । १० ] इत्याह तद्वत्। यत्तु परेणोक्तम्—अन्तर्यामिदृष्ट्या वामदेवोऽहं मनुरभवं सूर्यश्चेति प्रायुङ्क्ते न त्वभेदाभिप्रायेण तथेहापीति। तन्न। दृष्टान्तासिद्धेः। नहि मम वामदेवस्यान्तर्यामी स एव मन्वाद्यन्तर्यामीति वाक्यार्थः सम्भवत्यभवदिति प्रयोगापत्तेः। किं च शास्त्रदृष्ट्या तूपदेश इति सूत्रं जीवब्रह्मणोरभेदमाह बाधकाभावात्। लाघवसहकृता अभेदसाधिकाः श्रुतयः स्मृतयश्च सहस्रशः सन्ति तासां व्याकोपाच्च ॥ ३० ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥ (११)**

यद्यप्यध्यात्मसंबन्धबाहुल्यं माऽस्त्विन्द्रपरम्। तथाऽपि न ब्रह्मपरम्। जीवमुख्यप्राणयोर्लिङ्गात्। जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिङ्गमेतत्। 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि। वक्तृत्वादेर्जीवधर्मत्वात्। तथा मुख्यप्राणलिङ्गमपि। 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति। शरीरधारणस्य मुख्यप्राणधर्मत्वात्। प्राणसंवादे वागादीन्प्राणान्प्रकृत्य 'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' [ प्र० २ । ३ ] इतिश्रवणात्। जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सह वृत्तित्वेनाभेदनिर्देशः स्वरूपेण च भेदनिर्देश उपपद्यते 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' [ कौ० ३ । ३ ] इति। तस्मान्न ब्रह्म प्राणशब्दवाच्यमिति चेत्। अत्रोच्यते—नायं पक्षः सम्यग्जीवो मुख्यप्राणो वेति। कुतः। उपासात्रैविध्यात्। उपासनत्रैविध्यापत्तेरित्यर्थः। न ह्येकस्मिन्वाक्य उपासात्रैविध्यमभ्युपगन्तुं युक्तम्। उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते। 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व' इत्युक्त्वाऽन्ते 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्येकरूपावुपक्रमोपसंहारौ दृश्येते। तस्मादुपक्रमोपसंहारयोरैकरूप्याद्युक्तमेकवाक्यत्वमाश्रयितुम्। न च ब्रह्मलिङ्गमन्यपरत्वेन नेतुं शक्यम्। दशानां भूतमात्राणां ब्रह्मण्याश्रितत्वात्। इहास्मिन्वाक्ये तस्य ब्रह्मलिङ्गस्य योगात्सत्त्वादित्यर्थः। यत्तु मुख्यप्राणलिङ्गं दर्शितम्—'इदं शरीरं परिगृह्योत्थापयति' इति। तदसत्। प्राणव्यापारस्य परमात्माधीनत्वात्। 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' [ काठ० २ । ५ । ५ ] इति श्रुत्यन्तरे स्पष्टं तदाम्नानात्। यदपि 'न

वाचं विजिज्ञासीत वक्तारं विद्यात् ' इत्यादिजीवलिङ्गं दर्शितं तदप्यस्य वाक्यस्य ब्रह्मपरत्वं निवारयितुं नेष्टे जीवस्य ब्रह्माभिन्नत्वात्। ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] ' अहं ब्रह्मास्मि ' [ बृह० १ । ४ । १० ] इत्यादिश्रुतिभ्यो बुद्ध्याद्युपाधिकृतं विशेषमाश्रित्य ' ब्रह्मैव सञ्जीवः कर्ता भोक्ता ' इत्युच्यते । तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं ' न वाचं विजिज्ञासीत वक्तारं विद्यात् ' इति ब्रह्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। पुनश्च यदुक्तं ' सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादिनो नोपपद्यत इति तदसत् । बुद्धिप्राणयोर्ब्रह्मोपाधिभूतयोरेव भेदेन निर्देशात्। उपाधिद्वयोपहितस्य तु ब्रह्मणः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमपि न विरुध्यते। तस्मात्प्राणशब्दो ब्रह्मपर एवेति सिद्धम् । इयमपरा व्याख्या। नात्र ब्रह्मवाक्ये जीवप्राणलिङ्गविरोधः। कुतः । उपासात्रैविध्यात् । त्रिविधमिह ब्रह्मण उपासनमभिहितम् । प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण चेति । तत्र दृष्टान्तः। आश्रितत्वात्। अन्यत्रापि ' मनोमयः प्राणशरीरः ' [ छा० ३ । १४ । २ ] इत्यादावुपाधिधर्मेण ब्रह्मण उपासनस्य श्रुतत्वादित्यर्थः । तस्मात्प्राणशब्दो ब्रह्मपर इति सिद्धम्॥ ३१ ॥ ( ११ )

इति लक्ष्मीनरहरिसूरिसूनुहरिदीक्षितकृतौ ब्रह्मसूत्रविवृतौ
प्रथमाध्यायस्य प्रथमः पादः॥

---

## अथ द्वितीयः पादः।

---

प्रथमे पादे ' जन्माद्यस्य यतः ' इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम्। तस्य ब्रह्मणः सर्वज्ञत्वपूर्णत्वनित्यत्वसर्वात्मकत्वादयो धर्मा उक्ता एव भवन्ति। अर्थान्तरे प्रसिद्धाना च केषांचिच्छब्दानां ब्रह्मपरतया निर्णयः कृतः । अथेदानीमस्पष्टब्रह्मलिङ्गानां सदिग्धवाक्यानां ब्रह्मपरत्वेन निर्णयाय द्वितीयतृतीयपादावारभ्येते—

### सर्वत्र प्रसिद्धोपदेशात्॥ १ ॥

छान्दोग्यस्य तृतीयाध्याये शाण्डिल्यविद्यायामिदमाम्नायते--' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतु कुर्वीत ' [ छा० ३ । १४ । १ ] ' मनोमयः प्राणशरीरो भारूपः सत्यसकल्प आकाशात्मा सर्वकर्मा सर्वकामः ' [ छा० ३ । १४ । २ ] इत्यादि। तत्र संशयः। किमिह मनोमयत्वादिधर्मकः शारीर आत्मोपास्यत्वेनोपदिश्यते किं वा परं ब्रह्मेति। किं तावत्प्राप्तम्। शारीर इति । कुतः । मनआदिसंब-

घस्य जीवे सुसंपादत्वात् । मनसो विकारो मनोमय इति मनःसंबन्धः । प्राणः शरीरमस्येति प्राणसंबन्धः । नचैतद्द्वयं परब्रह्मणि सुसंपादम् । 'अप्राणो ह्यमनाः शुभ्रः' [ मुण्ड० २ । १ । २ ] इत्यादिश्रुतिविरोधात् । तथा 'एष म आत्माऽन्तर्हृदयेऽणीयान्' [ छा० ३ । १४ । ३ ] इति श्रूयमाणं च हृदयेऽवस्थानमणीयस्त्वं च निराकारस्य सर्वगतस्य न कथंचिदुपपद्यते । तस्माज्जीव इति प्राप्ते ब्रूमः । परमेवेह ब्रह्म मनोमयत्वादिधर्मैरुपास्यम् । कुतः । सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र सर्वेषु वेदान्तेषु यत्प्रसिद्धं जगत्कारणं परं ब्रह्म तदिह 'सर्वं खल्विदं ब्रह्म' इतिवाक्योपक्रमे श्रुतम् । तदेव मनोमयत्वादिभिर्धर्मैर्विशिष्टमुपदिश्यत इति युक्तम् । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्येतस्मिञ्शमविधिपरे पूर्ववाक्ये श्रूयमाणं यद्ब्रह्म तदेव मनोमयः प्राणशरीर इत्येताभ्यां तद्धितबहुव्रीहिभ्यां विशेष्यत्वेनापेक्ष्यते । शमवाक्यस्यायमर्थः— यस्मात्सर्वगतं ब्रह्म तज्जत्वात्तल्लत्वात्तदनत्वात्तस्मात्सर्वात्मके ब्रह्मणि रागद्वेषादिसंभव उपासनकाले शान्तो भवेदिति । एतद्वाक्यगते ब्रह्मणि विशेष्यत्वेनान्विते मनोमयवाक्यमपि ब्रह्मपरं भविष्यति । न च ब्रह्मणो मनःप्राणसंबन्धाद्यनुपपत्तिः । निरुपाधिके तदनुपपत्तावपि सोपाधिकस्योपास्यस्य चिन्तनार्थतया तदुपपत्तेः । तस्मात्सर्वेष्वपि वेदान्तवाक्येषु यद्ब्रह्मोपास्यत्वेन प्रसिद्धं तदेवात्राप्युपास्यम् । नहि क्वचिदपि वेदान्ते जीवस्योपास्यत्वं प्रसिद्धं तस्माद्ब्रह्मैवोपास्यमिति सिद्धम् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

किं च । वक्तुमिष्टा विवक्षिताः । तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसंकल्पत्वादयस्तेषां ब्रह्मण्येव युक्ततरत्वादित्यर्थः । सत्यसंकल्पत्वं हि सृष्ट्यादिष्वप्रतिबद्धशक्तित्वं तच्च परमात्मन्येवोपपद्यते । 'सत्यकामः सत्यसंकल्पः' [ छा० ८ । १ । ५ ] इतिश्रुतेः । किंच । ये ये जीवधर्मास्ते सर्वेऽपि सर्वात्मकस्य ब्रह्मणोऽपि धर्माः । तथा च श्रुतिस्मृती—'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' [ श्वे० ४।३ ] इति ।

'सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति' [ श्वे० ३ । १६ ] इति ।

'अप्राणो ह्यमनाः शुभ्रः' [ मुण्ड० २ । १ । २ ] इति श्रुतिः शुद्धब्रह्मविषया । तस्माद्विवक्षितगुणोपपत्तेर्ब्रह्मैवोपास्यम् ।

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

तुशब्दोऽवधारणार्थः । पूर्वसूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्त्या ब्रह्मैवोपास्यम् । शारीरो जीवस्तु तेषां गुणानामनुपपत्तेर्नोपास्य इति सूत्रार्थः । विवक्षितगुणाश्च सत्यसं-

कल्पत्वादयः सत्यसंकल्पत्वं भाष्य उक्तम्—सत्यसंकल्पत्वं हि सृष्टिस्थितिलयेष्वप्रतिबद्धशक्तित्वमिति । तच्च परमात्मन्येवोपपद्यते न शारीरे ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च मनोमयत्वादिगुणको न शारीरः । कुतः । कर्मकर्तृव्यपदेशात्—'एतमितः प्रेत्याभिसंभविताऽस्मि' [ छा० ३ । १४ । ४ ] इति । एतमिति प्रकृतं मनोमयत्वादिगुणमीश्वरमुपास्यं कर्मत्वेन । न ह्येकस्मिञ्शारीरे कर्मभावः कर्तृभावश्चाऽऽश्रयेणोपपद्यते । तस्मान्न शारीर उपास्यः ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

इतश्च मनोमयत्वादिगुणः परमात्मैव न शारीरः । कुतः । शब्दविशेषात् । मनोमय इत्यादिप्रथमान्तशब्दस्य परमात्मप्रतिपादकस्य सत्त्वादित्यर्थः । समानप्रकरणे श्रुत्यन्तरे 'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः' [श०ब्रा० १० । ६ । ३ । २ ] इत्यादौ परमात्माभिधायको हिरण्मयः पुरुष इति विशिष्टः प्रथमान्तशब्दः । अन्तरात्मन्निति सप्तम्यन्तः शब्दः शारीरस्याभिधायको दृष्टः । इहापि प्रथमान्तः शब्दः परमात्मनोऽभिधायक इति तयोर्भेदोऽवगम्यते । तस्मान्न शारीर उपास्यः ॥ ५ ॥

## स्मृतेश्च ।

स्मृतिरपि शारीरपरमात्मनोर्भेदं दर्शयति—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया [भ० गी० १८।६१] इत्यादिका ।

ननु 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता' [ बृ० ३।७।२३] इत्यादिश्रुतिभिः 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' [ गी० १३।२ ] इत्यादिस्मृतिभिश्च जीवपरयोर्भेदो निषिध्यते तत्कथमुच्यते शारीरादन्यः परमात्मेति । अत्रोच्यते-'तत्त्वमसि' इत्युपदेशात्प्राक् कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते । गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारसमाप्तिः स्यादिति भाष्योक्तेः ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च* नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

ननु नात्र परमात्मोपास्यः । कुतः । अर्भकौकस्त्वात् । अर्भकमल्पमोको नीडं यस्य सोऽर्भकौकास्तस्य भावोऽर्भकौकस्त्वं तस्मादित्यर्थः । 'एष म आत्माऽन्तर्हृदये' [ छा०

---

* शान्नेतिचेदिति पाठ एतल्लिखितपुस्तके ।

३ । १४ । ३ ] इत्यल्पायतनत्वश्रवणादित्यर्थः । किंच, स्वशब्देन च ' अणीयान्व्रीहेर्वा यवाद्वा ' [ छा० ३ । १४ । ३ ] इत्यणीयस्त्वव्यपदेशाच्छारीर एवाऽऽराग्रमात्रो जीव इहोपदिश्यते न सर्वगतः परमात्मेति चेत् । अत्र समाधिः । नेति नायं दोष इत्यर्थः । निचाय्यत्वात् । तत्र हृदयपुण्डरीक एवमणीयस्त्वादिगुणविशिष्टस्येश्वरस्य निचाय्यत्वादुपास्यत्वादित्यर्थः । शालग्रामे विष्णुबुद्धिवद्धृदयपुण्डरीके परमात्मोपास्यत्वेनोपदिश्यते । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तो व्योमवदिति यथा सर्वगतमपि व्योम सूचीपाशाद्यपेक्षयाऽर्भकौकोऽणीयश्च व्यपदिश्यत एवं ब्रह्मापीति ॥ ७ ॥

## संभोगप्राप्तिरितिचेन्न वैशेष्यात् ॥ ८ ॥(१)

ननु व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसबन्धाच्चेतनत्वाविशेषाज्जीववत्सुखदुःखभवलक्षणस्य संभोगस्य प्राप्तिः स्यादिति चेन्न । कुतः । वैशेष्यात् । विशेष एव वैशेष्यं स्वार्थे ष्यञ् । जीवपरमात्मनोरत्यन्तविशेषादित्यर्थः । शारीरः कर्ता भोक्ता धर्माधर्मादिसाधनश्चेति तस्य संभोगप्राप्तिः । परमात्मा तु तद्विलक्षणः । अपहतपाप्मत्वादिगुणकत्वात् । तस्मान्न तस्य संभोगप्रसङ्गः । परमार्थतो जीवपरयोरैक्येऽपि न जीवसंबन्धि सुखदुःखादिकमीश्वरे प्रसज्यते । तस्यासङ्गस्वरूपत्वात् । नच तर्हि सुखलेपोऽपि न स्यादिति वाच्यम् । तस्य सुखस्य तत्स्वरूपत्वात् । ' आनन्दो ब्रह्म ' [ तै० ३ । ६ ] इति श्रुतेः । लोकेऽपि बिम्बप्रतिबिम्बधर्मयोरसांकर्यस्य दृष्टत्वात् । तत्संभोगाप्रसङ्गात्परमात्मैवोपास्यो न शारीर इति सिद्धम् ॥ ८ ॥ ( १ )

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीषु द्वितीयवल्ल्यवसाने पठ्यते—' यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ' [ क० १ । २ । २५ ] इति । अस्यार्थः— ब्राह्मणक्षत्रियोपलक्षण सर्वं जगद्यस्यौदनस्थानीय यस्य मृत्युश्चोपदंशस्थानीयः । स पुरुषो यत्र वर्तते तत्स्थानमिदमित्थमिति को वेद न कोऽपि जानातीत्यर्थः । अत्रोदनोपसेचनशब्दाभ्यां कश्चिद्भक्षकः प्रतीयते । स जीवोऽग्निरीशो वेति त्रेधा संदिह्यते । त्रयाणा जीवाग्निपरमात्मनां विशेषानवधारणात् । जीव इति तावत्प्राप्तम् । कुतः । ' तयोरन्यः पिप्पलं स्वाद्वत्ति ' [ मुण्ड० ३ । १ । १ ] इति जीवस्यात्तृत्वश्रवणात् । अथवा वह्निरत्ता भवेत् । ' अग्निरन्नादः ' [ बृ० १ । ४ । ६ ] इतिश्रुतेः । एवं प्राप्ते ब्रूमः । अत्रात्ता परमात्मा भवितुमर्हति । कुतः । चराचरग्रहणात् । चराचरयोः स्थावरजङ्गमयोरद्यत्वेन ग्रहणात् । नहि ब्रह्मक्षत्रोपलक्षितस्य कृत्स्नस्य जगतोऽत्तृत्व जीवाग्न्योः संभवति । ननु नेह ब्रह्मक्षत्रवाक्ये चराचरग्रहणमुपलभ्यते तत्कथं चराचर[ग्रह]णं हेतुत्वेन गृह्यत इति चेत् । नैष दोषः । ब्रह्मक्षत्रयोरोदनत्वेन मृत्यूपसेचनत्वेन च सर्वस्य प्राणिमात्रस्य कैमुत्यन्यायेना-

त्तृत्वस्य प्रतीयमानत्वात् । किंच ‘ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ’ [ क० १ । २ । १४ ] इतिधर्माधर्मकार्यकारण-कालत्रयातीते वस्तुनि नचिकेतसा पृष्टे सति ‘ यस्य ब्रह्म च ’ इति वाक्येन यम उत्तरं ददौ । उक्तधर्माधर्माद्यतीतत्वमीश्वरादन्यस्य न सभवति । तस्मादीश्वरोऽत्र प्रतिपाद्यः । ननु ‘ अनश्नन्नन्यो अभिचाकशीति ’ [ श्वे० ४ । ६ ] इतिश्रुत्येश्वरेऽत्तृत्वं निषिध्यत इति चेत् । अत्र समाधिः । अत्रात्तृत्व सर्वसहर्तृत्वं तस्य जन्मादिसूत्रे तटस्थब्रह्मलक्षणत्वात् । तस्मादीश्वर एवात्ता ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥ ( २ )

इतश्च परमात्मैवात्ता । कुतः । प्रकरणात् । कठवल्ल्या परमात्मनः प्रकृतत्वात् । ‘ न जायते म्रियते वा विपश्चित् ’ [ का० १ । २ । १८ ] इत्यादि । प्रकृतग्रहणं च न्याय्यम् । तस्मादत्ता परमात्मैवेति सिद्धम् ॥ १० ॥ ( २ )

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

कठवल्लीष्वेवं पठ्यते—‘ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ’ [ का० १ । ३ । १ ]। अस्यार्थः—सुकृतस्य फलभूते लोके ब्राह्मणादिशरीरे या गुहा हृदयपुण्डरीकं तां गुहां प्रविष्टौ । ऋतं कर्मफलं पिबन्तौ भुञ्जानौ छायातपौ जीवेश्वराविति ब्रह्मविदो वदन्ति ते के तत्राऽऽह ये पञ्चाग्नयो ये च त्रिणाचिकेता इति । परमे परार्धे इत्यनेनैतेषां द्विपरार्धा-युषोऽन्ते ब्रह्मणा सह विदेहकैवल्यप्राप्तिरुक्ता भवति । ‘ ते ब्रह्मलोके तु परान्तकाले परा-मृतात्परिमुच्यन्ति सर्वे ’ [ मुण्ड० ३ । २ । ६ ] इति श्रुतेः । ‘ ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ’ इति स्मृतेश्च । छाया-तपौ छायातपवत्परस्परविलक्षणौ । इदं वाक्यं विषयः । तत्र संशयः । किमिह बुद्धिजीवौ निर्दिष्टौ किं वा जीवपरमात्मानाविति । बुद्धिजीवाविति तावत्प्राप्तम् । ‘गुहां प्रविष्टौ’ इति तयोः परिच्छिन्नयोर्गुहाप्रवेशसंभवाज्जडाजडरूपत्वेन च्छायातपवत्परस्परविलक्षणत्वाच्चेति प्राप्ते ब्रूमः । गुहां प्रविष्टौ जीवपरमात्मानौ वेदितव्यौ । कुतः । हि यस्माद्द्वावप्यात्मानौ । ‘ ऋतं पिबन्तौ ’ इति कर्मफलभोगश्रवणादेकस्तावदात्मा । द्वितीयोऽप्यात्मा न्याय्य एव संख्या-श्रवणे च समानस्वभावेष्वेव लोके प्रतीतिदर्शनात् । अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वो न वा पुरुषः । ननु पिबन्ताविति द्विवचनेनेश्वरेऽपि कर्मफल-भोगः प्रसज्जेत । न चेष्टापत्तिः । ‘ अनश्नन्नन्यो अभिचाकशीति ’ इतिश्रुतिविरोधादिति चेत् । नैष दोषः । छत्रिणो गच्छन्तीत्यत्रैकेनापि च्छत्रिणा बहूनां छत्रित्वोपचारदर्शनात् । एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयातामिति भाष्योक्तेः । सर्वगतस्यापीश्वरस्य गुहाहि-

तत्वं हि श्रुतिस्मृतिप्रसिद्धम् । अनयोरौपाधिक एव भेदो न पारमार्थिकः । तस्माज्जीव-परमात्मानौ गुहा प्रविष्टौ ॥ ११ ॥

## विशेषणाच्च ॥ १२ ॥ ( ३ )

इतश्च जीवपरमात्मानौ गृह्येते । कुतः । विशेषणात् । अस्मिन्प्रकरणे जीवपरमात्मनो-रेव विशेषश्रवणादित्यर्थः । 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' [ का० १ । ३ । ३ ] इत्यादिना जीवविशेषणात् । तथा 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' [ का० १ । २ । १२ ] इतिपरमात्मविशेषणात् । प्रकरणं चेदं परमात्मनः । ब्रह्मविदो वदन्तीति वक्तृ-विशेषोपादानात् । किंच जीवेशावेव द्रष्टृद्रष्टव्यभावेनानन्तरमन्त्रो विशिनष्टि—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' [ मुण्ड० ३ । १ । २ ] इति । अत्र 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यु-क्तत्वान्मुक्तावपि भेदोऽस्त्विति न शङ्कनीयम् । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं विजा-नीयाद्विज्ञातारमरे केन विजानीयात्' । [ बृ० २ । ४ । १४ ] 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्' [ छा० ७ । २४ । १ ] 'ब्रह्म वेद ब्रह्मैव भवति' [ मुण्ड० ३ । २ । ९ ] इत्यादि श्रुतिसहस्रं ब्रह्मैक्यं जीवस्य प्रतिपादयति तद्विरुध्येत । तस्मात्संसारदशायामेवोपास्योपासनादिभेदो न मुक्ताविति भाष्ये विस्तरः । तस्माद्गुहा प्रविष्टौ जीवपरमात्मानाविति सिद्धम् । यत्तु कश्चिदाह—गुहा प्रविष्टाविति विष्णुरूपे वेदितव्ये । 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' ऋ० ८ । ६ । १६ ] इति श्रुतेः । घर्मा दीप्तौ त्रिवृतं तेजोबन्नात्मकं शरीरं समन्ताद्व्यापतु-र्व्याप्य स्थितौ । तयोर्जुष्टिं सेवां मातरिश्वा वायुर्जगामेति श्रुत्यर्थ इति । तदसत् । त्रिवृतं त्रयो वा इमे त्रिवृतो लोकाः' [ ऐ० आ० १ । १ । २ ] इत्याम्नानात् । तत्त्रैलोक्यं व्यापतुः स्वतेजोभिर्व्याप्तवन्तौ । तयोर्जुष्टिं प्रीतिं मातरिश्वा वायुर्जगामेति श्रुत्यर्थात् । तथा चानुक्रा-न्तम् । 'घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगती' इति । समन्ता समन्तौ सव्याप्तदिगन्तौ । घर्मा दीप्यमानावग्न्यादित्यौ । तन्मतेऽन्नमयादिपञ्चरूपो विष्णुः । इमौ द्वौ विष्णू अक्षिस्थश्चैक इत्यष्टाना विष्णूना मध्ये द्वयोरेव सेवाया वायोः स्वामिद्रोहतापत्तेश्च जीवस्यापि तदुपास्त्यभावे मोक्षाभावश्चेति दिक् ॥ १२ ॥ ( ३ )

## अन्तर उपपत्तेः ॥ १३ ॥

छान्दोग्यस्य चतुर्थाध्याये शिष्यमुपकोसलं सत्यकामो गुरुराह । तत्रायं वाक्यमेतत् । 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति' [ छा० ४ । १५ । १ ] इति तत्र चतुर्धा संशयः—किमयमक्षिस्थश्छायात्मोत जीवो वा कश्चिद्देवो वा

परमात्मा वेति । सर्वैर्दृश्यमानश्छायात्मेति तावत्प्राप्तम् । अक्ष्याधारदृश्यत्वयोस्तस्मिन्स्पष्टत्वात् । यद्वा जीवो भवितुमर्हति । स हि चक्षुषा रूपं पश्यश्चक्षुषि सन्निहितो भवति । आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति । अथवा देवतात्मा स्यात् । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् ।' [ ऐ० १ । २ ] 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' [ बृ० ५ । ५ ] इत्यादिश्रुतेः । तस्माच्छायात्मजीवदेवेषु यः कोऽपि तत्रास्त्यल्पस्थाननिर्देशात् । सर्वथा न परमात्मेति प्राप्ते ब्रूमः—अन्तरोऽक्षिमध्यस्थः परमात्मैव । कुत. । उपपत्तेः । आत्मत्वामृतत्वाभयत्वादीनामिहोपदिश्यमानानां परमात्मन्येवोपपत्तेरित्यर्थः ॥ १३ ॥

ननु सर्वगतस्य परमात्मनः कथ पुनरल्पकमक्षिस्थानमुपदिश्यत इत्याह—

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

ईश्वरस्य सर्वगतस्यापि स्वल्पमप्यक्षिस्थानमुपपद्यते । 'यः पृथिव्यां तिष्ठन्' [ बृ० ३ । ७ । ३ ] इत्यादिना बहूनि स्थानानि निर्दिष्टानि । तेषु चक्षुरपि निर्दिष्ट 'यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीर यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत.' [ बृ० ३ । ७ । १८ ] इति स्थानादिव्यपदेशात् । आदिग्रहणेन नामरूपमित्येवंजातीयकमपि निर्दिश्यमानं दृश्यते । 'इदन्द्रो ह वै नाम' [ ऐ० १ । ३ ] 'तस्योदिति नाम' [ छा० १ । ६ । ७ ] इत्यादिहिरण्यश्मश्रुरित्यादि रूप च । सर्वगतस्यारूपस्यानाम्नोऽपि ब्रह्मण उपासनार्थं स्थानविशेषो नामरूपनिर्देशश्च न विरुध्यते । शालग्राम इव विष्णोः । तस्मादक्षिस्थः पुरुषः परमात्मैव ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

परमात्मैवात्र प्रकरण उपदिश्यते । कुतः । सुखविशिष्टाभिधानादेव । चो हेत्वन्तरप्रदर्शनार्थः । स चास्मिन्नेव सूत्र उक्तः । एवकारेण नात्र सशय. कार्य इति सूचयति । सुखविशिष्ट हि ब्रह्म यद्वाक्योपक्रम उपक्रान्त प्राणो ब्रह्म क ब्रह्म ख ब्रह्मेति तदेवेहाक्षिपुरुषत्वेनाभिहितम् । प्रक्रान्तग्रहणस्यैव न्याय्यत्वात् । कशब्दस्तु लोके वैषयिके सुखे प्रसिद्धः । तथा खशब्दो भूताकाशे प्रसिद्धः । यदि क ब्रह्मेत्येतावदेव गृह्येत तदा वैषयिकं सुख ब्रह्मेति प्रतीतिः स्यात् । तथा ख ब्रह्मेत्येतावदेवोच्येत तदा भूताकाश ब्रह्मेति प्रतीतिः स्यात् । परस्परविशेषितौ कखंशब्दौ पूर्णसुखात्मकं ब्रह्मेति गमयतः । द्वितीयब्रह्मशब्देऽनुपादीयमाने सुख ब्रह्मगुण इति प्रतीतिः स्यात् । सा मा भूदिति तद्ग्रहणम् । तेन सुखस्वरूपं ब्रह्मेत्यर्थः सिध्यति । तदेव वाक्योपक्रमे सुखविशिष्ट ब्रह्मोपदिष्ट तदेवाक्षिपुरुषत्वेनोपासार्थमुपदिश्यत इति सिद्धम् ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्षिपुरुषः परमात्मा । कुतः । श्रुतोपनिषत्कगत्यभिधानात् । श्रुताऽभ्यस्तोपनिषद्ब्रह्म-

विद्या येन स श्रुतोपनिषत्कः । तस्य या वक्ष्यमाणा गतिस्तस्या अभिधानादित्यर्थः । 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजायन्ते एतद्वै प्राणानामायतनमेतदमृतमेतदभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते ' [ प्र० १ । १० ] इति । स्मृतावपि—

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ' [ भ० गी० ८ । २४ ] इति ।

ब्रह्मविदो या गतिर्देवयानाख्या सैवेहाक्षिपुरुषविदोऽप्यभिधीयते । तस्मादक्षिपुरुषः परमात्मा ॥ १६ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥ ( ४ )

किंचेतरश्छायापुरुषादिरक्षिपुरुष इति नायं पक्षः । कुतः । अनवस्थितेः । उपासकस्य सर्वत्राक्षिणि च्छायासंपादकस्य पुरुषान्तरस्यानवस्थितेः । असंनिधानादित्यर्थः । न हि कश्चिदुपासकः कंचन पुरुषं छायासंपादकं स्वचक्षुःसमीपे संनिधाप्योपास्त इति कल्पयितुमिति भावः । असंभवाच्च । छायापुरुषादौ वामनीत्वभामनीत्वसंयद्वामत्वामृतत्वादीनां गुणानामसंभवादित्यर्थः । वामनीत्वं कामप्रापकत्वम् । भामनीत्वं जगद्भासकत्वम् । संयद्वामत्वं प्राप्तकामत्वम् । तस्मादाक्षिपुरुषः परमात्मैव नेतरश्छायापुरुषादिरिति सिद्धम् ॥१७॥ ( ४ )

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

बृहदारण्यके पञ्चमाध्याये याज्ञवल्क्य उद्दालकं प्रत्याह—तत्रत्यं वाक्यमेतत्—' य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति ' इत्युपक्रम्य श्रूयते । ' यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ' [ बृ० ३ । ७ । १ ] इत्यादि । तत्रैवाधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयिताऽन्तर्यामी श्रूयते । स किमधिदैवाद्यभिमानी देवो वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी वा किंवा परमात्मेति त्रेधा संशयः । कश्चिद्देवोऽन्तर्यामी भवितुमर्हति । तादृगपुण्यसंचयस्य पूर्वमुपार्जितत्वात् । यद्वाऽन्तर्यामी कश्चिद्योगी भवितुमर्हति । तादृशेन तपसा प्राप्ताणिमाद्यैश्वर्यत्वात् । न परमात्मा तस्य विकाररूपप्रपञ्चान्तर्यामित्वानुपपत्तेरिति प्राप्ते ब्रूमः—परमात्मैवान्तर्यामी न कश्चिद्देवो न कश्चिद्योगी । कुतः । तद्धर्मव्यपदेशात् । तस्य परमात्मनो ये धर्मा आत्मत्वामृतत्वनियन्तृत्वज्ञेयत्वादयस्तेषां व्यपदेशान्निर्देशादित्यर्थः । 'एष त आत्माऽन्तर्याम्यमृतः ' [ बृ० ३ । ७ । ३ ] इत्यन्तर्यामिणो जीवतादात्म्यममृतत्वं च श्रूयते । तद्देवतापरिग्रहे योगिपरिग्रहे वा कथमुपपद्येत । तावतैव चारितार्थ्येऽस्य मोक्षप्रतिपादकप्रकरणस्य वैयर्थ्यप्रसङ्गः । तस्मादन्तर्यामी परमेश्वरः ॥ १८ ॥

प्रधानस्यान्तर्यामित्वं निराकरोति—

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

तर्हि स्मार्तं सांख्यस्मृतिकल्पितं प्रधानमन्तर्यामि भवतु । तस्यापि सर्वविकारकारणत्वान्नियन्तृत्वमुपपद्यत इति प्राप्ते ब्रूमः । नच स्मार्तमन्तर्यामि भवितुमर्हति । कस्मात् । अतद्धर्माभिलापात् । तच्छब्देन प्रधानम् । न तदतत् । प्रधानभिन्नपरमात्मा । तस्य ये धर्मास्तेषामभिलापादभिधानादित्यर्थः । ' अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता ' [ बृ०३ । ७ । २३ ] इतिवाक्यशेषे श्रूयते । तथाऽऽत्मत्वमपि पूर्वं प्रक्रान्तम् । एतेषामात्मत्वद्रष्टृत्वश्रोतृत्वादिधर्माणां प्रधानेऽभिधानाभावादित्यर्थः । अचेतनस्य द्रष्टृत्वाद्यसंभवाच्च । तस्मान्न प्रधानमन्तर्यामीति ॥ १९ ॥

ननु शारीरोऽन्तर्यामी भवतु तत्राऽऽह—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ ( ५ )

शारीरो जीवोऽन्तर्यामी । चेतनत्वात् । द्रष्टृत्वश्रोतृत्वमन्तृत्वादीनां धर्माणां तस्मिन्नुपपत्तेश्चेति प्राप्ते ब्रूमः । नेति पूर्वसूत्रादनुवर्तते । शारीरोऽन्तर्यामी नेष्यते । कुतः । हि यस्मादुभये भेदेनैनमधीयते तस्माद्धेतोरित्यर्थः । उभये काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदाधारत्वेन नियम्यत्वेन चाधीयते पठन्ति । ' यो विज्ञाने तिष्ठन् ' [ बृ० ३ । ७ । २२ ] इति काण्वाः । ' य आत्मनि तिष्ठन् ' इति माध्यंदिनाः । अत्राऽऽत्मविज्ञानशब्दौ शारीरस्य वाचकौ । तथाच विज्ञानात्मशब्दाभ्यां वाच्यस्य शारीरस्यान्तर्यामीश्वरस्तस्माद्भिन्न एव । ननु कथ पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते शारीर एक ईश्वरश्चैक इति । नच द्वौ द्रष्टारावासातामिति वाच्यम् । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता [ बृ० ३ । ७ । २३ ] इत्यादिश्रुतिविरोधादिति चेत् । नैष दोषः । उपाधिनिमित्तकोऽय शारीरान्तर्यामिणोर्भेदो न पारमार्थिकः । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ' [ बृ० २ । ४ । १४ ] इतिश्रुतिरविद्याविषये सर्वव्यवहार दर्शयति । ' यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत् ' [ बृ० २ । ४ । १४ ] इतिश्रुतिर्विद्याविषये सर्वव्यवहार वारयति ॥ २० ॥ ( ५ )

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ ( ६ )

मुण्डकोपनिषदि पठ्यते—' अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्र तदपाणिपादम् । नित्य विभु सर्वगत सुसूक्ष्म तदव्यय यद्भूतयोनिं परिपश्यन्ति धीराः ' [ मुण्ड० १ । १ । ५ । ६ ] इति श्रूयते । तत्र सशयः—किमयमदृश्यत्वादिगुणको भूतयोनिः प्रधान वा शारीरो वा परमात्मा वेति । प्रधान भूतयोनिरिति तावत्प्राप्तम् । योनिशब्दस्योपादानवाचित्वात् । प्रधानस्य विश्वाकारेण परिण-

ममानस्योपादानत्वात् । अदृश्यत्वादिधर्माणां प्रधाने संभवाच्च । यद्वा भूतयोनिः शारीरः स्यात् । योनिशब्दस्य निमित्तकारणवाचित्वात् । धर्माधर्मद्वारेण शारीरस्यापि भूतानि प्रति निमित्तकारणत्वादितिप्राप्तेऽभिधीयते—योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमात्मैव । कुतः । धर्मोक्तेः । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ' [ मुण्ड० १ । १ । ९ ] इत्यादिपरमात्मधर्मोक्तेः । सामान्याकारेण सर्वज्ञत्व विशेषाकारेण सर्ववित्त्व पर्यालोचनात्मक तपश्चेत्तादृशस्य ब्रह्मलिङ्गस्य कीर्तनादित्यर्थ. । नच जीवस्यात्र भूतयोनित्वं युक्तम् । उक्तधर्माणां तत्रासंभवात् ॥ २१ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतश्च परमात्मा भूतयोनिर्नेतरौ प्रधानजीवौ । कुतः । विशेषणभेदव्यपदेशाभ्याम् । भेदेन व्यपदेशो भेदव्यपदेशः । विशेषण च भेदव्यपदेशश्च ताभ्यामित्यर्थः । विशेषणं तावत्—' दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः ' [ मु० २ । १ । २ ] इत्यादि । नह्येतद्दिव्यत्वादिविशेषणं देहाध्यासवतो जीवस्य संभवति । भेदव्यपदेशोऽपि—' अक्षरात्परतः परः ' इति । अक्षरशब्दवाच्यादव्याकृतात्पर इति भेदेन व्यपदेशात् । अयमर्थः—अव्याकृतं नामरूपबीजशक्तिरूपं भुतसूक्ष्मं परमात्माश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परं तस्मात्परतः पर इति भेदेन व्यपदेशादिति । तस्मात्परमात्मा भूतयोनिः ॥ २२ ॥

## रूपोपन्यासाच्च ॥ २३ ॥ ( ६ )

किंच । परमात्मा भूतयोनिः । कुतः । रूपोपन्यासात् । तस्यैव भूतयोनेः सर्वविकारात्मक यद्द्रूप तस्योपन्यासात्कीर्तनादित्यर्थः ।

' अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।

वायुः प्राणो हृदय श्चौतमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ' [ मु० २ । १ । ४ ] इति ।

एतत्सर्वं परमात्मन एवोचित सर्वविकारकारणत्वात् । न शारीरस्य तनुमहिमत्वात् । नापि प्रधानस्य सर्वभूतान्तरात्मत्वासंभवात् । तस्मात्परमात्मैव भूतयोनिर्न प्रधानजीवाविति सिद्धम् ॥ २३ ॥ ( ६ )

## वैश्वानरः साधारणशब्दविशेषात् । ॥ २४ ॥ ( ७ )

छान्दोग्यस्य पञ्चमाध्याये वैश्वानरविद्यायामाम्नायते—' को न आत्मा किं ब्रह्म ' [छा० ५ । ११ । १ ] इति । ' आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि [ छा० ५ । ११ । ६ ] ' इत्युपक्रम्य ' यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वा-

त्मस्वन्नमत्ति ' [ छा० ९ । १८।१ । ] 'तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य* मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ' [ छा० ५ । १८ । २ ] इति वाक्य विषयः । तत्र विशयः—किमयं वैश्वानरो जाठराग्निरुपदिश्यते किं वा भूताग्निरुत तदभिमानिनी देवताऽथवा परमात्मेति । वैश्वानर-शब्दस्य परमात्मनोऽन्यस्मिन्प्रसिद्धत्वाज्जाठरादिरेव वैश्वानर इति तावत्प्राप्तम् । ' अयमग्नि-र्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते ' [ बृ० ९ । ९ । १ ] इत्यादौ जाठरेऽग्नौ प्रयोगदर्शनात् । भूताग्निर्वा स्यात् । तत्रापि प्रयोगदर्शनात् ' विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ' [ ऋ० स० १० । ८८ । १२ ] इति । 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' [ ऋ० सं० १ । ९८ १ ] इत्याद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेताया प्रयोगदर्शनादिति पक्षत्रयप्राप्तिः । ' को न आत्मा किं ब्रह्म ' इत्युपक्रम आत्मशब्दप्रयोगस्य जीवे रूढत्वात्तद्वशेन वैश्वानरशब्दोऽपि नेयो जीववैश्वानरयोः संनिकर्षादिति प्राप्ते ब्रूमः—वैश्वानरः परमात्मैव । कुतः । साधारण-शब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषस्तस्मात् । वैश्वानरशब्दस्त्रयस्य साधारण आत्मशब्दश्च द्वयस्य । तथाऽपि विशेषदर्शनादित्यर्थः । ' तस्य ह वा एतस्याऽऽ-त्मनो वैश्वानरस्य मूर्धैव सुतेजाः ' इत्यादिना द्युलोकाद्यशेषजगतो वैश्वानरावयवत्वं च श्रूयते । नचैतत्परमात्मनोऽन्यत्र सभवति । किं च ' को न आत्मा किं ब्रह्म ' इत्युपक्रमः परमात्मानमेव गमयति । तस्मात्परमेश्वर एव वैश्वानरः ॥ २४ ॥

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

किंच परमेश्वर एव वैश्वानरः । इतिशब्दो हेतौ । यस्मादेवं स्मर्यते तस्मादित्यर्थः । ' यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ' इति । एतस्याः स्मृतेरुदाहृतश्रुतिरेव मूलम् । मूलान्तरकल्पने मानाभावात् । यस्मादिदं ' यस्याग्निरास्यं द्यौर्मूर्धा ' इत्यादि स्मर्यमाण रूपं मूलभूता श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेऽनुमानं लिङ्गं गमकं स्यादित्यर्थः ॥ २५ ॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्यु-पदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

ननु परमेश्वरो न वैश्वानरः । कुतः । शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च । शब्दस्तावद्वै-श्वानरशब्दो न परमेश्वरे संभवति । अर्थान्तरे रूढत्वात् । ' स एषोऽग्निर्वैश्वानरः ' [ श० प० ब्रा० १० । ६ । ११ ] इति । आदिशब्दात् ' हृदयं गार्हपत्यः ' [ छा० ५ ।

* एतल्लिखितपुस्तके—स्य द्युमूर्धेतिपाठः ।

१८ । २ ] इत्याद्यग्नित्रेताप्रकल्पनम् । ' तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् ' [ छा० ५ । १९ । १ ] इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनमेतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः । किंच जाठरस्य वैश्वानरस्यान्तःप्रतिष्ठानमपि श्रूयते—' पुरुषेऽन्तः प्रतिष्ठितं वेद ' इति । तज्जाठरे संभवति । अथ वा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यायं वैश्वानरनिर्देशो भविष्यति । तस्यापि द्युलोकादिसबन्धो मन्त्रवर्णादवगम्यते । तथा च मन्त्रवर्णः—' यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम् ' [ ऋ० सं० १० । ८८ । ३ ] इत्यादिः । अथवा तदभिमानिन्याः कस्याश्चिद्देवताया वा निर्देशो भविष्यति । तस्या ऐश्वर्ययोगाद्द्युलोकाद्यवयवत्वसंभवात् । तस्मान्न परमात्मा वैश्वानर इति प्राप्ते ब्रूमः । परमात्मा वैश्वानरः । कुतः । तथा दृष्ट्युपदेशात् । तथा जाठररूपेण परमेश्वरस्य दृष्टेरुपासनाया उपदेशादित्यर्थः । ' मनो ब्रह्मेत्युपासीत ' [ छा० ३ । १८ । १ ] इत्यादिवत् । ननु मुख्य एव जाठरोऽत्रोपदिश्यतामित्यत आह—असंभवात् । ' मूर्धैव सुतेजाः ' इत्यादिविशेषस्य जाठरेऽसभवादित्यर्थः । किंच पुरुषमप्येन वैश्वानर वाजसनेयिनोऽधीयते—' स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद [ श० प० ब्रा० १० । ६ । १ । ११ ] इति । परमेश्वरस्य सर्वात्मत्वात्पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं चोभयमप्युपपद्यतेतराम् । जाठरस्य तु पुरुषेऽन्तःप्रतिष्ठितत्वं स्यान्न तु पुरुषत्वम् । तस्मात्परमात्मा वैश्वानरः ॥ २६ ॥

## अत एव न देवताभूतं च ॥ २७ ॥

देवता च भूतं च देवताभूतम् । द्वन्द्वैकवद्भावः । भूताग्न्यभिमानिनी देवता भूताग्निर्वा नैव वैश्वानरः । कुतः । अत एव पूर्वोक्तेभ्य एव हेतुभ्यः । भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पना नोपपद्यते । विकारस्य विकारान्तरात्मत्वासभवात् । ' यो भानुना ' इति मन्त्रस्तत्प्रशंसाभिव्याप्तिमेवाऽऽह न तु द्युलोकाद्यवयवत्वम् । देवताया अपीश्वराधीनैश्वर्यवत्त्वान्न द्युमूर्धत्वादिसंभवः ॥ २७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं जाठराग्निप्रतीको वा जाठराग्न्युपाधिको वा परमात्मोपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्या साक्षादपि परमात्मोपासने न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । पूर्वापरपर्यालोचनया प्रकृतपरमात्मपरिग्रहे निश्चिते तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते । विश्वश्चासौ नरश्चेति वा विश्वेषां नर इति वा विश्वे नरा अस्येति वा विश्वानरः सर्वात्मकः पुरुष इति फलितार्थः । विश्वानर एव वैश्वानरः । स्वार्थे एव तद्धितो राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयेण परमात्मविषय एव भविष्यति । ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचन विरुध्येतेति चेन्न । सर्वात्मकस्य परमेश्वरस्यान्तःप्रतिष्ठितत्वसंभवात् । तथा च वाजसनेयिश्रुतिरपि

पूर्वोक्ता परमात्मपरिग्रहे संगच्छते न जाठराग्निपरिग्रहे । तस्याप्रकृतत्वात् । तस्माद्वैश्वानरः परमात्मा ॥ २८ ॥

ननु कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यते तत्राऽऽह—

**अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥**

व्यापकस्यापि परमेश्वरस्य प्रादेशमात्रत्वमुपपद्यते । कुतः । अभिव्यक्तेः । उपासकानां प्रयोजनाय परमात्मा हृदयादिपूपलब्धिस्थानेषु प्रादेशपरिमाणोऽभिव्यज्यते । अतः परमेश्वरे सर्वात्मकेऽपि प्रादेशश्रुतिरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

**अनुस्मृतेर्बादरिः ॥ ३० ॥**

प्रादेशमात्रहृदयमात्रप्रतिष्ठितेन मनसाऽनुस्मृतेर्ध्यानात्प्रादेशमात्रः परमेश्वर उच्यते । यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् । यद्यपि यवेषु स्वगतमेव परिमाण प्रस्थसंबन्धाद्व्यज्यते नचेह परमेश्वरे परिमाणमस्ति यद्धृदयसबन्धादभिव्यज्येत । तथाऽपि यथाकथंचिद्ध्यानाय प्रादेशमात्रश्रुतिप्रमाणादभ्युपगन्तव्यमिति बादरिराचार्यो मन्यते ॥ ३० ॥

**संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥**

मूर्धप्रभृतिचुबुकपर्यन्ते प्रादेशमात्रे वैश्वानरस्योपास्यत्वप्रतिपादनात्प्रादेशमात्रत्वं संपन्नम् । ततः प्रादेशमात्रसंपत्तेः प्रादेशप्रमाणश्चिन्तनीय इति जैमिनिर्मन्यते । बादरिस्तु हृदयप्रदेशं प्रादेशप्रमाणमाह—आश्मरथ्योहृदयमूर्धादिचिबुकयोरन्यतरप्रदेशमाहेति भेदः । जैमिनिरस्मिन्नर्थे श्रुत्यन्तरसंवादमाह—तथाहि दर्शयतीति । तथाहि समानप्रकरणं वाजसनेयिब्राह्मणे द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चिबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसपत्तिं परमेश्वरस्य दर्शयति । तच्च ब्राह्मणं भाष्येऽनुसंधेयम् ॥ ३१ ॥

**आमनन्ति चैनमस्मिन् ॥ ३२ ॥ (७)**

किंचास्मिन्मूर्धचिबुकान्तराले प्रादेशमात्रमेनं परमात्मान जाबाला आमनन्ति । य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः । सोऽविमुक्तः कस्मिन्प्रतिष्ठितः । वरणायां नास्यां च मध्ये प्रतिष्ठित इति । कैव वरणा कैव नासीति । सर्वाणीन्द्रियकृतानि पापानि वारयति नाशयति । तत्र चेमामेव नासिका वरणा नासीति निरुच्य पुनरप्यामनन्ति—कतमद्वाऽस्य स्थानं भवति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्युलोकस्य परस्य च संधिर्भवतीति । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः । तस्मात्परमेश्वर एव वैश्वानर इति सिद्धम् ।

इति श्रीब्रह्मसूत्रविवृतौ प्रथमाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

मुण्डकोपनिषदि श्रूयते—' यस्मिन्द्यौः पृथिवी चान्तरिक्षमोत मनः सह प्राणैश्च सर्वैः। वैक जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ' [ मु० २ । २ । ५ ] ो । इदं वाक्य विषयः। द्यौश्च भूश्च द्युभुवौ ते आद्री यस्य तद्द्युभ्वादि यदेतदस्मिन्वाक्ये : पृथिव्यन्तारिक्षं मनः प्राण इत्येवमात्मकं जगदोतत्वेन निर्दिष्टं तस्याऽऽयतन किंचिदव- यते । तत्र संशयः—किं द्युभ्वाद्यायतन प्रधानं वा वायुर्वाऽथवा भोक्ता वाऽऽहोस्विदी- इति । तत्र तावत्प्रधान स्मृतिप्रसिद्ध परिग्रहीतव्य तस्य सांख्यस्मृतिप्रसिद्धया सर्वा- त्वावगमात् । अथ वा श्रुतिप्रसिद्धो वायुः स्यात् । ' वायुर्वै गौतम तत्सूत्रं वायुना वै नम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि भवन्ति ' [ बृ० । ७ । २ ] इति वायोरपि जगदायतनत्वश्रवणात् । शारीरो वा स्यात् । तस्य भोक्तृ- द्भोग्य प्रत्यायतनत्वोपपत्तेः । एव विषये प्राप्ते ब्रूमः—द्युभ्वाद्यायतनं ब्रह्म भवितुमर्हति । ः स्वशब्दात् । स्वस्य ब्रह्मणः प्रतिपादको यः शब्द आत्मशब्दस्तस्मादित्यर्थः । मशब्देन प्रधानसूत्रात्मवायुपक्षौ प्रत्युक्तौ भवतः । तयोरात्मशब्दस्यासंभवात् । भोक्त्रा- ारिग्रहोऽपि न युक्तः । कुतः । स्वशब्दात् । सद्ब्रह्माऽऽत्मेति स्वशब्दः । क्वचित्सच्छब्देन मण आयतनत्वं श्रूयते—' सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ' छा० ६ । ८ । ४ ] इत्यादौ । क्वचिद्ब्रह्मशब्देन 'ब्रह्मैवेदममृत पुरस्तात्पश्चाद्ब्रह्म दक्षिण- ोत्तरेण ' [ मु० २ । २ । ११ ] इत्यादौ । क्वचिदात्मशब्देन—आत्मा वा इदमेक ग्र आसीत् ' [ ऐ० १ । १ ] इत्यादौ । प्रकृते ' तमेवैक जानथ आत्मानमन्या वो विमुञ्चथ ' [ मुण्ड० २ । २ । ५ ] इत्यात्मशब्दश्रवणात् । तस्माद्द्युभ्वाद्यायतनं ब्रह्म ॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

किंच द्युभ्वाद्यायतन परमेव ब्रह्म । कुतः । मुक्तोपसृप्यव्यपदेशात् । मुक्तैरुपसृप्यं गम्यं क्तोपसृप्यम् । भावप्रधानो निर्देशः । मुक्तोपसृप्यत्वस्य व्यपदेशात्कथनादित्यर्थः। मुक्तैरुप यम् । देहादिष्वात्मबुद्धिरविद्या । ततस्तत्पूजनादौ रागः । तत्परिभवादौ द्वेषः । तदुच्छे- र्शनाद्भयं मोहश्च। एतेभ्यो मुक्तैरुपसृप्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति।

' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ' ॥ [ मु० २ । २ । ८ ]

इत्युक्त्वोक्तम्—' तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ' [ मु० ३ । । ८ ] इति । ब्रह्मण एव मुक्तोपसृप्यत्व शास्त्रे प्रसिद्धम् । यथा ' यदा सर्वे प्रमुच्यन्ते

कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ' [ बृ० ४ । ४ । ७ ] इत्येवमादौ । तस्मादपि द्युभ्वाद्यायतन परं ब्रह्म ॥ २ ॥

## नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमानं सांख्यपरिकल्पितं प्रधान न तद्द्युभ्वाद्यायतनम् । कुतः । अतच्छब्दात् । तस्यानुमानस्य शब्दस्तच्छब्दः । न तच्छब्दोऽतच्छब्दस्तस्मादतच्छब्दात् । न ह्यत्राचेतनस्य प्रधानस्य द्युभ्वाद्यायतनत्वप्रतिपादकः कश्चन शब्दोऽस्ति येन प्रधान जगदायतनत्वेनावगम्येत । तद्विपरीतस्य चेतनस्य प्रतिपादकः शब्दोऽस्ति 'यः सर्वज्ञः सर्ववित्' [ मु० १ । १ । ९ ] इत्यादि । ' तमेवैकं जानथ आत्मानम् ' [ मु० २ । २ । १ ] इत्यनेन प्रधानप्रतिषेधाच्च ॥ ३ ॥

## प्राणभृच्च ॥ ४ ॥

चकारान्नेत्यतच्छब्दादिति चानुवर्तते । प्राणभृज्जीवो न द्युभ्वाद्यायतनम् । अतच्छब्दादेव । यद्यपि जीवस्याप्यात्मत्व सभवति तथाऽप्युपाधिपरिच्छिन्नस्य तस्य सर्वज्ञत्वाद्यसंभवान्न प्राणभृद्द्युभ्वाद्यायतनम् । पृथग्योगकरणमुत्तरार्थम् ॥ ४ ॥

## भेदव्यपदेशात् ॥ ५ ॥

इतश्च प्राणभृन्न द्युभ्वाद्यायतनं भवितुमर्हति । कुतः । भेदव्यपदेशात् । ' तमेवैकं जानथ आत्मानम् ' [ मु० २ । २ । ५ ] इतिज्ञेयज्ञातृभावेन भेदव्यपदेशादित्यर्थः । प्राणभृतो मुमुक्षुत्वेन ज्ञातृत्वात् । परिशेषाज्ज्ञेय परं ब्रह्म । तदेव द्युभ्वाद्यायतनं न प्राणभृदिति गम्यते ॥ ५ ॥

## प्रकरणात् ॥ ६ ॥

द्युभ्वाद्यायतनं परं ब्रह्मैव । कुतः । प्रकरणात् । भवतीदं प्रकरणं परमात्मनः । ' कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ' [ मु० १ । १ । ३ ] इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यात् । सर्वस्य प्रपञ्चस्य ब्रह्मविवर्तत्वात्तस्मात्परमात्मैव द्युभ्वाद्यायतनम् ॥ ६ ॥

## स्थित्यदनाभ्यां च ॥ ७ ॥ ( १ )

इतश्च परमात्मा द्युभ्वाद्यायतनम् । कुतः । स्थित्यदनाभ्याम् । स्थितिश्चादनं च स्थित्यदने ताभ्याम् । पञ्चमीद्विवचनम् । द्युभ्वाद्यायतनं प्रकृत्य ' द्वा सुपर्णा सयुजा सखाया ' [ मु० ३ । १ । १ ] इत्यत्र स्थित्यदने निर्दिश्येते । ' तयोरन्यः पिप्पलं स्वाद्वत्ति ' इत्यदनम् । ' अनश्नन्नन्योऽभिचाकशीति ' इत्यौदासीन्येनावस्थानम् । ताभ्यां

स्थित्यदनाभ्यां चेश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्त-तस्तस्य प्रकृतस्य क्षेत्रज्ञात्पृथग्वचनमत्रकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिक-मसंबद्धं स्यात् । नचेश्वरात्क्षेत्रज्ञस्य पृथग्वचनमाकस्मिकमसबद्धं स्यादिति वाच्यम् । कर्तृ-त्वभोक्तृत्वादिना प्रतिशरीर भिन्नस्य तस्य लोके प्रसिद्धत्वात् । तस्मात्परमात्मैव द्युभ्वाद्या-यतनम् ॥ ७ ॥ ( १ )

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

छान्दोग्यस्य सप्तमाध्याये नारदं प्रति सनत्कुमारो नामादीन्युत्तरोत्तरं भूयांसि बहूनि तत्त्वान्युपदिश्यान्ते निरतिशय भूमानमुपदिशति—' भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् ' [ छा० ७ । २३ । २४ ] इत्यादि । तत्र संशयः—किं प्राणो भूमा स्यादाहोस्वित्परमात्मेति । प्राण इति तावत्प्राप्तम् । कुत. । प्रश्नप्रत्युक्तिवर्जनात् । यथा हि —' अस्ति भगवो नाम्नो भूयः ' [ छा० ७ । १ । ५ ] इति प्रश्नः । ' वाग्वाव नाम्नो भूयसी ' [ छा० ७ । २ । १ ] इति प्रतिवचनम् । तथा ' अस्ति भगवो वाचो भूयः ' [ छा० ७ । २ । २ ] इत्यादिषु तत्त्वेषु पुनःपुनः ' अस्ति भगवो भूयः ' इति नारदः पृच्छति सनत्कुमारश्च ' अस्ति ' इति प्रतिवक्ति । एवं च प्रश्नप्रतिवचनपूर्वकत्वेनैव नामादीनि प्राणपर्यन्तानि तत्त्वान्युपदिश्य ' प्राणो वा आशाया भूयान् ' [ छा० ७ । १५ । १ ] इत्यादिना प्राणमेव भूयासमुक्त्वा प्राणस्योपरि विनैव प्रश्नप्रतिवचनाभ्यां भूमानमवतारयति । अतः प्राणभूम्नोर्मध्ये विच्छेदकस्याभावात्प्राण एव भूमा । किंच ' एष तु वा अतिवदति यः सत्येनातिवदति ' [ छा० ७ । १६ । १ ] इति प्राणतत्त्वविदश्चातिवादित्वनामकमुत्कर्ष-मभिधाय प्रकरणविच्छेदकाशङ्कानिवृत्तये तदेवातिवादित्वमनुवर्त्य भूमानमुपदिशन् प्राणभूम्नोरभेदं दर्शयति । किंच सुषुप्तौ दर्शनश्रवणादिव्यवहारनिवृत्तिदर्शनात्संभवति प्राणस्यापि ' यत्र नान्यत्पश्यति ' [ छा० ७ । २३ ] इत्येतल्लक्षणम् । यच्च ' यो वै भूमा तत्सुखं यो वै भूमा तदमृतम् ' [ छा० ७ । २३ ] इति च तदुभयमपि प्राणस्याविरुद्धम् । ' प्राणो वा अमृतम् ' [ कौषी० ३ । २ ] इति श्रुतेः । सुषुप्तिसुखं च प्राणजन्य भूमाऽत्र परमात्मैव । कुतः । संप्रसादादध्युपदेशात् । सम्यक्प्रसीदत्यस्मि-न्निति संप्रसादः सुषुप्तिस्थानम् । सुषुप्त्यवस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभि-प्रेयते । प्राणादूर्ध्वं भूम्न उपदेशादित्यर्थः । अयमर्थः—' एष तु वा अतिवदति यः सत्येनातिवदति ' इत्यत्रातिवादित्वहेतु प्राणोपासनं तुशब्देन व्यावर्त्य मुख्यातिवादित्वहे-तोर्ब्रह्मणः सत्यशब्देन पृथगुपक्रमात् । सत्यं परं ब्रह्मोच्यते । परमार्थरूपत्वात् । ' सत्यं

ज्ञानमनन्तं ब्रह्म ' [ तै० २ । १ ] इति श्रुत्यन्तरात् । तथा परमात्मोपक्रमे ' तरति शोकमात्मवित् ' [ छा० ७ । १ । ३ ] इति वेद्यतया परमात्मोच्यते । तथा ' यत्र नान्यत्पश्यति ' इति द्वैतनिषेधेन भूम्नो लक्षणमभिधीयते । एवंचाऽऽत्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति । नच प्राण एवेहाऽऽत्मा विवक्षित इति वाच्यम् । मुख्यया वृत्त्या प्राणस्याऽऽत्मत्वासंभवात् । परमात्मज्ञानादन्यत्र शोकानिवृत्तेश्च । तस्माद्भूमा परमात्मैव भूमा ॥ ८ ॥ ( १ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥ ( २ )

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते । ' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ' [ छा० ७ । २४ । १ ] इतिदर्शनादिव्यवहाराभावो जीवब्रह्मैक्यलक्षणोऽवगम्यते ' यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत् ' [ बृ० ४ । ५ । १५ ] इत्यादिश्रुत्यन्तरात् । ' यो वै भूमा तत्सुखं नाल्पे सुखम् ' [ छा० ७ । २३ । १ ] इति भूम्नः सुखरूपत्वं विवक्षयोक्तम् । ' आनन्दो ब्रह्म ' [ तै० ३ । ६ ] इतिश्रुत्यन्तरात् । ' यो वै भूमा तदमृतम् ' [ छा० ७ । २४ ] इति । एते चान्ये च श्रूयमाणा धर्माः परमात्मन्येवोपपद्यते । तस्मात्परमात्मैव भूमेति सिद्धम् ॥ ९ ॥ ( २ )

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

बृहदारण्यके पञ्चमाध्याये गार्गी याज्ञवल्क्यं पृच्छति—' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम् ' [ बृ० ३ । ८ । ७ । ८ ] इत्यादि । तत्राक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति संशयः । वर्ण इति तावत्प्राप्तम् । ' येनाक्षरसमाम्नायम् ' इत्यादौ वर्णेऽक्षरप्रसिद्धेः । ' ओंकार एवेदं सर्वम् ' [ छा० २ । २३ । ४ ] इत्यादौ श्रुत्यन्तरे वर्णस्याप्युपास्यत्वसर्वात्मत्वावधारणात्प्रणव एवाक्षरशब्दवाच्य इति प्राप्ते ब्रूमः—परमेश्वर एवाक्षरशब्दवाच्यः । कुतः । अम्बरान्तधृतेः । पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः । ' यदूर्ध्वं दिवो यदर्वाक्पृथिव्या ' इत्यारभ्य ' आकाश एव तदोतं च प्रोतं च ' इत्यन्तेन सर्वविकारजातस्याऽऽकाशाधारकत्वमुक्त्वा ' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च ' इति गार्ग्या पृष्टस्य याज्ञवल्क्यस्यैतत्प्रतिवचनम्—' एतद्वै तदक्षरं गार्गि ' इत्यादि—'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ' इत्यन्तम् । एतेन प्रतिवचनेनाक्षरस्याम्बरान्तधृतिरवगम्यते । नहीयमम्बरान्तधृतिः परमेश्वरादन्यत्र संभवति । यदपि ' ओंकार एवेदं सर्वम् । इति तदपि ब्रह्मप्रतिपत्तिसाधनस्य प्रणवस्य स्तुत्यर्थं द्रष्टव्यम् । न क्षरत्यश्नुते वेत्यक्षरव्युत्पत्तिः सामञ्जस्येन ब्रह्मण्येवोपपद्यते । तस्मादक्षरं ब्रह्मैव ।

नन्वम्बरान्तधृतिः प्रधाने संभवतीत्यत आह—

### सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म नान्यस्य । कुतः । प्रशासनात् । प्रशासनश्रवणादित्यर्थः । प्रशासनं हीह श्रूयते—‘ एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ’ [ बृ० ३ । ८ । ९ ] इत्यादि । तदेतत्सूर्यचन्द्रोपलक्षिताखिलजगच्छासकत्व चेतनस्येश्वरस्यैवोपपद्यते न त्वचेतनस्य प्रधानस्य । तदुक्तं भाष्यकृद्भिः—नह्यचेतनानां घटादिकारकाणां मृदादीनां घटादिविषय प्रशासनमस्तीति । तस्मादम्बरान्तधृतिः प्रधानस्य नोपपद्यते ॥ ११ ॥

### अन्यभावव्यावृत्तेश्च ॥ १२ ॥ ( ३ )

किंचाम्बरान्तधृति. परमेश्वरस्यैव संभवति न प्रधानस्य नवा जीवस्य । कुतः । अन्यभावव्यावृत्तेः । अन्यस्य प्रधानस्य जीवस्य च भावो धर्मोऽन्यभावस्तद्व्यावृत्तेः । तद्विपरीतधर्मवत्त्वादित्यर्थः । ‘ तद्वा एतदक्षर गार्ग्यदृष्ट द्रष्टृश्रुत श्रोत्रमत मन्त्रविज्ञातं विज्ञातृ ’ [ बृ० ३ । ८ । ११ ] इत्यादि । तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति तथाऽपि द्रष्टृत्वादिव्यपदेशो न संभवत्यचेतनत्वात् । तथा ‘ नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता ’ [ बृ० ३ । ७ । २३ ] इत्यादिना द्रष्ट्रन्तरनिरासाच्च । न चेतनोऽपि शारीरोऽत्र गृह्यते तस्योपाधिमतः ससारिणः परिच्छिन्नत्वात् । नहि निरुपाधिकः शारीरो नाम भवति । ‘ अनीशया शोचति मुह्यमानः ’ [ श्वे० ४ । ७ ] इतिश्रुत्यन्तरे स्पष्टमुपाधिपरतन्त्रत्वोक्तेः । अचिन्त्यमहिम्नीश्वरे स्वाधीनमायोपाधिके तु ‘ अस्थूलमनण्वह्रस्वम् ’ [ बृ० ३ । ८ । ८ ] इत्यादिना सर्वे संसारधर्मा निषिध्यन्ते नान्यस्मिञ्शारीरे । तस्मान्न जीवोऽप्यक्षरशब्दवाच्यः परमेश्वर एवाक्षरशब्दवाच्य इति सिद्धम् ॥ १२ ॥ ( ३ )

### ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ ( ४ )

प्रश्नोपनिषदि श्रूयते—‘ एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ’ [ प्र० ५ । २ ] इति प्रकृत्य श्रूयते—‘ यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभिध्यायीत [ प्र० ५ । ५ ] इति । किमस्मिन्वाक्ये परं ब्रह्माभिध्येयमुपदिश्यतेऽथवाऽपरमित्येतेनैवाऽऽयतनेन परमपरं चैकतरमन्वेतीति प्रकृतत्वाद्भवति संशयः । तत्रापरं हिरण्यगर्भाख्यं ब्रह्माभिध्यायीतेति प्राप्तम् । कुतः । ‘ स तेजसि सूर्ये सपन्नः स सामभिरुन्नीयते ब्रह्मलोकम् ’ [ प्र० ५ । ५ ] इति हिरण्यगर्भलोकप्राप्तिफलश्रवणात् । परब्रह्मध्यानस्य परमपुरुषार्थलक्षणस्य तावन्मात्रफलत्वानुपपत्तेश्च । नन्वपरब्रह्मपरिग्रहे पर पुरुषमिति विशेषणं नोपपद्येतेति चेन्न । तस्य हिरण्यगर्भस्य बद्धजीवापेक्षया परत्वोपपत्तेरित्येवं प्राप्तेऽभिधीयते—परमेव ब्रह्मात्राभिध्येयमुपदिश्यते ।

कुतः । ईक्षतिकर्मव्यपदेशात् । वाक्यशेषेऽस्याभिध्यातव्यस्येक्षतिकर्मत्वेन व्यपदेशात् । ' स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' [ प्र० ५ ५ ] इति । अस्यार्थः— ओंकारोपासनया ब्रह्मलोकं प्राप्तः स एतस्माज्जीवघनाज्जीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादप्युत्कृष्टं सर्वप्राणिहृदये शयानं परमात्मानं पश्यतीति । तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति । मनोरथकल्पितस्यापि ध्यायतिकर्मत्वात् । तदेवातथाभूतमीक्षतेरपि कर्म लोके दृष्टम् । अतः परमात्मैव सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एवेह परात्परपुरुषशब्दाभ्यां प्रत्यभिज्ञायते । अथ यदुक्तं परमात्माभिध्यायिनो हिरण्यगर्भलोकप्राप्तिफलं परिच्छिन्नं न युज्यत इति । नैष दोषः । त्रिमात्रेणोंकारेणाऽऽलम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्तिश्चेति। तस्मात्परमात्मैवोमित्यक्षरेणाभिध्यातव्य इति सिद्धम् ॥ १३ ॥ ( ४ )

## दहर उत्तरेभ्यः ॥ १४ ॥

छान्दोग्यस्याष्टमाध्याये ' अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ' [ छा० ८ । १ । १ ] इत्यादिवाक्यं श्रूयते । ब्रह्मण उपलब्धिस्थानत्वेन शरीरं ब्रह्मपुरं तत्र दहरमल्पं हृदयपुण्डरीकं हृदयकमलं वेश्म गृहं तस्मिन्दहरपुण्डरीकवेश्मनि दहरोऽल्प आकाशो वर्तते । स किं भूताकाशोऽथवा जीव आहोस्वित्परमात्मेति संशये सति भूताकाश इति तावत्प्राप्तम् । आकाशशब्दस्य भूताकाशे रूढत्वात्तस्य च दहरायतनत्वाद्दहरत्वम् । यद्वा दहरशब्देनाल्पत्वोक्तेः परिच्छिन्नो जीव इति प्राप्तम् । तस्य शरीरेण स्वस्वामिलक्षणसंबन्धात् । तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं लोके दृष्टं यथा राज्ञस्तद्वदस्यापि । तस्माद्भूताकाशो वा जीवो वा दहर इति प्राप्ते ब्रूमः—परमात्मैव दहराकारः । कुत उत्तरेभ्यः । वाक्यशेषगतेभ्यो हेतुभ्य इत्यर्थः । ' यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि च यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ' [ छा० ८ । १ । ३ ] इत्यादि। यद्यप्याकाशशब्दो भूताकाशे रूढस्तथाऽपि तेनैव तस्योपमा नोपपद्यत इति तच्छङ्का निरस्ता । यथाकथंचिद्बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः संभवतीति न युक्तं वक्तुम् । अगतिका हीयं गतिर्यत्काल्पनिकभेदाश्रयणम् । तथाऽपि दहराकाशस्य परिच्छिन्नत्वाद्बाह्याकाशपरिमाणं नोपपद्यते । ईश्वरस्य तु ' अणोरणीयान्महतो महीयान् ' [का० १ । २ । २०] इत्यादिश्रुतिभिरणुत्वं महत्त्वं चोपपद्यतेतराम् । किंच ' उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते ' इत्यादिना द्यावापृथिव्याद्यशेषजगदाधारत्वं दहराकाशस्य श्रूयते । ' एष आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः ' [ छा० ८ । १ । ५ ] इतिचाऽऽत्मत्वमपहतपाप्मत्वादयश्च गुणा न भूता-

काशे संभवन्ति। द्यावापृथिव्याद्याधारत्वापहतपाप्मत्वादिभ्योऽनन्यसाधारणेभ्यो हेतुभ्यः परमात्मैव दहराकाशः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति। नच दहराकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च न संभवति तस्मिन्यदन्तरिति द्यावापृथिव्यादिपरविशेषणत्वेनोपादानात्। द्यावापृथिव्याद्येव विजिज्ञासितव्यमिति वाच्यम्। वाक्यशेषानुपपत्तेः। तथा हि—'अस्मिन्कामाः समाहिता एष आत्माऽपहतपाप्मा' इत्याद्युक्त्वा, अथ 'य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' [ छा० ८ । १ । ६ ] इत्यनेन वाक्यशेषेण सत्यकामसहितस्य परमात्मन एव विज्ञेयत्वप्रतिपादनात्। विस्तरस्तु भाष्येऽनुसधेयः॥१४॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

उत्तरेभ्य इत्यस्यैव प्रपञ्चोऽयम्। किंच दहरः परमात्मा। कुतः—गतिशब्दाभ्याम्। वाक्यशेषे परमात्मन एव प्रतिपादकौ गतिशब्दौ भवतः—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति' [ छा० ८ । ३ । २ ] इति। प्रजाशब्देनात्र जीवा उच्यन्ते। अहरहर्गच्छन्त्य इत्यनेन प्रत्यहं तेषां गतिरुक्ता भवति। तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति। ब्रह्मलोकशब्दं गतिं चाभिप्रेत्य गतिशब्दाभ्यामिति द्विवचनं सूत्रे प्रयुक्तम्। ब्रह्मलोकशब्दो हि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशशङ्कां निराकुर्वन्नस्य दहरस्य ब्रह्मतां गमयति। तथाहि दृष्टमित्यनेन 'सता सौम्य तदा सपन्नो भवति' [ छा० ६ । ८ । १ ] इत्यादिश्रुत्यन्तरदर्शनेन प्रत्यहं सुषुप्त्यवस्थायां जीवानां ब्रह्मविषयं गमनं दृढीकृतम्। यद्यपि षष्ठीसमासेन ब्रह्मलोकशब्दश्चतुर्मुखलोकं गमयति तथाऽपि सर्वासां प्रजानामहरहस्तद्गमनासंभवाद्ब्रह्मैव लोको ब्रह्मलोक इति समानाधिकरणसमास एवाऽऽश्रयणीय इत्यस्मिन्नर्थेऽहरहर्गमनमेव लिङ्गमिति लिङ्गमित्यनेनोक्तम्। अहरहर्गच्छन्त्योऽप्येतं ब्रह्मलोकं कुतो न विदन्तीत्याशङ्कायां तत्समाधानाय हेतुगर्भेणानृतेन हि प्रत्यूढा इति वाक्यशेषेण ब्रह्मज्ञानिनामेव तल्लाभो भवति न तु तदज्ञानिनामित्युक्तं भवति। तथाच श्रुत्यन्तरं सुषुप्तिं प्रकृत्य 'तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपम्' [ बृ० ४ । ३ । २१ ] इति ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

दहरः परमेश्वर एव। कुतः। धृतेश्च। दहरोऽस्मिन्नन्तराकाश इति प्रकृत्याऽऽकाशौपम्यपूर्वकं तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेवाऽऽत्मशब्दं प्रयुज्यापहतपाप्मत्वादिधर्मानुपदिश्योक्तं य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेति। तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारक उच्यते। क्तिचः कर्तरि स्मरणात्। लोकविधारकत्वं च परमेश्वरादन्यत्र न संभवति। यथा लोके केदारादिक्षेत्रसस्येषु मुक्तानां जलानामसंकराय सेतुरेवमय-

मात्मैषां लोकानां वर्णाश्रमादीनां विधारकः सेतुरसंभेदायासंकरायेत्यर्थः । अयं च सर्वलोकविधारणलक्षणो महिमा परमात्मन्येवास्तीति निश्चयः । श्रुतिषूपलब्धेः । तथा च श्रुतयः— 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' । [बृ० ३ ८।९.] 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय' [ बृ० ४ । ४ । २२ ] इत्याद्याः । तस्माद्दहराकाशः परमेश्वरः ॥ १६ ॥

**प्रसिद्धेश्च ॥ १७ ॥**

दहराकाशः परमेश्वर एव । कुतः । प्रसिद्धेः । 'आकाशो वै नाम नामरूपयोर्निर्वहिता' [ छा० ८ । १४ ] 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' [ छा० १ । ९ । १ ] इति श्रुत्यन्तरे प्रसिद्धेः । जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते । भूताकाशस्तु पूर्वमधिकरणसूत्रेण निराकृतः । तस्माद्दहराकाश ईश्वर एवेति सिद्धम् ॥ १७ ॥

**इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥**

ननु वाक्यशेषबलेन दहराकाशः परमेश्वरो यदि परिगृह्यते तर्हि जीवस्यापि वाक्यशेषे परामर्शोऽस्ति—'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' [ छा०८ । ३ । ४ ] इति । अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्त्यवस्थाया दृष्टत्वादवस्थावन्तं जीवमुपस्थापयितुं शक्नोति नार्थान्तरम् । तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति । यथाचेश्वरधर्मसमभिव्याहारादाकाशः परमेश्वरविषयोऽभ्युपगत एव जीवविषयोऽपि भविष्यति । तस्मादितरपरामर्शाद्दहराकाशः स एव जीव उच्यत इति चेत् । नैष दोषः । कुतः । असंभवात् । 'एष आत्माऽपहतपाप्मा विरजो विमृत्युः' [ छा० ८ । १ । ५ ] इत्यादीनां परमेश्वरधर्माणां जीवे बुद्ध्याद्युपाध्यभिमानिन्यसंभवादित्यर्थः । तस्माद्दहराकाशः परमेश्वर एव ॥ १८ ॥

**उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥**

'इतरपरामर्शात्स इति चेन्नासंभवात्' [ ब्र० सू० १ । ३ । १८ ] इत्यनेन सूत्रेण जाताया जीवाशङ्काया निराकरणं कृतं पुनरपि तस्याः समुत्थानं क्रियते । उत्तरस्माद्वाक्यात् । दहरविद्याया उपरि प्रजापतिविद्यायामिन्द्रविरोचनप्रजापतिसंवादे श्रूयते— 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' [ छा० ४ । १५ । १ ] इति । तत्र जीव इति तावत्प्राप्तम् । अवस्थात्रयोपन्यासात् । अक्षिणि पुरुष इति जागरणोपन्यासः । 'य एष स्वप्ने महीयमानश्चरति' [ छा० ८ । १० । १ ] इति स्वप्नोपन्यासः । 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा' [ छा० ८ । ११ । १ ] इति । एवमवस्थात्रयविशिष्टं जीवमेव पुनःपुनः परामृश्य तस्मिन्नपहतपाप्म-

त्वादि दर्शयति —' एतदमृतमेतदभयमेतद्ब्रह्म ' [ छा० ४ । १५ । १ ] इति । तस्माज्जीवस्यापहतपाप्मत्वादिसंभवाद्दहराकाशो जीव एवास्तु न परमेश्वरः । तस्य जाग्रदाद्यवस्थाविहीनत्वादिति चेत् । अत्रोच्यते—आविर्भूतस्वरूपस्त्विति । तुना हेत्वाक्षेपपरिहारः । उत्तरस्मादपि वाक्यान्न जीवाशङ्का संभवतीत्यर्थः । कुतः । यतस्तत्राप्याविर्भूतस्वरूपो जीवो विवक्ष्यते न तु जीवत्वेन रूपेण । ' य एषोऽक्षिणि ' इत्युपलक्षितं द्रष्टारं निर्दिश्य पुनःपुनस्तमेव व्याख्येयत्वेनाऽऽकृष्य स्वप्नसुषुप्त्युपन्यासोपक्रमेण परं ज्योतिरुपसपद्य स्वेनरूपेणाभिनिष्पद्यत इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं व्याचष्टे न जैवेन रूपेण । यत्तत्परं ज्योतिरुपसंपत्तव्यं श्रुतं तत्परं ब्रह्म तच्चापहतपाप्मत्वादिधर्मकं तदेवास्य पारमार्थिकं स्वरूपं तत्त्वमसीत्यादिश्रुतिभ्यः । तत्र जीवस्य भूतगत्याऽवस्थावचनं तस्मादसंभवादिति पूर्वसूत्रस्थहेतुर्नासिद्धः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

नन्वीश्वरश्चेद्दहरः स्यात्तर्ह्येष संप्रसाद इत्यादिना जीवपरामर्शो व्यर्थ इति तत्राऽऽह । अन्यार्थोऽयं जीवपरामर्शो न जीवस्वरूपपर्यवसायी किं तर्हि परमेश्वरस्वरूपपर्यवसायी । कथम् । संप्रसादशब्दवाच्यो जीवो जागरणव्यवहारे देहेन्द्रियाद्यभिमानी भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः सन्नुभयशरीराभिमानात्समुत्थाय सुषुप्त्यवस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसपत्तव्यमुपसपद्य जीवस्वरूपं परित्यज्य ब्रह्मस्वरूपेणाभिनिष्पद्यते । तदेवोपसपत्तव्यमात्माऽपहतपाप्मत्वादिगुणकं ब्रह्मोपास्यमित्येवमर्थोऽयं जीवपरामर्शः परमात्मपर एव ॥ २० ॥ ( ४ )

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ ( ५ )

ननु दहरोऽस्मिन्नन्तराकाश इत्यल्पत्वश्रवणाद्दहरस्य परमात्मत्वं न संभवति । जीवस्य त्वाराग्रोपमितस्याल्पत्वं युक्तं तस्माद्दहरो जीव इति चेत् । उक्तोऽस्य परिहारः । ' अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ' [ ब्र० सू० १।२।७ ] इत्यत्रैव परिहारोऽनुसंधातव्यः । ' उत्तराच्चेत् ' इति सूत्रत्रयमधिकरणरत्नमालायामधिकरणान्तरत्वेन व्याख्यातम् ॥ २१ ॥ ( ५ )

## अनुकृतेस्तस्य च ॥ २२ ॥

मुण्डकोपनिषदि श्रूयते—' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ' [ मु० २ । २ । १० ] इति । अस्यायमर्थः—तत्र पूर्वप्रकृते ज्योतिषि सूर्यचन्द्रादयो न भान्ति किंतु तमेव ज्योतिषां भासकं पुरतो भासमानं पदार्थमनु सर्वं जगद्भाति किं तर्हि तस्य भासकपदार्थस्य भासा सर्वं विभातीति । अस्मिन्वाक्ये श्रूयमाणं जगद्भासकं किं सूर्यादिसदृशं चाक्षुषं तेजः किंचिदाहो-

स्विचैतन्यमिति विषये किंचित्तेज इति तावत्प्राप्तम्। कुतः। सूर्यादितेजोभिभावकत्वात्। महतस्तेजसः संनिधौ स्वल्पं तेजोऽभिभूतं भवति यथा सूर्यसंनिधौ प्रदीप.। तथाच सूर्या॰ दीनां यदभिभावकं तत्सूर्यादिभ्योऽप्यधिकं तेजोन्तरं भविष्यतीति प्राप्ते ब्रूमः। सूर्यादिभि॰ रभास्यमानं वस्तु चैतन्यमेव। कुतः। अनुकृतेः। अनुकृतिरनुकारोऽनुमानमिति यावत्। अनुमानादित्यर्थः। नहि लौकिक सूर्यादि तेजो भासमानमनुभाति सर्वं जगत्। स्वप्रकाश-तया भासमानं चैतन्यमनु सर्वं जगद्भासते। उदाहृतवाक्ये तस्य भासेति चतुर्थचरणेऽ-यमर्थोऽभिप्रेतस्तस्य भासा सर्वमिद विभातीति। ननु तमेव भान्तमनुभातीत्यनुपपन्नं समानस्वभावेष्वनुकारदर्शनात्। गच्छन्तमनुगच्छतीत्यादाविति चेत्। नायं नियमः। सुतप्तोऽयःपिण्डो दहन्तमग्निमनुदहति भौमं वा रजो वहन्त वायुमनुवहतीत्यादौ भिन्नस्वभा-वेष्वप्यनुकारदर्शनात्। न तत्र सूर्यो भातीति तच्छब्देन च

‘ हिरण्मये परे कोशे विरजं ब्रह्म निर्मलम्।

तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥ ’ [ मु० २। २। ९ ]

इत्यनेन ‘ यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम् ’ [ मु० २। २। ५ ] इति प्रकृतं चैतन्यमेव परामृष्टम्। नच महतस्तेजसः सकाशादल्पतेजसः परिभव इति नियमान्न तमेव भान्तमनुभाति सर्वमिति नोपपद्यत इति वाच्यम्। सूर्यादितेजसा मण्यादितेजसः परिभवादर्शनात्। सूर्याद्युपाधिषु चैतन्यतेजस एवोपलम्भाच्च। तस्मात्प्रकृतं चैतन्यमेवात्र वाक्ये प्रतिपाद्यम्॥ २२॥ ( ५ )

## अपि च स्मर्यते॥ २३॥ ( ६ )

किंच दृग्रूपत्वं चैतन्यस्यैव स्मर्यते भगवद्गीतासु—

‘ न तद्भासयते सूर्यो न शशाङ्को न पावकः।

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम॥ [ भ० गी० १५। ६ ] इति।

‘ यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ’॥

[ भ० गी० १५। १२ ] इति च॥ २३॥ ( ६ )

## शब्दादेव प्रमितः॥ २४॥

कठवल्लीषु चतुर्थवल्ल्यामाम्नायते—‘ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य ’ [ का० २। १। १२ ] इति। तत्र योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते स किं जीवः किं वा परमात्मेति संशयः। तत्राङ्गुष्ठमात्रपरिमाणोपदेशात्तावज्जीव इति प्राप्तम्। नह्यपरिच्छिन्नस्य परमात्मनोऽङ्गुष्ठमात्रपरिमाणमुपपद्यते। जीवस्य तु कयाचित्कल्प॰ नया संभवत्यङ्गुष्ठमात्रत्वम्। तथाच स्मृतिः—

' अथ सत्यवतः कायात्पाशबद्धं वशं गतम् ।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ' [ म० भा० ३।२९७।१७ ] इति ।

देहे मध्यप्रदेशेऽवस्थानाच्च जीव इति प्राप्ते ब्रूमः—परमात्मैवाङ्गुष्ठमात्रो भवितुमर्हति । कुतः । ' ईशानो भूतभव्यस्य ' इतिशब्दात् । अतीतानागतवर्तमानजगदीशितृत्वश्रवणादित्यर्थः । न ह्यनीशितव्यस्य जीवस्य तदुभयमीशितृत्वं संभवति । पूर्वं नचिकेतसा ब्रह्म पृष्टम्— ' अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्पश्यसि तद्वद ' [ का० १ । २ । १४ ] इति । तदेवात्र वाक्येऽनुसंधीयते ॥ २४ ॥

कथं पुनः सर्वगतस्य परमात्मनः परिच्छिन्नपरिमाणोपदेश इत्याशङ्कायामाह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ ( ७ )

तुशब्दश्चोद्यव्यावृत्त्यर्थः । सर्वगतस्य परमात्मनोऽपि हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते । विनोपाधिमतिमात्रस्याङ्गुष्ठपरिमाणमञ्जसोपपद्येत । ननु मशकादिगजान्तानां प्राणिनां हृदयपरिमाणस्यानियतत्वात्कथमङ्गुष्ठमात्रत्वं घटेतेति चेत् । नैष दोषः । मनुष्याधिकारत्वाच्छास्त्रस्येति शेषः । अविशेषेण प्रवृत्तमपि शास्त्रं मनुष्यानेवाधिकरोति । शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्च । मनुष्यहृदयापेक्षमेव परमात्मन इदमङ्गुष्ठमात्रत्वमुच्यते न मशकादिहृदयापेक्षम् । तेषां शास्त्राधिकाराभावात् । द्विविधा हि वेदान्तानां प्रवृत्तिः—क्वचित्परमात्मस्वरूपनिरूपणपरा क्वचिज्जीवब्रह्मैकत्वोपदेशपरा चेति । तदस्मिन्प्रकरणे विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते नाङ्गुष्ठमात्रत्वम् । एतमेव चार्थमुत्तरवाक्येण स्फुटी करिष्यति— ' अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ' [ का० २ । ६ । १७ ] इत्यादिना । तस्मादङ्गुष्ठमात्रः परमात्मा ॥ २५ ॥ ( ७ )

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया प्रवृत्ता । मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तम् । तत्प्रसङ्गेनेदमधिकरणम् । बृहदारण्यके तृतीयाध्याये श्रूयते—' तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ' [ बृ० १ । ४ । १० ] इति । तत्र देवादयो ब्रह्मविद्यायामधिक्रियन्ते न वेति संशयः । देवा ऋषयश्च विद्यायां नाधिक्रियन्त इति तावत्प्राप्तम् । कुतः । अधिकारिलक्षणाभावादिति प्राप्ते सति—देवादीनामप्यधिकारोऽस्तीति बादरायण आचार्यो मन्यते । कस्मात् । संभवात् । संभवति हि तेषामप्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिहेतुकम् । तथा सामर्थ्यमपि तेषां संभवति मन्त्रार्थवादेतिहासपुराणादिभ्यो विग्रहवत्त्वावधारणात् । नच तेषामुपनयनाभावाद्वेदाधिकारो नास्तीति वाच्यम् । तदभावेऽपि तेषां स्वयंप्रतिभातवेदत्वात्तदधिकारोऽस्ति । अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यं श्रूयते—

'एकशतꣳ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' [ छा० ८ । ११ । ३ ] इत्यादौ । तस्माद्देवानामपि ब्रह्मविद्यायामधिकारो न निवारयितुं शक्यते ॥ २६ ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥**

ननु देवादीनामपि विग्रहवत्त्वेन विद्यायामधिकारस्वीकारे सति कर्मण्यपि शरीरितया ऋत्विगादिवदिन्द्रादीनामपि संनिधानेन कर्माङ्गत्वं स्यात् । तच्च न संभवति । बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपेण संनिधानानुपपत्तेः । तदा च कर्मणि देवताभावाद्विरोधः स्यादिति चेत् । नायमस्ति विरोधः । कुतः । अनेकप्रतिपत्तेः । एकस्यापीन्द्रादेर्युगपदनेकस्वरूपग्रहणसंभवादित्यर्थः । कथमेतदवगम्यत इति तत्र हेतुमाह— दर्शनादिति । तथा हि—'कति देवा' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति निरुच्य 'कतमे त' इति पृच्छायां 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' [ बृ० ३।९।१ २ ] इति निर्ब्रुवती श्रुतिरेकैकस्या देवताया अनेकरूपतां दर्शयति । तथा स्मृतिरपि—

'आत्मनो वै शरीराणि बहूनि भरतर्षभ ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥
प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव' ॥

इत्यादिका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति किमु वक्तव्यं निसर्गसिद्धानां देवानां बहुरूपग्रहणसामर्थ्यमस्तीति । तस्मादेकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छति । परैश्च न दृश्यतेऽन्तर्धानादिशक्तियोगात् । तस्मान्न कर्मणि विरोधः । अनेक प्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या—विग्रहवतामपि देवानां कर्माङ्गभावचोदनास्वनेकविधत्वं दृश्यते । यथाऽनेकैर्भोजयद्भिर्युगपदेको भोज्यते । यथा बहुभिर्नमस्कुर्वाणैर्युगपदेको नमस्क्रियते । तथा विग्रहवतीमेकां देवतामुद्दिश्य बहवो युगपत्स्वं स्वं हविस्त्यक्ष्यन्तीति न कश्चित्कर्मणि विरोधः ॥ २७ ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥**

ननूक्तप्रकारेण देवानां विग्रहवत्त्वाभ्युपगमान्माऽस्तु सर्वाङ्गचोदनासु विरोधः शब्दे तु विरोधः प्रसज्यते । तथा हि—औत्पत्तिको हि शब्दस्यार्थेन संबन्धस्तं संबन्धमाश्रित्यानपेक्षत्वादिति वेदस्य प्रामाण्यं स्थापितम् । देवता विग्रहवती ह्यभ्युपगम्यमाना यद्यपि ऐश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुञ्जीत तथाऽपि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य वेदरूपशब्दस्यानित्येनार्थेन नित्यसंबन्धाभावे यद्वैदिकशब्दे प्रामाण्यं स्थापितं तस्य विरोधः स्यादिति चेत् । नायमप्यस्ति विरोधः । कुतः । अतः प्रभवात् । अत एव हि वैदिकाच्छब्दाद्देवादि जगत्प्रभवति । कथमेतदवगम्यते । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्ष

श्रुतिरनुमानं तु स्मृतिः । श्रुतिस्मृतिभ्यामित्यर्थः । स्वप्रामाण्यं प्रति सापेक्षत्वात्स्मृतिरनुमानमित्युच्यते । ते हि श्रुतिस्मृती शब्दपूर्विकां सृष्टिं दर्शयतः—' एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄस्तिरः पवित्रम् ' इत्यादिका श्रुतिः । स्मृतिरपि—

' अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ' इति ॥
तथा ' नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवाऽऽदौ निर्ममे स महेश्वरः ' [ मनु० १ । २१ ] इति ।

नन्वेवं वेदस्य नित्यत्वं देवादीनामनित्यत्व चोदाहृतवाक्यैः प्रतीयत इति न नित्यानित्यसंबन्धरूपो विरोधः परिहृत इति चेत् । उच्यते । व्यक्तीनामनित्यत्वेऽप्याकृतीनां नित्यतया तासामेव शब्दार्थत्वेन शब्दार्थयोः संबन्धस्यौत्पत्तिकत्वसिद्धेर्न विरोधः । ननु शब्दार्थ आकृतिर्भवतु तथाऽपि कथ वर्णात्मकस्य वेदस्य नित्यत्वं वर्णानां प्रत्युच्चारणं भेदस्य प्रतीयमानत्वादनित्यत्वादिति चेन्न । वर्णानां स एवायं गोशब्द इति प्रत्यभिज्ञायमानत्वात् । प्रतिपुरुषं शब्दभेदप्रतीतिस्तु ध्वनिरूपशब्दनिष्ठा न तु वर्णरूपनिष्ठाऽतो वेदस्य नित्यत्व सिद्धमित्युक्तम् । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ॥ २८ ॥

## अत एव च नित्यत्वम् ॥ २९ ॥

अत एवाऽऽकृतेः शब्दार्थत्वादेव वेदस्य नित्यत्वम् ॥ २९ ॥

## समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥ ( ८ )

नन्वाकृतीनां पदार्थत्वेऽपि प्रलये सर्वाकृतिव्यक्तिनाशे पुनस्तदाकृतिकव्यक्त्युत्पत्तौ प्रमाणाभावान्नित्यानित्यसंयोगविरोधस्तदवस्थ इति चेत् । सृष्टिप्रलययोरावृत्तावपि शब्दे विरोधो नास्ति । कुतः । समाननामरूपत्वात् । संसारस्यानादित्वात्प्रतिसृष्टि तत्तदाकृतिकमेव जगज्जन्यते न विलक्षणम् । प्रलये सर्वं वस्तु संस्कारावशेषमेव नश्यति न तु निरन्वयध्वसः । ज्ञानस्येवार्थस्यापि सजातीयकार्योत्पत्तिदर्शनेन संस्काराङ्गीकारात् । दृष्टानुश्राविकसुखदुःखविषयौ च रागद्वेषौ भवतो न विलक्षणविषयौ भवत इत्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते । समाननामरूपतां च श्रुतिस्मृती दर्शयतः—' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ' [ ऋ० सं० १० । १९० । ३ ] इति । सूर्यचन्द्रप्रभृति जगद्यथा क्लृप्तं पूर्वमासीत्तथाऽस्मिन्कल्पे परमात्माऽकल्पयदित्यर्थः । स्मृतिश्च—

ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः ।
शर्वर्यन्ते प्रसुप्तानां तान्येवैभ्यो ददात्यजः ॥
यथर्तावृतुलिङ्गानि नामरूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ इत्यादिका ।

तस्मान्न पूर्वोक्तविरोध इति ॥ ३० ॥ ( ८ )

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

शङ्कासूत्रमिदम् । देवानां ब्रह्मविद्यायामनधिकारं जैमिनिराचार्यो मन्यते । मधुविद्यादिष्वधिकारासंभवात् । 'असौ वा आदित्यो देवमधु' [ छा० ३ । १ । १ ] इत्यादिकासु विद्यास्वादित्यादीनामुपास्यत्वात् । तत्राऽऽदित्यादीनामनधिकारः । आदित्यान्तराभावात्स्वस्यैवोपास्योपासकत्वायोगात् । तथा च ब्रह्मविद्यायामधिकाराङ्गीकारे विद्यात्वाविशेषात्तत्राप्यधिकारः स्यात् । तत्र चाधिकारासभवाद्ब्रह्मविद्यायामप्यधिकारो न सभवतीति शङ्काभिप्रायः ॥ ३१ ॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

किंच परिदृश्यमाने ज्योतिर्मण्डल एव सूर्यचन्द्रादिदेवताशब्दानां लोके व्यवहारसद्भावान्मण्डलस्याऽऽयतनत्वेन विग्रहाभावादग्निवाय्वादीनामपि मण्डलस्वरूपत्वात् । नच 'इन्द्रो वज्रमुदयच्छत्' इत्याद्यर्थवाक्येभ्यो देवतानां विग्रहवत्त्वमवगम्यत इति वाच्यम् । विध्येकवाक्यतापन्ना[ नां ] 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादवाक्यानां स्वार्थे तात्पर्याभावात् । तस्माद्देवानां विग्रहवत्त्वाभा[ वात् ] न ब्रह्मविद्यायामधिकार इति ॥ ३२ ॥

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ ( ९ )

तुशब्दश्चोद्यनिरासार्थः । बादरायण आचार्यो देवानामपि ब्रह्मविद्यायां भावमधिकारित्वं मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वनधिकारो देवानां तथाऽपि निर्गुणब्रह्मविद्यायां तेषां देवानामप्यधिकारस्य भावोऽस्ति । न ह्येकत्रानधिकारे सर्वत्रानधिकार इति नियमः । राजसूयादावनधिकृताना ब्राह्मणाना ज्योतिष्टोमानधिकारप्रसङ्गात् । किंच ब्रह्मविद्यां प्रकृत्य देवादीनां विद्याधिकारः श्रुतावुक्तः—'तद्यो यो देवाना प्रत्यबुध्यत स एव तदभवत्तथर्षीणाम्' [ बृ० १ । ४ । १० ] इति । यद्वा ज्योतिषि भावाच्चेत्यस्योत्तरमास्ति हि । यद्यप्यादित्यादयो देवतावाचकाः शब्दा ज्योतिषि प्रयुज्यन्ते तथाऽपि तदभिमानिदेवतापरा एव तं तं देवतात्मानं समर्पयन्ति मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति ह्यैश्वर्ययोगाद्देवानां ज्योतीरूपेणावस्थातुं तं तं विग्रहं च गृहीत्वा व्यवहर्तुं सामर्थ्यम् । तथाहि श्रूयते—'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' [ षड्विंशति० ब्रा० १ । १ । ] इति । स्मर्यते च—'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इति ।

मृदादिष्वप्यधिष्ठातारोऽभ्युपगम्यन्ते ' मृदब्रवीदापोऽब्रुवन् ' इत्यादिदर्शनात् । ननु मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात्तन्मूलानामितिहासपुराणादीनामपि तथात्वात्कथं देवानां विग्रहवत्त्वमिति चेत् । अत्रोच्यते—त्रिविधो ह्यर्थवादः—गुणवादोऽनुवादो भूतार्थवादश्चेति । तथाचाऽऽहु.—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ' इति ॥

' आदित्यो यूपः । ' ' यजमान. प्रस्तरः ' इत्यादिषु प्रत्यक्षविरोधे सत्यादित्यवद्यूपस्य यजमानवत्प्रस्तरस्य यागनिर्वाहकत्वगुण आदित्यादिशब्दैरुपलक्ष्यत इति गुणवादः । ' अग्निर्हिमस्य भेषजम् ' ' वायुर्वै क्षेपिष्ठा देवता ' इत्येवमादिषु मानान्तरसिद्धार्थत्वादनुवादत्वम् । तयोरुभयोः स्वार्थे तात्पर्यं नास्ति । ' इन्द्रो वज्रमुदयच्छत् ' इत्यादिषु गुणवादानुवादाभ्यां भिन्नेषु भूतार्थवादेषु स्वार्थे तात्पर्यं निवारयितुमशक्यत्वात्पदैकवाक्यतया स्वार्थेऽवान्तरतात्पर्यं प्रतिपाद्य पश्चाद्वाक्यैकवाक्यतया विधिषु महातात्पर्यं भूतार्थवादैः प्रतिपाद्यते । मन्त्रेऽप्ययं न्यायो योज्य. । तथाच मन्त्रार्थवादादिबलाद्देवाना विग्रहवत्त्वं सिद्धम् । तस्माद्देवतानां विद्याधिकारोऽस्तीति सिद्धम् ॥ ३३ ॥ ( ९ ) ।

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

छान्दोग्ये संवर्गविद्यायां श्रूयते—' आजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथाः ' [ छा० ४।२।५ ] इति । अयमर्थः—जानश्रुतिर्नाम कश्चिच्छिष्यो गोसहस्र दुहितर मुक्ताहारं रथं कांश्चिद्ग्रामांश्चोपायनत्वेनाऽऽनीय रैक्वनामक गुरुमुपससाद तस्य रैक्वस्य वचनमेतत्—हे शूद्र जानश्रुत इदं गोसहस्राद्युपायनमाहृतवानसि । अनेनोपायनेन मुखेनैव मच्चित्त प्रसाद्योपदेशमिच्छसीति । तत्र शूद्रस्य वेदविद्यायामधिकारोऽस्ति न वेति चिन्त्यते । यथा मनुष्याधिकारनियम विहाय देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियममपहाय शूद्रस्याप्यधिकारोऽस्तु तस्यार्थित्वसामर्थ्ययोः सत्त्वात् । अत्रैवर्णिकदेवदृष्टान्तेन शूद्रस्याप्यत्रैवर्णिकस्य तत्संभवादिति प्राप्ते ब्रूमः—न शूद्रस्य विद्यायामधिकारोऽस्ति । उपनयनाभावेनाध्ययनाभावात् । अत्रैवर्णिकदेवदृष्टान्तोऽत्र न युज्यते । अस्ति हि देवशूद्रयोर्वैषम्यम् । उपनयनाध्ययनाभावेऽपि देवाः स्वयंप्रतिभातवेदाः । तादृशस्य सुकृतस्य पूर्वमुपार्जितत्वात् । शूद्रस्य तादृशसुकृताभावान्न स्वयंप्रतिभातवेदत्वमुपनयनाभावान्न वेदाध्ययनाधिकारित्वम् । यत्त्वर्थित्वमुक्तं न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति । शास्त्रीयेऽर्थे शास्त्रीयमेव सामर्थ्यमपेक्षितम् । तत्तु शूद्रस्य नास्त्यध्ययनाभावात् । अतोऽर्थित्वसामर्थ्ययोरभावान्न श्रौतविद्यायां शूद्रोऽधिकारी । कथं तर्ह्युदाहृतवाक्ये जानश्रुतिविषयः शूद्रशब्दः प्रयुक्त

इति चेत् । उच्यते—अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात्तस्य हंसस्यानादरश्रवणाच्छुगुत्पन्ना तया शुचा रैक्वं प्रति जानश्रुतिराद्रुद्रावेति योगव्युत्पत्त्या शूद्रो जानश्रुतिः। अत्रेत्थमौपनिषद्याख्यायिका—जानश्रुतिं पौत्रायण राजानं प्रासादस्थं कदाचिद्धंसानां तदुपरि मालारूपेण गच्छतां मध्य एको हस एक प्रत्युवाचायं राजा जानश्रुतिर्महाभाग इति । तमितरः प्रत्युवाच । कोऽयं वराक इतोऽप्युत्कृष्टतरो रैक्व इति । तच्छ्रुत्वा जानश्रुतेः शोक उत्पन्नः । तेन शोकेन गोसहस्राद्युपायन गृहीत्वा रैक्वं प्रति गतवान् । तं रैक्व आह हे जानश्रुते शूद्रानेनोपायनेनाऽऽलापयिष्यथा इति । तस्मान्न जानश्रुतिश्चतुर्थवर्णः शूद्रः ॥ ३४ ॥

**क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥**

ननु जानश्रुतिर्मुख्य एव शूद्रोऽस्तु किमुक्तयोगाश्रयणेनेति चेत् । अत्रोच्यते—न जानश्रुतिर्जातिशूद्रः । कुतः । क्षत्रियत्वावगतेः । क्षत्रियत्वनिश्चयादित्यर्थः । कस्मात्क्षत्रियत्वावगतिः । उत्तरत्र चैत्ररथेन लिङ्गात् । उत्तरत्र सवर्गविद्याया चैत्ररथेन क्षत्रियेण सहास्य जानश्रुतेः समभिव्याहाररूपाल्लिङ्गात् । समानायां विद्यायां समानानामेव प्रायेण समभिव्याहारा भवन्ति । अस्मिन्नुपाख्याने क्षत्तृप्रेरणाद्यैश्वर्योपन्यासेन जानश्रुतेः क्षत्रियत्वमवगम्यते । अतो न वेदविद्यायां शूद्रोऽधिकारी ॥ ३५ ॥

**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥**

इतश्च न शूद्रस्याधिकारः । कुतः । विद्याप्रदेशेषूपनयनादिसंस्कारपरामर्शात्—'तं होपनिन्ये' [ श०ब्रा० ११ । ५ । ३ । १३ ] 'अधीहि भगवः' [ छा०७ । १ । १ ] इति । 'ब्रह्मपरा ब्रह्मनिष्ठाः पर ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति । ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' [ प्र० १ । १ ] इत्यादिषु । शूद्रस्य च संस्काराभावाभिलापात् । 'न शूद्रे पातक किंचिन्न च संस्कारमर्हति' [ मनु० १० । १२ । ६ ] इत्यादिस्मृत्या संस्काराभावकथनादित्यर्थः ॥ ३६ ॥

**तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥**

इतश्च शूद्रो नाधिक्रियते । कुतः । शूद्रत्वाभावनिर्धारणे सत्येवोपदेशप्रवृत्तिदर्शनात् । अत्रेत्थमाख्यायिका—सत्यकामो जाबालः प्रमीतपितृको गौतमसमीपं गत्वा ब्रह्मचर्यमुपेयामित्युवाच । तं गौतमः पप्रच्छ किंगोत्रोऽसीति । जाबाल उवाच माताऽपि न जानात्यहमपि न जानामीति । तच्छ्रुत्वा गोतमः प्राह । नाब्राह्मणस्यैतादृश यथार्थवादित्वं संभवतीति शूद्रत्वाभावं निश्चित्य शुश्रूषामङ्गीकृतवानिति ॥ ३७ ॥

**श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥ ( १० )**

इतश्च शूद्रो नाधिक्रियते । कुतः । स्मृतेः स्मृतितो वेदश्रवणाध्ययनयोस्तदर्थज्ञानानु-

ष्ठानयोश्च प्रतिषेधात्–श्रवणप्रतिषेधस्तावत्—' अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्र¹पूरणम् ' इति । अध्ययनप्रतिषेधस्तु–' एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम् ' इति । अत एवास्याध्ययनप्रतिषेधो यत्समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत । भवति चोच्चारणे जिह्वाछेदो धारणे शरीरभेद इति । अत एव चार्थज्ञानानुष्ठानयोः प्रतिषेधो भवति । स्मृत्यन्तरमपि—' न शूद्राय मतिं दद्यात् ' इति । मतिं विद्याम् । ' द्विजातीनामध्ययनमिज्या दानम् ' इति च । विदुरादीनां तु पूर्वजन्मकृतसंस्कारवशाद्गर्भस्थवामदेववज्ज्ञानोत्पत्तिरिति वेदितव्यम् । ननु शूद्रस्य वेदविद्यायामनधिकारे सति मुमुक्षायां सत्यामपि मुक्तिर्न सिध्येदिति चेन्न । ' श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ' इति वचनादितिहासपुराणादिश्रवणेन ब्रह्मविद्योदये सति मुक्तिसिद्धेः । तस्मान्न शूद्रो वेदविद्यायामधिक्रियत इति सिद्धम् ॥ ३८ ॥ ( १० )

## कम्पनात् ॥ ३९ ॥ ( ११ )

समाप्तः प्रासङ्गिकोऽधिकारविचारः । इदानीं प्रकृतवाक्यार्थविचारमेवानुसंवर्त्ते । कठवल्लीषु षष्ठवल्ल्यामाम्नायते—' यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ' [ का० २ । ६ । २ ] इति । अयमर्थः—निःसृतमुत्पन्नं यदिदं जगत्सर्वं प्राणे निमित्तभूते सत्येजति कम्पते । तच्च प्राणशब्दवाच्यं वस्तूद्यतं वज्रमिव महाभयहेतुः । एतत्प्राणशब्दवाच्यं ये विदुस्ते मरणरहिता भवन्तीति । तत्र जगत्कम्पनकारिणि प्राणे त्रेधा संदिग्धे सत्यशनिरिति तावत्प्राप्तम् । कुतः । महद्भयमिति भयहेतुत्वश्रवणात् । वायुर्वा भविष्यति । प्राणे जगदेजतीति प्राणशब्दवाच्यस्य वायोर्देहादिचालनसामर्थ्यात् । तस्माद्वायुरेवेह प्रतिपत्तव्य इति प्राप्ते ब्रूमः—परमात्मा प्राणशब्दवाच्यः । कुतः । कम्पनात् । ' यदिदं किंच ' इत्यस्य वाक्यस्य पूर्वोत्तरयोर्ग्रन्थभागयोर्ब्रह्मैव निर्दिष्टम् । कस्मादेव मध्ये वायुर्निर्दिश्यते । पूर्वत्र तावत् ' तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ' ( का० २ २ । ८ इति ब्रह्म निर्दिष्टं तदेवेहापि संनिधानाज्जगत्सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञाननिर्दिष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः । ' प्राणस्य प्राणं [ बृ० ४ । ४ । १८ ] इति श्रुतेः । एजयितृत्वमपीदं परमात्मन्येवोपपद्यते न वायुमात्रस्य । तथाचोक्तम् ' ' न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ' [ का० २ । ५ । ५ ] इति । उत्तरत्रापि ' भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' [ का० २ । ३ । ३ ] इति ब्रह्मैव निर्देक्ष्यते । तेनाग्निसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वस्वव्यापारे

---

१ प्रतिपूरणमितिभाष्ये ।

प्रवर्तत इति भयानकं वज्रोपमं ब्रह्म । तथा ब्रह्मविषयं श्रुत्यन्तरम् 'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम. ' इति । ' तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ' इत्युपक्रमात् । ' अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ' [ का० १ । २ । १४ ] इति परमात्मविषयप्रश्नाच्च प्रकरणपर्यालोचनयाऽऽत्मज्ञानादेवामृतत्वप्राप्तिरिति गम्यते । तस्मात्परमात्मैव प्राणः ॥ ३९ ॥ ( ११ )

## ज्योतिर्दर्शनात् ॥ ४० ॥ ( १२ )

छान्दोग्यस्याष्टमाध्याये प्रजापतिविद्यायामाम्नायते—'य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्यते स उत्तमः पुरुषः ' [ छा० ८ । १२ । ३ ] इति । अस्यायमर्थः—सम्यक्प्रसीदत्यस्यामवस्थायामिति संप्रसादः सुषुप्तिः । तयाऽवस्थया तद्वाञ्जीव उपलक्ष्यते । एष जीवोऽस्माच्छरीरादुत्थायेति शेषं सुगमम् । अत्र ज्योतिःशब्दवाच्ये द्वेधा संशयः—प्रसिद्धं ज्योतिः सूर्यो वा किंवा परमात्मेति । सूर्य इति तावत्प्राप्तम् । कुतः । शरीरात्समुत्थाय ज्योतिरुपसंपद्यत इति देहान्निर्गत्य पश्चाज्ज्योतिः प्राप्नोतीत्युच्यमानत्वात् । ब्रह्मप्राप्तौ निर्गमनाभावात् । प्राप्तृप्राप्तव्यभेदानुपपत्तेश्चेति प्राप्ते ब्रूमः—ज्योतिःशब्दवाच्यं परमेव ब्रह्म । कुतः । दर्शनात् । ' य आत्माऽपहतपाप्मा ' [ छा० ८ । ७ । १ ] इत्यपहतपाप्मत्वादिधर्मकस्याऽऽत्मनः प्रकरणादन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन चात्रानुवृत्तिदर्शनात् । किंच 'परं ज्योतिः स उत्तमः पुरुष' इति च विशेषणात् । एवं पूर्वोत्तरवाक्यपर्यालोचनया ज्योतिःशब्दवाच्यं ब्रह्म । यदुक्तं शरीरात्समुत्थाय ज्योतिरुपसंपद्यत इत्येतद्द्वयं ब्रह्मपक्षे न संभवतीति । तदसारम् । न ह्यत्र समुत्थानं निर्गमनं किंतर्हि त्वंपदार्थस्य जीवस्य शरीरत्रयाद्विवेक. । नाप्युपसंपत्तिः प्राप्तिः । किं तर्हि शोधितत्वंपदार्थस्य ब्रह्मत्वेनावबोधनम् । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । तन्न । आत्यन्तिकमोक्षे गत्युत्क्रान्त्योरभावात् । तस्माज्ज्योतिर्ब्रह्म ॥ ४० ॥ ( १२ )

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ ( १३ )

'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा ' [ छा० ८ । १४ । १] इति च्छान्दोग्ये श्रूयते । आकाशाख्यः कश्चित्पदार्थ. । स च जगतो नामरूपयोर्निर्वाहकः । ते च नामरूपे यद्यस्मादाकाशादन्तरा विभिन्ने । अथ वा यस्याऽऽकाशस्यान्तरे वर्तेते । तत्सत्तानुविद्धे सती वर्तेते इत्यर्थः । तदाकाशं मरणरहितं तद्ब्रह्म तदेव प्रत्यगात्मेति । अत्राऽऽकाशः किं भूताकाशः किंवा परमात्मेति विशये भूताकाश इति तावत्प्राप्तम् । आकाशशब्दस्य तस्मिन्रूढत्वात् । नामरूपयोर्निर्वहणस्यावकाशप्रदानद्वारेण तस्मिन्योजयितुं शक्यत्वादिति प्राप्ते ब्रूमः—परमात्मैवाऽऽकाशशब्दवाच्यः । कुतः । अर्था-

न्तरत्वादिव्यपदेशात् । ते यदन्तरेति यस्यान्तरे ते नामरूपे इति नामरूपभिन्नत्वेनाऽऽकाशस्य व्यपदेशात् । भूताकाशस्य तु विकारजातान्तःपातित्वेन नामरूपाभ्यामेव व्याकृतत्वात् । अत्र नामरूपयोर्निर्वाहकत्व नावकाशप्रदानमात्र किंतर्हि नियामकत्व तच्च चेतने ब्रह्मणि युज्यते । ‘ अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ’ [ छा० ६ । ३ । २ ] इति ब्रह्मकर्तृत्वश्रवणात् । ननु जीवस्यापि नामरूपयोर्निर्वोढृत्वं प्रत्यक्षसिद्धमिति चेत् । उच्यते—तस्य यत्किंचिन्नामरूपनिर्वोढृत्वेऽपि यावन्नामरूपनिर्वोढृत्वं नास्ति । किंच वाक्यशेषे ‘तद्ब्रह्म तदमृतं स आत्मा’ इति च ब्रह्मलिङ्गमभिहित ब्रह्मणोऽन्यत्र न संभवति । आकाशस्तल्लिङ्गादित्यस्यैवायं प्रपञ्चः । तस्मात्परमात्मैवाऽऽकाशः ॥ ४१ ॥ ( १३ )

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

बार्हदारण्यके षष्ठप्रपाठके—‘कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ’ [ बृ० ४ । ३ । ७ ] इति । अस्यायमर्थः—विज्ञानमयो लिङ्गशरीमयस्तेन स्थूलदेहव्यतिरेकः सिद्धः प्राणेषु चक्षुरादीन्द्रियेषु प्राणादिवायुषु च हृद्यन्तःकरणे च । सप्तमीविभक्त्या प्राणादीनामाधारत्वनिर्देशादाधेयस्य पुरुषस्येन्द्रियप्राणवायुमनोन्यत्वं सिद्धम् । अतःशब्देन धीवृत्तिभ्यः कामसंकल्पादिभ्यो व्यतिरेकः सिद्धः । बुद्धिपरिणामरूपाणामासां वृत्तीनां बहिर्भूतत्वात् । एवं च सति स्थूलदेहेन्द्रियेभ्यः प्राणवायुभ्योऽन्तःकरणतद्वृत्तिभ्यश्च व्यतिरिक्तस्तेषां सर्वेषां साक्षित्वेन चिज्ज्योतिःस्वरूपः पुरुष इत्युक्त भवति । स च पुरुषो लिङ्गशरीरतादात्म्याध्यासेन लिङ्गशरीरेण समानः सन्निहलोकपरलोकावनुसंचरतीति । तत्र कि मिदं वाक्य ससार्यनुवादमात्रपरं किंवाऽससारिपरमात्मपरमिति सशयः । कि तावत्प्राप्तम् । ससारिस्वरूपमात्रानुवादपरमेवेति । कुतः । उपक्रमोपसंहाराभ्याम् । उपक्रमे ‘ योऽयं विज्ञानमयः प्राणेषु ’ इति जीवलिङ्गात् । उपसंहारे च ‘ स वा एष महानज आत्मा योऽय ’ [ बृ० ४ । ४ । २२ ] ‘ विज्ञानमयो मनोमयः प्राणमयः ’ [ बृ० ४ । ४ । ५ ] इत्यात्मेति तदपरित्यागात् । मध्येऽपि संप्रसादस्वप्नविबुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति प्राप्तेऽभिधीयते—परमात्मैवात्र प्रतिपाद्यः । कुतः । व्यपदेशादित्यनुवर्त्य सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् । सुषुप्तौ तावत्प्राज्ञेनाऽऽत्मना सपरिष्वक्तो न बाह्य किंचन वेद नाऽऽन्तरमिति शारीराद्भेदेन प्राज्ञं परमात्मान व्यपदिशति । एवमुत्क्रान्तावप्ययं शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्यातीति शारीराद्भेदेन परमात्मान व्यपदिशति । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्परमेश्वर एवात्र विवक्षित इति गम्यते । यदुक्तमाद्यन्तमध्येषु शारीरस्य लिङ्गात्तत्परत्वमस्य वाक्यस्येति । अत्रोच्यते—उपक्रमे ‘ योऽय विज्ञानमयः प्राणेषु ’ इति न ससारिस्वरूपप्रतिपादनं विवक्षति किं तर्हि संसारिस्वरूपमनूद्य परेण ब्रह्मणाऽस्यैक्यं विवक्षति । यतो

ध्यायतीव लेलायतीवेत्येवमाद्युत्तरग्रन्थप्रवृत्तिः ससारधर्मनिराकरणपरा लक्ष्यते ‘ *अत ऊर्ध्वं मोक्षाय ब्रूहि ’ [ बृ० ४ । ३ । १४ ] इति पदे पदे पृच्छति । येन च ‘ अनन्वागतस्तेन भवत्यसङ्गो ह्यय पुरुषः ’ [ बृ० ४ । ३ । १५–१६ ] इति पदे पदे वक्ति । ‘ अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ’ [ बृ० ४ । ३ । २२ ] इति । उपसंहारेऽपि ‘ स वा एष महानज आत्मा ’ इति । योऽयं विज्ञानमयः [ प्राणेषु ] संसारीव लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः । तस्माद्ब्रह्मात्र प्रतिपाद्यं न शारीर इति सिद्धम् ॥४२॥ (१३)

## पत्यादिशब्देभ्यः ॥ ४३ ॥ ( १४ )

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यम् । कुतः । पत्यादिशब्देभ्यः । अस्मिन्प्रकरणे पत्यादयः शब्दा असंसारित्वप्रतिपादकाः संसारित्वप्रतिषेधनाश्च श्रूयन्ते ‘ सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ’ [ बृ० ४ । ४ । २२ ] इत्यादयः । ‘ स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् ’ [ बृ० ४ । ४ । २२ ] इत्येवमादयश्च । तस्माज्जीवब्रह्मैक्यमिह प्रतिपाद्यमिति सिद्धम् ॥ ४३ ॥ ( १४ )

## इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितकृतौ ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

अथ चतुर्थः पादः ।

---

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

‘ अथातो ब्रह्मजिज्ञासा ’ [ ब्र० सू० १ । १ । १ ] इति ब्रह्मजिज्ञासां प्रतिज्ञाय ‘ जन्माद्यस्य यतः ’ [ ब्र० सू० १ । १ । २ ] इति ब्रह्मणो लक्षणमुक्तम् । तल्लक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याशब्दत्वेन प्रधानं निराकृतम् । ‘ ईक्षतेर्नाशब्दम् ’ [ ब्र० सू० १ । १ । ७ ] इति । गतिसामान्यं च वेदान्तवाक्याना ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन । इदानीं तु प्रधानस्याशब्दत्व न संभवति कचिच्छाखासु तत्प्रतिपादकशब्दानां श्रूयमाणत्वात् । अतः प्रधानस्य कारणत्वं वेदसिद्धमेवेत्याशङ्क्य तेषामन्यपरत्वं प्रतिपादयितु पादोऽयमारभ्यते । कठवल्लीषु तृतीय-

---

* अत एवोपरिष्टाद्विमोक्षायैव ब्रूहि, इत्ययमेतल्लिखितपुस्तके पाठः ।

वल्ल्यां श्रूयते—'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' [क० १ । ३ । ११ ] इति । तत्राव्यक्तशब्देन प्रधानमुच्यते शरीरं वेति संशये सांख्याभिमतं प्रधानमिति तावत्प्राप्तम् । कुतः । प्रत्यभिज्ञानात् । महदव्यक्तपुरुषाः सांख्यशास्त्रे परापरभावेन यथा प्रसिद्धास्तथैव श्रुतौ प्रत्यभिज्ञायन्ते । तस्मात्प्रधानस्याशब्दत्वमनुपपन्नम् । तदेव जगत्कारणम् । श्रुतिस्मृतिप्रसिद्धिभ्य इति प्राप्ते ब्रूमः—न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रकारणं प्रधानं तादृशं प्रत्यभिज्ञायते । शब्दमात्रं ह्यव्यक्तमिति प्रत्यभिज्ञायते । अत्र प्रकरणपर्यालोचनया न सांख्यपरिकल्पितं प्रधानं प्रतीयते किं तर्ह्यव्यक्तशब्देन शरीरं परिगृह्यते । कुतः । प्रकरणात्पारिशेष्याच्च । तथाहि—पूर्वस्मिन्वाक्ये शरीरादीनि रथादित्वेनोक्तानि ।

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' ' ॥ [ का० १।३।३।४ ]

इति पूर्ववाक्योक्तानि वस्तून्यस्मिन्वाक्ये प्रत्यभिज्ञायन्ते । इन्द्रियादिभिरसंयतैः संसारः संयतैस्त्वध्वनः पारं विष्णोः पदमाप्नोतीत्युक्त्वा किं तद्विष्णोः पदमित्याकाङ्क्षायाम्—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' ॥ [का० १।३।१०-११]

इति प्रकृत्येन्द्रियादिभ्यः परां गतिं दर्शयति । अत्र पूर्वस्मिन्वाक्य इन्द्रियार्थमनोबुद्धिशब्दैर्निर्दिष्टाः पदार्था उत्तरस्मिन्वाक्ये त एव महदादिशब्दैर्निर्दिश्यन्ते । पूर्वत्राऽऽत्मशब्देन निर्दिष्टं वस्तूत्तरत्र पुरुषशब्देन निर्दिष्टम् । उत्तरवाक्ये महच्छब्देन यदुक्तं तत्पूर्ववाक्ये बुद्धिशब्देन संगृहीतम् । बुद्धिर्हि द्विविधा—अस्मदादिबुद्धिरेका तत्कारणभूता हिरण्यगर्भबुद्धिरपरा सा महच्छब्दवाच्या । तयोः पूर्वत्रैकत्वेन निर्दिष्टयोरुत्तरत्र भेदेन निर्देशः पूर्वत्र शरीरपदमुत्तरत्राव्यक्तपदम् । तयोः पारिशेष्यादेकार्थत्वमित्यव्यक्तं शरीरम् । सूत्रार्थस्त्वेवम्—आनुमानिकमित्यनुमानगम्यत्वात्प्रधानम् । तदप्येकेषां शाखिनां प्रसिद्धम् । तदव्यक्तशब्देन पठ्यते । तस्मादशब्दत्वमसिद्धमिति चेन्न । किं कारणम् । शरीरस्य पूर्ववाक्ये रथरथिरूपकेण विन्यस्तस्य प्रतिपादितस्यात्र वाक्येऽव्यक्तशब्देन गृहीतेर्ग्रहणात् ॥ १ ॥

ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दवाच्यत्वमत आह—

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तुशब्देन चोद्यनिरासः । स्थूलशरीरारम्भकं भूतसूक्ष्मं कारणात्मनाऽवस्थितमव्यक्तश-

ब्देन दर्शयतीत्यनुषङ्गः । कुतः । तदर्हत्वात् । अव्यक्तशब्दार्हत्वादित्यर्थः । 'तर्ह्यव्याकृतमासीत्' [बृ० १ । ४ । ७] इति श्रुतेः । अव्याकृतमव्यक्तमित्यनर्थान्तरम् । तस्मात्सूक्ष्मशरीरमव्यक्त न प्रधानमव्यक्तशब्दवाच्यम् ॥ २ ॥

नन्वेवं जगतः सूक्ष्मावस्थाया एव सांख्यैः प्रधानत्वेनाङ्गीकारात्तदेवाव्यक्तमिति प्राप्तमित्याशङ्कापनोदायाऽऽह—

## तदधीनत्वात्तदर्थवत् ॥ ३ ॥

नैष दोषः सांख्यमतापत्तिरिति । यदि वयं स्वतन्त्रां कांचित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम तया प्रधानकारणवादं प्रसञ्जयेम । तथा नाभ्युपगच्छामः । किं तर्हि परमेश्वराधीना त्वियं जगतः प्रागवस्थेत्यभ्युपगच्छामः, न स्वतन्त्रेति । सा चावश्यमभ्युपगन्तव्या । तया विना परमेश्वरस्य स्रष्टृत्वं न सिध्यति । शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः । मुक्तानां च पुनरनुत्पत्तिः । विद्यया तस्या बीजशक्तेर्दग्धत्वात् । सैव जगद्बीजशक्तिः परमेश्वराश्रया मायेत्युच्यते । सैव महासुषुप्तिः । तस्यां स्वरूपबोधरहिताः संसारिणो जीवाः शेरते । सैव बीजशक्तिरव्यक्ताक्षरमायाकाशादिशब्दैर्निर्दिश्यते—'महतः परमव्यक्तम्' [ का० १ । ३ । ११ ] 'अक्षरात्परतः परः' [ मु० २ । १ । २ ] 'मायां तु प्रकृतिं विद्यात्' [ श्वे० ४ । १० ] 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' [ बृ० ३ । ८ । ८ ] इत्येवमादिषु श्रुतिषु । नन्वीश्वरादेव जगदुत्पत्तौ सत्यामव्यक्तवैयर्थ्यमित्याशङ्क्योक्तमर्थवदिति । ईश्वरस्य सहकारित्वात्प्रयोजनवदित्यर्थः । तस्मादीश्वराधीना मायाऽव्यक्तशब्दवाच्या तद्विकारत्वाल्लिङ्गशरीरमेवाव्यक्तशब्दवाच्यम् । तत्रैव तस्य रूढेः । इन्द्रियाणि तु स्वशब्दैरेवोच्यन्ते नाव्यक्तशब्देनेति दिक् । सूत्रद्वयस्यापरा व्याख्या शरीर द्विविधम्—स्थूलं सूक्ष्मं चेति । तच्चोभयमपि शरीरमविशेषात्पूर्ववाक्ये रथत्वेन संकीर्तितम् । इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते । सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । तच्चावश्यमभ्युपेयम् । तदधीनत्वाच्च बन्धमोक्षव्यवहारस्य ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

किं च सांख्यैः प्रकृतिपुरुषविवेकान्मोक्ष वदद्भिस्तदर्थं प्रकृतिरपि ज्ञेयेत्युक्तम् । नचेह तादृशज्ञानोपयुक्तं किंचिद्वाक्यमव्यक्त ज्ञेयमिति श्रूयते । नचानुपदिष्ट पदार्थज्ञान पुरुषार्थाय भवति । तस्मान्नाव्यक्तशब्देन प्रधानमभिधीयते ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ननु ज्ञेयत्वावचनान्नाव्यक्त प्रधानमिति यदुक्त तदसंगतम् । अव्यक्तशब्दवाच्यस्यैवोत्तरत्र ज्ञेयत्ववचनात् ।

' अशब्दमस्पर्शमरूपमव्ययं
तथाऽरस नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात्प्रमुच्यते ' ॥ [ का० २ । ३ । १५ [ इति ।

अत्र शब्दादिरहितं प्रधानमेव निचाय्यत्वेन प्रतिपादितमिति चेत् । अत्रोच्यते—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम् । प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते । कुतः । प्रकरणात् । प्राज्ञस्य हि प्रकरणं विततं वर्तते । ' पुरुषान्न पर किंचित्सा काष्ठा सा परा गतिः ' [ का० १ । ३ । ११ ] इत्यादिनिर्देशात् ।

' एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः' [का०१।३।१२] इति च ।
' यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ' [ का० १ । ३ १३ ] इति च ।

एतदुक्तं भवति—वाच मनसि यच्छेद्धारयेत् । वागिन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत । मनोऽपि ज्ञानशब्दोदितायां बुद्धौ धारयेत् । दोषदर्शनेन संकल्पादिवृत्तीरुत्सृज्याध्यवसायलक्षणा या बुद्धिस्तद्रूपमात्रेणावतिष्ठेत । तामपि बुद्धिमात्मनि भोक्तृरूपायां बुद्धौ धारयेत् । तं महान्तमात्मानं शान्त आत्मनि परस्मिन्पुरुषे धारयेदिति । परमात्मज्ञानायैव वागादिसयमस्य विहितत्वान्मृत्युमुखप्रमोक्षणफलत्वाच्च स एवात्र ज्ञेयत्वेन निर्दिश्यते न प्रधानम् । तस्मान्न प्रधानमव्यक्तशब्दनिर्दिष्टम् ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा । यस्मात्त्रयाणामग्निजीवपरमात्मनामेवास्मिन्कठवल्लीग्रन्थे वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते तद्विषय एव प्रश्नश्च । तत्र तावत् ' स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ' [ का० १।१। १३ ] इति । अयमग्निविषयः प्रश्नः । 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ' [ का० १ । १ । २० ] इति जीवविषयः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ' [ का० १ । २ । १४ ] इति परमात्मविषयः । प्रतिवचनमपि— ' लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ' [ का० १ । १ । १५ ] इत्यग्निविषयम् ।

' हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा वा मरणं प्राप्याऽऽत्मा भवति गौतम ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये तु संयन्ति यथाकर्म यथाश्रुतम् ' । [ का० २ । पा०६–७ ]

इति जीवविषयम् । ' न जायते म्रियते वा विपश्चित् ' [ का० १ । २ । १८ ] इत्यादि बहुप्रपञ्चं परमात्मविषयम् । नैव प्रधानविषयः प्रश्नोऽस्त्यपृष्टत्वान्नोत्तरमपि । ननु मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे द्वितीयेनाग्निविद्यां तृतीयेनाऽऽत्मविद्यां ' येयं प्रेत ' इति वराणामेष वरस्तृतीयः ' [ का० १ । १ । २० ] इति लिङ्गात् । तत्र ' अन्यत्र धर्मात् ' [ का० १ । १ । १४ ] इत्यपूर्वोऽयमन्यः प्रश्नो वरदानव्यतिरेकेण कथं कृत इति चेन्न । तत्त्वमस्यादिश्रुतिभ्यो जीवप्राज्ञयोरेकत्वाभ्युपगमात् ।

' स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ' ॥ [ का० २ । ४ । ४ ]

इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदस्यात्रोक्तत्वाच्च । प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति न प्रधानमव्यक्तशब्दवाच्यम् ॥ ६ ॥

## महद्वच्च ॥ ७ ॥ ( १ )

किंच यथा महच्छब्दस्य वैदिकैः साख्याभिमताद्वितीयतत्त्ववाचित्वं नाङ्गी क्रियते । 'महान्तं विभुमात्मानम् ' [ का० १ । २ । २२ ] 'वेदाहमेत पुरुष महान्तम् ' [ श्वे० ३ । ८ ] इत्यादावात्मशब्दसामानाधिकरण्यात् । एव वैदिकस्याव्यक्तशब्दस्य न प्रधानवाचित्वम् ॥ ७ ॥ ( १ )

## चमसवदविशेषात् ॥ ८ ॥

पुनरपि प्रधानकारणवादी प्रधानस्याशब्दत्वमसिद्धमिति शङ्कते । तथाहि श्वेताश्वतरोपनिषदि चतुर्थाध्याये—

' अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजां जनयन्ती सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ' ॥

[ श्वे० ४ । ५ ] इति श्रूयते ।

अस्यार्थः—लोहितशुक्लकृष्णशब्दै रजःसत्त्वतमांस्यभिधीयन्ते । रजःसत्त्वतमोगुणात्मिकाम् । अजां न जायत इत्यजाम् । मूलप्रकृतिम् । नन्वजाशब्दश्छाग्यां रूढ इति चेन्न । सा तु रूढिरिह न ग्राह्या विद्याप्रकरणात् । बह्वीं प्रजां त्रैगुण्यात्सरूपां जनयन्तीम् ।

तां प्रकृतिमज एको जुषमाणः प्रीयमाणः सेवमानो वाऽनुशेते । तामेवाऽऽत्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति । अन्य. पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तः सन्भुक्तभोगामेनां प्रकृतिं जहाति त्यजति मुच्यत इत्यर्थः । तस्माच्छ्रुतिमूलैव सांख्याना प्रधानकल्पनेत्येव प्राप्ते ब्रूम.—नानेन मन्त्रेण श्रौतत्वं सांख्यवादस्योपपद्यते। कुतः। अविशेषात् । साख्यवाद एवेहाभिप्रेत इति विशेषावधारणाभावादित्यर्थः । तत्र दृष्टान्तः— चमसवदिति । यथा हि ‘ अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः ’ [ बृ० २ । २ । ३ ] इत्यस्मिन्मन्त्रे स्वातन्त्र्येणायं चमस इति ज्ञातुं न शक्यते । यज्ञपात्रेषु सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः । एवमजामन्त्रेऽपि न प्रधाननिर्णय इत्यशब्दत्वं प्रधानस्य ॥ ८ ॥

नन्विदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति वाक्यशेषाच्चमसनिर्णयो भवति । इह पुनः केयमजा प्रतिपत्तव्येत्यत आह सूत्रकारः—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥**

तुरवधारणे । ज्योतिस्तेज उपक्रम आदौ यस्याः प्रकृतेः सा ज्योतिरुपक्रमा । तेजोबन्नात्मिकैवात्राजेति विवक्षिता । कुतः । तथा ह्येके छन्दोगा अधीयते—‘ यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्ण तदन्नस्य ’ [ छा० ६ । ४ । १ ] इति च्छान्दोग्ये तेजोबन्नात्मिकायाः प्रकृतेर्लोहितादिरूपाणि श्रुतानि तान्येवात्र प्रत्यभिज्ञायन्ते । लोहितादिशब्दसामान्यात् । रोहितादीना च शब्दाना रूपविशेषेषु मुख्यत्वात् । ततः श्रौतप्रत्यभिज्ञायाः प्राधान्याल्लोहितादिशब्दानां मुख्यार्थसंभवात्तेजोबन्नात्मिका प्रकृतिरजेति गम्यते । अस्मिन्नेव प्रकरणे—‘ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ’ [ श्वे० ४ । १० ] इति प्रतिपादनात् । प्रकृतिविकृत्योरभेदविवक्षया लोहितादिमत्तयाऽनिर्वाच्या मायैवाजाशब्देन विवक्षिता सांख्यप्रकृतिरत्र सत्त्वरजस्तमोगुणात्मिका ग्राह्या ॥ ९ ॥ ( १ )

ननु तेजोबन्नानामुत्पत्तिश्रवणादजाशब्दस्य छाग्यां रूढत्वाच्च योगरूढयोरसंभवात्कथं प्रकृतावजाशब्दप्रयोग इत्यत आह सूत्रकारः—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ ( २ )**

चश्चोद्यनिरासे । न प्रकृतावजाशब्दानुपपत्तिः । कुतः । कल्पनोपदेशात् । यद्यप्यजाशब्दश्छागवाचित्वान्नोक्तप्रकृतौ रूढः । नापि न जायत इति योगः संभवति । तेजोबन्नाना ब्रह्मण उत्पत्तिश्रवणात् । तथाऽप्यजात्वं तेजोबन्नात्मिकाया प्रकृतौ सुखावबोधाय कल्प्यते । अत्राऽऽहुर्भाष्यकृतः—तथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा वा तां कश्चिदजो जुषमाणोऽनुशेते कश्चिच्चैनां भुक्तभोगां जह्यादेवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूप चराचरलक्षण विकारजातं जनयत्यविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत इति । नचेदमाशङ्कितव्यमेकः

क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीति । अतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति । न ह्ययं क्षेत्रज्ञभेदप्रतिपिपादयिषा किं तर्हि बन्धमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा । प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते । भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' [ श्वे० ६ । ८ ] इत्यादिश्रुतिभ्यः । मध्वादिवत् । यथा—'असौ वा आदित्यो देवमधु' [ छा० ३ । १ । १ ] 'वाचं धेनुमुपासीत' [ बृ० ५ । ८ । १ ] इत्यादावादित्यस्यामधुनो मधुत्वं वाचश्चाधेनोर्धेनुत्वमित्येवंजातीयकं कल्प्यते । एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः । तस्मात्तेजोबन्नात्मिका प्रकृतिरजेति सिद्धम् ॥ १० ॥ (२)

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

एवं परिहृतेऽप्यजामन्त्रे पुनरन्यस्मान्मन्त्रात्सांख्यः प्रत्यवतिष्ठते । बृहदारण्यके श्रूयते— 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' [ ४ । ४ । १७ ] इति । अस्यायमर्थः—पञ्च पञ्चजना आकाशश्च यस्मिन्नाश्रितास्तमेवाऽऽश्रयभूतमात्मानममृतं ब्रह्म मन्ये एवंविद्वानहममृतो भवामीति । तत्र पञ्चपञ्चजना इति प्रोक्ताः पदार्थाः सांख्यशास्त्रप्रसिद्धाः

> 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
> षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ।' [ सांख्यका० ३ ]

इति संगृहीता अत्रोच्यन्त आहोस्विच्छ्रुतिप्रोक्ताः प्राणचक्षुःश्रोत्रमनोऽन्नसंज्ञका इति संशयः । सांख्यप्रोक्ताः पदार्था इति तावत्प्राप्तम् । कुतः । पञ्चविंशतिसंख्याकाः पदार्था उच्यन्ते जनशब्दश्च तत्त्वोपलक्षणार्थः । पञ्चपञ्चेति शब्दद्वयं श्रूयते । तत्रैकेन पञ्चशब्देन तत्त्वगता पञ्चसंख्या विवक्षिता । द्वितीयेन पञ्चसंख्याविषयाऽपरा पञ्चसंख्या विवक्षिता । तथा च पञ्चसंख्याविशिष्टानि तत्त्वपञ्चकानीत्युक्तं भवति । ततः पञ्चभिः पञ्चकैः पञ्चविंशत्यवभासनात्सांख्यतत्त्वानामुपसंग्रहान्न प्रधानमशब्दमिति प्राप्तेऽभिधीयते । यद्यपि पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते तथाऽपि न पञ्चविंशतिर्नियन्तुं शक्यते । पञ्चविंशतिसंख्याकानां तत्त्वानामाश्रयत्वेनाऽऽत्मनो ग्रहणात् । न ह्ययमात्मा पञ्चविंशत्यन्तःपाती । तथा सत्येकस्यैवाऽऽधेयत्वमाधारत्वं चेति विरोधप्रसङ्गात् । यस्मिन्पञ्च पञ्चजना आकाशश्चेत्याकाशोऽप्यपरः श्रूयते । न च तस्यापि पञ्चविंशत्यन्तःपातित्वम् । आकाशत्वेऽपि पृथङ्निर्देशसमुच्चययोर्विरोधात् । अत आत्माकाशाभ्यां सह सप्तविंशतिसंपत्तेर्न सांख्यतत्त्वानामवकाशः । कस्तर्हि वाक्यार्थः । उच्यते—पञ्चजनशब्दोऽयं समस्तः संज्ञावाची । 'दिक्संख्ये संज्ञायाम्' [पा० सू० २।१।५० ] इति समासविधानात् । अतः पञ्चजनसंज्ञकाः पदार्थाः पञ्चसंख्याका इत्युक्तं भवति । सूत्रार्थस्त्वेवम्—संख्योपसंग्रहादपि सांख्यप्रकृतेः श्रौतत्वं न संगच्छते ।

कुतः। नानाभावात्। अवान्तरसंख्याया अनुगमकधर्माभावेन पञ्चानां पञ्चकानां प्रतिपादयितुमशक्यत्वात्। पञ्चशः पञ्चशः साधारणधर्मश्रवणेऽपि कथंचित्पञ्चविंशतिसंख्याङ्गीकारे बाधकान्तरमाह—अतिरेकाच्चेति। पञ्चजनापेक्षयाऽऽकाशपुरुषयोरतिरिक्तत्वान्न पञ्चविंशतिसंख्याप्रतिपत्तिः। तस्मान्न साख्यप्रकृतिरत्र विवक्षिता ॥ ११ ॥

पञ्चजनशब्देन के विवक्ष्यन्त इत्याकाङ्क्षायामाह—

**प्राणादयो वाक्यशेषात् ॥ १२ ॥**

अत्र प्राणचक्षुःश्रोत्रान्नमनांसि पञ्चजनशब्देरुच्यन्ते। कुतः। वाक्यशेषात्। 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्न मनसो ये मनो विदुः' [बृ० ४।४।१८] इति। अत्र वाक्यशेषगताः प्राणादयः सनिधानात्पञ्चजना इति विवक्ष्यन्ते। ननु कथं पुनः प्राणादिषु जनशब्दप्रयोग इति चेत्। जनसबन्धात्प्राणादयो जनशब्दभाजो भवन्ति जनशब्दश्च पुरुषापरपर्यायः प्राणेषु प्रयुक्त। 'ते वा एते पञ्च ब्रह्मपुरुषाः' [छा० ३।१३।६] इति श्रुतेः। समासबलाच्च समुदायस्य प्राणादिषु रूढत्वमविरुद्धम्। कथ पुनरसति प्रथमप्रयोगे रूढिराश्रीयते। उच्यते—यथोद्भिदा यजेत यूप छिनत्ति वेदिं करोतीत्यादौ प्रथमप्रयोगाभावेऽपि रूढिरङ्गीकृता तथाऽयमपि पञ्चजनशब्दः समासबलात्संज्ञाकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु प्रवर्तिष्यत इति न काऽप्यनुपपत्तिः। प्राणादीनां पञ्चानां साक्षी चिदात्मा द्वितीयैः प्राणादिशब्देरभिधीयते ॥ १२ ॥

ननु माध्यंदिनानामन्नस्य प्राणादिष्वाम्नानाद्भवतु पञ्चसख्या। काण्वानां त्वनाम्नानात्कथं पञ्चसंख्याऽत आह—

**ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ ( ३ )**

असत्यपि काण्वानामन्ने ज्योतिषा सह तेषां पञ्चसख्या पूर्येत। तेऽपि हि 'यस्मिन्पञ्च पञ्चजना' [ बृ० ४ । ४ । १७ ] इत्यत. पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिर्णयाय ज्योतिरधीयते—'तद्देवा ज्योतिषां ज्योतिः' [ बृ० ४ । ४ । १६ ] इति। अत्रोभयेषां समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे भवतः। यथा समानेऽप्यतिरात्रे वचनभेदात्षोडशिनो ग्रहणाग्रहणे तद्वत्। तस्मात्प्रधानमशब्दमिति सिद्धम् ॥ १३ ॥ ( ३ )

**कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥**

योऽय वेदान्तसमन्वयो जगत्कारणब्रह्मविषयः सार्धैस्त्रिभिः पादैः प्रतिपादितस्तमाक्षिप्य समाधातुमयमारम्भः। उक्तः समन्वयो न संभवति। वेदान्तेषु बहुशो विरोधदर्शनात्प्रामाण्यस्य[च] दुरुपपादत्वात्। तथा हि—'आत्मन आकाशः संभूतः' [ तै०२ । १ ] इति तैत्तिरीयके वियदादीन्प्रति स्रष्टृत्वं प्रतीयते। छान्दोग्ये—'तत्तेजोऽसृजत' [ छा० ६ । २ । ३ ] इति तेजआदीन्प्रति। ऐतरेयके—'स इमाँल्लोकानसृजत' [ ऐ० आ०

२ । ४ । १ । २ । ३ ] इति लोकान्प्रति । मुण्डके— 'एतस्माज्जायते प्राणः' [मु० २। १ । ३ ] इति प्राणादीन्प्रति । एवं कार्यविषये परस्परविरोधः । न केवलं कार्यद्वारेणैव विरोधः किं तर्हि कारणस्वरूपोपन्यासेऽपि विरोधो दृश्यते । तथा हि—' सदेव सोम्येदमग्र आसीत् ' [ छा० ६ । २ । १ । २ ] इति च्छान्दोग्ये सद्रूपत्वं कारणस्यावगम्यते । तैत्तिरीयके—' असद्वा इदमग्र आसीत् ' [ तै० २ । ७ ] इति कारणस्यासद्रूपत्वम् । ऐतरेयके च—' आत्मा वा इदमेक एवाग्र आसीत् ' [ ऐ० १ । १ ] इत्यात्मरूपत्वम् । अतो विरोधान्न युक्तः समन्वय इति प्राप्ते ब्रूमः । भवतु नाम सृज्येषु वियदादिषु तत्क्रमे च विवादः । वियदादीनामतात्पर्यविषयत्वादद्वितीयब्रह्मबोधायैव हि तदुपन्यासः । तात्पर्यविषये तु जगत्स्रष्टरि ब्रह्मणि न क्वापि विरोधोऽस्ति । सूत्रार्थ इत्थम्—एकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः कारणत्वेन व्यपदिष्टस्तथाभूतस्यैव शाखान्तरेऽप्युक्तेः कारणे ब्रह्मणि विगानं नास्तीति ॥ १४ ॥

यत्तु ' असद्वा इदमग्र आसीत् ' [ तै० २ । ७ ] इत्यादौ कारणविषयं विगानं दर्शितं तत्परिहारमाह—

## समाकर्षात् ॥ १५ ॥ ( ४ )

' असद्वा इदमग्र आसीत् ' इत्यत्र पूर्वप्रकृतस्य सत एवाऽऽकर्षणान्नासत्कारणविषयं विगानमस्ति । तथा हि—' असन्नेव स भवति ' [ तै० २ । ६ ] इत्यसद्वादं निराकृत्य ' अस्ति ब्रह्मेति चेद्वेद ' इति सदात्मानं निर्धार्य ' सोऽकामयत ' [ तै० २ । ६ ] इति सत एव कारणात्सृष्टिमुक्त्वा ' तत्सत्यमित्याचक्षते ' इत्युपसंहृत्य ' तदप्येष श्लोको भवति ' इति प्रकृतविषयः श्लोक उदाहृतः । तत्रैव सति नासच्छब्देन शून्यवादः परिग्रहीतुं शक्यते । प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात् । सच्छब्दवाच्येऽपि ब्रह्मण्यसच्छब्दस्य नामरूपव्याकरणाभावेन प्रागुत्पत्तेरौपचारिकप्रयोगसंभवाच्च । विद्यारण्यपादा आहुः—असच्छब्देनाभिधानं तदव्याकृताभिप्रायं नात्यन्[न्ता]भावाभिप्रायं ' कथमसतः सज्जायेत ' [ छा० ६ । २ । २ ] इति श्रुत्यन्तरे चाभावस्य कारणत्वनिषेधादिति । ' तद्धेदं तर्ह्यव्याकृतमासीत् ' [ बृ० १ । ४ । ७ ] इति निरध्यक्षस्य जगतो व्याकरणाभावमुक्त्वा ' स एष इह प्रविष्ट आनखाग्रेभ्यः ' [ बृ० १ । ४ । ७ ] इत्यध्यक्षस्य चेतनस्येश्वरस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् । एवं सर्वत्र यथाव्यपदिष्टोक्तिरूह्या । तस्मादेकवाक्यतायाः सुसंपादत्वाद्युक्तो जगत्कारणे समन्वयः ॥ १५ ॥ ( ४ )

## जगद्वाचित्वात् ॥ १६ ॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते बालाकिनाम्ना ब्राह्मणेनाऽऽदित्यादिषु षोडशसु वेद्यत्वेनोक्तेषु राजाऽजातशत्रुस्तान्निराकृत्य ' ब्रह्म ते ब्रवाणि ' इत्युपक्रम्य

स्वयमाह ' यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः ' [कौ० ब्रा० ४ । १९ ] इति । तत्र किं जीवो वेदितव्य उत मुख्यः प्राण आहोस्वित्परमात्मेति संशयः । किं तावत्प्राप्तम् । प्राण इति । कुतः । ' यस्य वैतत्कर्म ' इति श्रवणात्कर्मशब्दस्य चलनवाचित्वाद्देहादिचलनस्य च प्राणसबन्धित्वाद्वाक्यशेषे च ' प्राण एवैकधा भवति ' [ कौ० ३ । ३ ] इति प्राणशब्दश्रवणाच्च । अथ वाऽत्र जीवो वेदितव्यः । ' यस्य वैतत्कर्म ' इति धर्माधर्मलक्षणकर्मोपदेशसभवात् । पूर्वप्रकृतानाम् ' आदित्ये पुरुषः ' [ छा० ४ । ११ । १ ] ' चन्द्रमसि पुरुष. ' [ कौ० ४ । ४ ] इत्यादीनां षोडशानां पुरुषाणां भोगोपकरणानां भोक्तुर्जीवस्य कर्तृत्वसभवेनैतेषा॰ पुरुषाणा कर्तृत्वं जीवस्योपपद्यते । अन्यच्च जीवलिङ्गमत्र दृश्यते । वेदितव्यपुरुषज्ञानोन्मुख बालाकिं प्रत्यजातशत्रुणा सुप्त पुरुषमामन्त्रणेन सबोध्य ततोऽनुत्थित पाणिघातेनोत्थित प्रदर्श्य प्राणादिव्यतिरिक्तस्य जीवस्य प्रतिपादनादित्येव प्राप्ते ब्रूमः—अत्र परमात्मैव वेदितव्यः । कुतः । ' ब्रह्म ते ब्रवाणि ' इत्युपक्रमसामर्थ्यात् । इह हि बालाकिरजातशत्रुणा सह ' ब्रह्म ते ब्रवाणि ' इति सवदितुमुपचक्रमे । स च कतिचिदादित्याद्यधिकरणान्पुरुषान्मुख्यब्रह्मदृष्ट्योक्त्वोपरराम । तमजातशत्रु ' मृषा वै खलु मा सवदिष्ठा ब्रह्म ते ब्रवाणि ' इति तान्पुरुषान्निराकृत्य स्वयमजातशत्रुरेतेषा पुरुषाणां कर्तारमन्यमुपदिदेश । यदि सोऽप्यमुख्यब्रह्मदृष्टिः स्यात्तर्हि बालाकिवन्मृषावादी स्यात् । उपक्रमोऽपि बाध्येत । तस्मात्परमेश्वर एवाय भवितुमर्हति । कर्तृत्व चैतेषा पुरुषाणा न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । ' यस्य वैतत्कर्म ' इत्यपि नाय चलनलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः । तस्याप्रकृतत्वात् । नच परमेश्वरे कर्मशब्दानुपपत्तिः । तस्य कर्मशब्दस्य जगद्वाचित्वात् । क्रियत इति कर्मेति जगदेव कर्मशब्देनोच्यत इत्यर्थः । सति जगद्वाचित्वे कर्मशब्दः सप्रयोजनो भविष्यति । षोडशानामेव पुरुषाणा कर्तेश्वर इतिशङ्कानिवृत्तिरेव प्रयोजनम् । अथवा किमनेन षोडशाना च कर्तरि सकोचेन । एतत्कृत्स्नं जगद्यस्य कार्य स एव वेदितव्य इति । कृत्स्नजगत्कर्तृत्व तु परमात्मन एव सभवति न जीवमुख्यप्राणयोः । एव च सति राज्ञो मृषावादित्वदोषो न भवेत् । जगत्कर्तृत्वेनैव जगदन्तःपातिनां षोडशपुरुषाणा कर्तृत्वसिद्धौ बालाकिना वेद्यत्वेनोपदिष्टाना तेषामवेद्यत्वज्ञापनार्थं ब्राह्मणपरिव्राजकन्यायेन पुरुषाणामिति पृथङ्निर्देशः ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

ननु वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं नेश्वरस्येति चेन्न । यतस्तद्व्याख्यातं प्रतर्दनाधिकरणे जीवमुख्यप्राणलिङ्गमपि ब्रह्मपरतया व्याख्यातमित्यर्थः । नचैव प्रतर्दनाधिकरणेनास्य गतार्थता । एषां पुरुषाणां कर्तृत्वस्य यस्यैतत्कर्मत्वस्य च तत्राप्रतिपादनात् । अनेन जगत्कर्तृत्वाभिधानेन जीवमुख्यप्राणाशङ्का

पुनरुत्पद्यमाना निवर्त्यते । अत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं प्रदर्शितं ' ब्रह्म ते ब्रवाणि ' इति । उपसंहारस्यापि निरतिशयफलश्रवणाद्ब्रह्मविषयत्व दृश्यते—' सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्य स्वाराज्यमाधिपत्यं पर्येति य एव वेद ' [ कौ० २ । २० ] इति । तस्माज्जगत्कर्ता परमात्मैव न जीवो मुख्यप्राणो वा ॥ १७ ॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ (५)

अपि च नैवात्र विवदितव्यं जीवप्रधान वेदवाक्य स्याद्ब्रह्मप्रधान वेति । यतोऽन्यार्थं ब्रह्मप्रतिपत्त्यर्थं जीवपरामर्शमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते । कस्मात् । प्रश्नप्रतिवचनाभ्याम् । प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तो विषयो दृश्यते—' क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वै तदभूत्कुत एतदागात् ' [ कौ० ४ । १९ ] इति । प्रतिवचनमपि—' यदा सुप्तः स्वप्न न कचन पश्यत्यथास्मिन्प्राण एवैकधा भवति ' [ कौ० १ । ३ ] ' एतस्मादात्मन· प्राणा यथायतन विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ' [ कौ० ४ । २० ] इति । सुषुप्तिकाले च परेण ब्रह्मणा जीव एकता गच्छति परस्माद्ब्रह्मणः प्राणादिक जगज्जायत इति वेदान्तमर्यादा । तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वच्छतारूपः प्रस्वाप उपाधिजनितविशेषज्ञानरहितं स्वरूपं यतस्तद्भ्रंशरूपमागमन सोऽत्र परमात्मा वेदितव्यत्वेन श्रावित इति गम्यते । अपिचैवमेके वाजसनेयिनोऽस्मिन्बालाक्यजातशत्रुसंवादे स्पष्ट विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्त परमात्मानमधीयते—' य एष विज्ञानमय. पुरुषः क्वैष तदाऽभूत्कुत एतदागात् ' [ बृ० २ । १ । १६ ] इतिप्रश्ने । प्रतिवचनेऽपि ' य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत ' इति । आकाशशब्दश्च परमात्मनि प्रसिद्धो ' दहरोऽस्मिन्नन्तराकाशः ' [ छा० ८ । १ । १ ] इति । स एव कौषीतकिब्राह्मणे प्रत्यभिज्ञायते ॥ १८ ॥ (५)

## वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके चतुर्थाध्याये मैत्रेयीं भार्यां प्रति याज्ञवल्क्य उपदिशति । तन्मैत्रेयीब्राह्मणमुच्यते । तत्रत्यं वाक्यम्—' न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति ' इत्युपक्रम्य ' न वा अरे सर्वस्य कामाय सर्वं प्रिय भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ' [ बृ० ४ । ५ । ६ ] इति । अत्रायं संशयः—किं विज्ञानात्मा द्रष्टव्यादिरूपेणोपदिश्यत आहोस्वित्परमात्मेति । विज्ञानात्मेति तावत्प्राप्तम् । कुतः । ' न वा अरे पत्युः कामाय ' इत्यादिवाक्यैर्भोगलालसस्य संसारित्वसूचनात् । अयमत्र वाक्यार्थः—पत्यौ प्रीतिं कुर्वती जाया पत्युः सुखाय प्रीतिं न करोति किं तु स्वस्य सुखायैव । एवं पतिपुत्रादयोऽपि स्वस्वसुखायैवेत-

रत्र प्रीतिं कुर्वन्तीति । भोगश्च नासङ्गेश्वरस्यावकल्पते । तस्माद्विज्ञानात्मैवेह द्रष्टव्यत्वादिनोपदिश्यत इति प्राप्ते ब्रूमः । परमात्मैवेहोपदिश्यते । कुतः । वाक्यान्वयात् । उपक्रमोपसंहारपर्यालोचनया वाक्यावयवाना ब्रह्मण्येवान्वयात् । एतद्वाक्योपक्रमे मैत्रेयी वित्तेन साध्येन कर्मणा किममृतं स्यादिति पप्रच्छ । याज्ञवल्क्यस्तु ' अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन [ बृ० ४ । ५ । ३ ] इत्युत्तरमाह । इति याज्ञवल्क्यादुपश्रुत्य ' येनाह नामृता स्या किमह तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि ' [ बृ० ४ । ५ । ४ ] इत्यमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशति । ब्राह्मणावसानेऽपि ' एतावदरे खल्वमृतत्वम् ' [ बृ० ४ । ५ । १५ ] इत्युपसंहृतम् । नचान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति प्रमाणमस्ति । नहि विज्ञानात्मविज्ञानेन सर्वं विज्ञातं भवति । ' ब्रह्म त परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद ' [ बृ० ४ । ५ । ७ ] इत्यादिना तन्निषेधात् । अयमस्याः श्रुतेरर्थः—यो हि ब्रह्मक्षत्रादिक जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धस्वभाव पश्यति तं मिथ्यादर्शिन तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति । तस्मादुपक्रमोपसहारसामर्थ्यादात्मज्ञानमेवात्रोपदिश्यते । आत्मा च परमात्मैव न शारीर इति ॥ १९ ॥

यत्पुनरुक्त प्रियसंसूचनोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इत्यत्राऽऽह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

जीवोपक्रमणं प्रतिज्ञासिद्धेर्लिङ्ग तत्सिद्ध्यर्थमित्याश्मरथ्यो मन्यते । जीवस्य परमात्मनोऽत्यन्तभिन्नत्व एकविज्ञाने सर्वविज्ञानप्रतिज्ञा । ' इद सर्व यदयमात्मा ' इति सार्वात्म्यप्रतिज्ञा । अनयोर्विरोधमाशङ्क्य तयोरभेदाशप्रतिपत्त्यर्थं जीवोपक्रम इत्यर्थः ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

ज्ञानध्यानाभ्यासाभ्यां संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतो जीवस्य परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते । श्रुतिश्चैव भवति—' एष सप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' [ छा० ८ । १२ । ३ ] इति ।

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ ( ६ )

अस्यैव परमात्मनो जीवभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथा च ब्राह्मणम्—'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' [ छा० ६ । ३ । २ ] इति । मन्त्रवर्णश्च—सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते ' [ तै० आ० ३ । १२ । ७ ] इति । एवंजातीयकानि बहूनि प्रमाणानि परस्यैवाऽऽत्मनो जीवभावेनावस्थान दर्शयन्ति । तत्रैवं मतत्रयस्य विवेकः—

आश्मरथ्यमते जीवपरयोर्भेदाभेदौ । यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथाऽपि प्रतिज्ञासिद्धेरीरीति सापेक्षत्वाभिधानात्कार्यकारणभावः कियान[प्य]भिप्रेत इति । औडुलोमिमतेऽवस्थान्तरापेक्षौ भेदाभेदौ मुक्ते. प्राग्भेदस्तदनन्तरमभेद इति । परमेश्वर एव जीवो नान्यस्तदुपाध्योर्मिथ्यात्वादिति । तत्र काशकृत्स्नीयमेव मत श्रुत्यनुसारीति ज्ञेयम् । विस्तरो भाष्ये द्रष्टव्यः ॥ २२ ॥ ( ६ )

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

यथाऽभ्युदयहेतुत्वाद्धर्मो जिज्ञास्य इत्युक्त पूर्वमीमासायामेव नि श्रेयसहेतुत्वाद्ब्रह्म जिज्ञास्यमित्युक्तमत्र । तस्य ब्रह्मणः किं लक्षणमित्याकाङ्क्षाया 'जन्माद्यस्य यतः ' [ ब्र०सू० १।१।२] इति तल्लक्षणमुक्तम् । एतावता ब्रह्मणो जगत्कारणत्व लक्षण निर्व्यूढम् । तच्च कारणत्वं समानमुपादाने निमित्ते चेति भवति सशयः किमात्मक ब्रह्मण. कारणत्व स्यादिति । निमित्तकारणत्वमेव ब्रह्मण इति तावत्प्राप्तम् । कुत.—'तदैक्षत' [ छा० ६।२।३] इति । ' स ईक्षाचक्रे ' [ प्र०६ । ३ ] 'स प्राणमसृजत' [ प्र०६ । ४ ] ' तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] इत्यादावीक्षापूर्वकजगत्कर्तृत्वश्रवणात् । सृज्यकार्यपर्यालोचनपूर्वकं कर्तृत्व लोके निमित्तकारणे कुलालादौ दृष्टम् । निमित्तस्य कुलालादेरुपादानमृत्पिण्डादिभावादर्शनात् । तस्माज्जगद्रूपकार्य प्रति ब्रह्म निमित्तमेव नोपादानमिति प्राप्ते ब्रूमः-प्रकृतिरुपादानं चकारान्निमित्तमपि ब्रह्मैव । कुतः । प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञादृष्टान्तयोरनुपरोधो विरोधाभावः सामञ्जस्यमिति यावत् । तस्मादित्यर्थ· । प्रतिज्ञा तावत्—' येनाश्रुत श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ' [ छा० ६ । १ । २ इति । अत्र चैकविज्ञानेन सर्वविज्ञान गम्यते । तदेकविज्ञानेन सर्वविज्ञान ब्रह्मणः सर्वोपादानत्वे सति तद्व्यतिरेकेण कार्याणामभावादुपपादयितु सुशकम् । नचोपादानोपादेययोरभेद· प्राप्त इति वाच्यम् । न वय तयोरभेद ब्रूमः । किंतु भेद व्यासेधाम इत्यभियुक्तोक्तेः । दृष्टान्तोऽपि—' यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्व मृन्मय विज्ञात स्यात् ' [ छा० ६ । १ । ४ ] इत्युपादानविषय एव दृश्यते । नचानेनोपादेयस्य सत्यत्व प्राप्तमिति वाच्यम् । ' वाचारम्भणं विकारो नामधेयम् । मृत्तिकेत्येव सत्यम् ' [ छा० ६ । १ । ४ ] इति तन्निराकरणात् । अतो ब्रह्मण उपादानत्व निमित्तत्व च सभवति । ' तदैक्षत बहु स्याम् ' [ छा० ६ । २ । ३ ] इति निमित्तकारणस्येक्षितु सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनं चोपदिश्यते । तस्माद्ब्रह्मैवाभिन्ननिमित्तोपादानम् । अत्र माध्वा यदाहुः—' कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः ' [ ब्र० सू० १ । ४ । १४ ] इत्यारभ्याष्टसूत्र्या विष्णौ मुख्यतः सर्वशब्दवाच्यत्वमिति । ' प्रकृतिश्च प्रतिज्ञा ' [ ब्र० सू० १ । ४ । २३ ] इत्यादिसूत्रैरपि स्त्रीशब्दा अपि तस्मिन्नेव मुख्यवृत्त्या सन्तीतिच । तद्वार्तम् । अस्माकं विमतस्थाभ्यां रामानुजनीलकण्ठाभ्यामाचार्याभ्यां तदनभ्युपगमात् ।

सर्वेषां तैर्थिकानां समतैः श्रुतिस्मृतिपुराणादिप्रमाणैः सूत्राणामर्थान्तरवर्णनं युक्तम् । नतु तुरकमठमाठरकौण्ठरव्यादिकल्पितप्रमाणैरिति दिक् । रामानुजनीलकण्ठयोराचार्ययोरेक एव सिद्धान्तः श्रुत्यादिकल्पनादोषरहितत्वात्प्रामाणिकः । शिवापरनामधेयं ब्रह्मैव प्रपञ्चस्याभिन्ननिमित्तोपादानमिति नीलकण्ठाचार्यः । तदेव विष्णवपरनामधेयमिति रामानुजाचार्यः । नाम्न्येव तयोर्विप्रतिपत्तिर्न सिद्धान्ते । तयोर्मते मोक्षस्तु—' ज्ञात्वा देवं मुच्यते सर्वपाशैः ' [ श्वे० १ । ८ ] इत्यादिश्रुतिभिर्भगवज्ज्ञानपूर्वकोपासनयाऽस्याधिकारिणो भगवत्प्रसादात्प्रध्वस्ताज्ञानपाशः प्रत्यक्षीभूतनिरतिशयज्ञानानन्दस्वरूपतत्समानगुणप्रातिरूपः । तौ हि ब्रह्मप्रपञ्चयोर्घटपटयोरिव नात्यन्तभेदवादिनौ । तदनन्यत्वपरश्रुतिविरोधात् । नचात्यन्ताभेदवादिनौ । भेदप्रतिपादकश्रुतिविरोधात् । न वा शुक्तिरजतयोरिवैकतरमिथ्यात्ववादिनौ । तत्स्वाभाविकगुणभेदपरश्रुतिविरोधात् । नच भेदाभेदवादिनौ । वस्तुविरोधात् । किंतु शरीरशरीरिणोरिव गुणगुणिनोरिव च कार्यकारणत्वेन विशेषविशेष्यत्वेन चाविनाभावत्वम् । नहि मृदं विना घटो दृश्यते नीलिमानं विना चोत्पलम् । तथा ब्रह्म विना न प्रपञ्चशक्तिरन्यत्र स्थिता । शक्तिव्यतिरेकेण न कदाचिदपि ब्रह्म विज्ञायते वह्निरिवौष्ण्यं विना । येन विना यन्न ज्ञायते तद्विशिष्टम् । प्रपञ्चस्तु ब्रह्मस्वभाव एव । अतः सर्वथा प्रपञ्चाविनाभूतं ब्रह्म । ननु कूटस्थस्येश्वरस्य कथं जगदाकारेण परिणामो विकारहेतुरिति चेन्न । नामरूपविभागानर्हसूक्ष्मचिदचिच्छक्तिविशिष्टस्येश्वरस्य कारणत्वम् । नामरूपविभागार्हस्थूलचिदचिच्छक्तिविशिष्टस्येश्वरस्य कार्यत्वम् । कारणत्वमव्यक्तत्वं कार्यत्वं व्यक्तत्वमिति विवेक इति विशिष्टाद्वैतिनौ तौ वदतः । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' [ श्वे० ६ । ८ ] इत्यादिदर्शनात्सर्वाऽपि शक्तिर्ब्रह्माश्रितैवेति ज्ञायते । अतः सर्वशक्तिमतस्तस्य किं किं न संभवति । तस्मान्नासंभावनादिकुतर्कस्तस्मिन्ब्रह्मणि निरवकाश इति प्रतिपादयतः । ' एकमेवाद्वितीयं ब्रह्म ' [ छा० ६ । २ । १ ] इतिश्रुतिविरुद्धत्वात्तन्मतं न ग्राह्यमिति सजातीयविजातीयभेदानपायादद्वितीयचैतन्यासिद्धेरिति दिक् ॥ २३ ॥

## अभिध्योपदेशाच्च ॥ २४ ॥

ब्रह्माभिन्ननिमित्तोपादानं भवितुमर्हति । कुतः । अभिध्योपदेशात् । ध्यानोपदेशादित्यर्थः । ' सोऽकामयत बहु स्यां प्रजायेय ' [ तै० २ । १ ] इति । तत्राभिध्यापूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते । ' बहु स्याम् ' इतिप्रत्यगात्मविषयत्वाद्बहुभवनाभिध्यानस्योपादानमित्यपि गम्यते ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

इतश्च ब्रह्मोपादानम् । कुतः । साक्षाच्चोभयाम्नानात् । ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते—' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति ' [ छा० १ । ९ । १ ] इति । यत्रोत्पत्तिविनाशौ यस्य कार्यस्य तत्तस्योपादानं दृष्टम् । यथा मृद्घटस्य ॥ २५ ॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च निमित्तोपादानत्वे ब्रह्मणः संभवतः । कुतः । आत्मकृतेः परिणामात् । आत्मनः संबन्धिनी कृतिरात्मकृतिः । कर्तृत्वकर्मत्वसाधारण्येनाऽऽत्मकृतः श्रवणादित्यर्थः । 'तदात्मानꣳ स्वयमकुरुत [ तै० २ । ७ ] इति स्वयमिति कर्तृत्वम् । आत्मानमिति कर्मत्वम् । कर्मत्वेनोपादानसिद्धिः । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कर्मत्वमित्यत आह—परिणामात् । परिणामो विवर्तः । सिद्धस्यापि विवर्तात्मना साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः । उपादानसमसत्ताकोऽन्यथाभावः परिणामः । उपादानासमसत्ताकोऽन्यथाभावो विवर्त इति परिणामविवर्तयोर्विवेकः । मायोपादानापेक्षया विवर्तत्वम् । यथा सुवर्णस्य विवर्तः कटककुण्डलादि । यद्वा परिणामात्परिणामसामानाधिकरण्येनाऽऽत्मनः श्रवणादित्यर्थः । 'सच्च त्यच्चाभवत्' [ तै० २ । ६ ] इति । ( ६ )

## योनिश्च हि गीयते ॥ २७ ॥ ( ७ )

इतश्चाऽऽत्माऽस्य प्रपञ्चस्य प्रकृतिः । हि यस्माद्योनिरिति वेदान्तेषु गीयते पठ्यते 'यद्भूतयोनिं परिपश्यन्ति धीराः' [ मु० १ । १ । ६ ] इति । योनिशब्दः प्रकृतिपर्यायः । तदुक्तं भाष्यकृद्भिः—'योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति । 'यथोर्णनाभिः सृजते गृह्णते च' [ मु० १ । १ । ७ ] इत्यादिश्रुतिभ्यश्च ब्रह्मणः प्रकृतित्वं सिद्धम् । ईक्षापूर्वककर्तृत्वे लोकसिद्धनिमित्तकारणीभूतकुलालादिदृष्टान्तो नेह ग्राह्यः । न लोकवदिह भवितव्यम् । शब्दगम्यत्वादस्यार्थस्य शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयति 'तदैक्षत बहु स्यां प्रजायेय' [ छा० ६ । २ । ३ ] इति पूर्वमेवावोचाम । तस्मात्परमात्मैवास्य प्रपञ्चस्याभिन्ननिमित्तोपादानमिति सिद्धम् ॥ २७ ॥ ( ७ )

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ ( ८ )

'ईक्षतेर्नाशब्दम्' [ ब्र० सू० १ । १ । ५ ] इत्यारभ्य प्रधानकारणवादः पुनः पुनराशङ्क्य निराकृतः । इदानीं वेदान्तेषु परमाण्वादेः कारणत्वं ब्रह्मण इव श्रुतं न वेति संशयः । अण्वादेरपि कारणत्वं श्रुतमिति तावत्प्राप्तम् । कुतः । वटधानादिदृष्टान्तश्रवणात् । तथा हि छान्दोग्यस्य षष्ठाध्याये श्वेतकेतुं प्रत्युद्दालकः सूक्ष्मतत्त्वे स्थूलस्य जगतोऽन्तर्भावं प्रतिपिपादयिषुराह 'न्यग्रोधफलमाहरेति' [ छा० ६ । १२ । १ ] 'भिन्धीति' । 'किमत्र पश्यसीति' । 'न किंचन भगव इति' । 'एतस्य वै सौम्यैषोऽणिम्न एष महान्यग्रोधस्तिष्ठति' [ छा० ६ । १२ । २ ] इति । अनेन सूक्ष्मे तत्त्वे स्थूलस्य जगतोऽन्तर्भावं प्रतिपादयितुं महावृक्षगर्भितानि वटबीजानि दृष्टान्तत्वेनोदाजहार । अतस्तादृशाः परमाणवो दार्ष्टान्तिकत्वेन श्रुता इति गम्यते । शून्यस्य तु 'असद्वा इदमग्र आसीत्' [ तै० २ । १ ]

इति साक्षादेव कारणत्वं श्रुतम् । तस्मात्परमाण्वादीनामपि श्रौतं कारणत्वमस्तीति प्राप्ते ब्रूमः । परमाण्वादिकारणवादा ब्रह्मकारणवादस्य प्रतिपक्षत्वात्प्रतिषेद्धव्या इत्यतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति—एतेनेति । एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानवदशब्दत्वादिति भाष्यकृत आहुः । एतेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधेन परमाण्वादिकारणवादाः प्रतिषिद्धतया व्याख्याता इति विद्यारण्यपादान्नभट्टावाहतुः । ननु 'न किंचन भगवः' [ छा० ६ । १२ । १ ] 'असद्वा इदमग्र आसीत्' [ तै० २ । १ ] इत्यनयोः श्रुत्योः का गतिरिति चेत् । उच्यते । 'न किंचन' इत्यनेन नामरूपानभिव्यक्तिरुक्ता । इन्द्रियागोचरत्वादणुत्वं ब्रह्मण्युपचरितम् । 'अणोरणीयान्' [ क० २ । २० ] इति श्रुतेः । असच्छब्दोऽपि नामरूपराहित्याभिप्रायक एव न शून्याभिप्रायकः । 'कथमसतः सज्जायेत' [ छा० ६ । २ । २ ] इतिश्रुत्या शून्यवादः पूर्वमेव पराकृतः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा ब्रह्मव्यतिरेकेणान्यत्र न संगच्छते । प्रतिज्ञालक्षणं लक्ष्यमाणे पदसमन्वयः । वैदिकः स च तत्रैव नान्यत्रेत्युपपादितम् । तत्रैव ब्रह्मण्येवेत्यर्थः । व्याख्यातपदाभ्यासोऽध्यायसमाप्त्यर्थः ।

इति श्रीलक्ष्मीनरहरिसूरिसुनुहरिदीक्षितकृतौ ब्रह्मसूत्रवृत्तौ सुबोधिन्यां

प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

---

प्रथमेऽध्याये सर्वज्ञः सर्वशक्तिः परमेश्वरो जगज्जन्मादिकारणं तत्रैव सर्वेषां वेदान्तवाक्यानां समन्वय इति प्रतिपादितम् । प्रधानादिकारणवादाश्चाशब्दत्वेन निराकृताः । इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः । प्रधानादिकारणवादानां च न्यायाभासमूलत्वम् । सृष्ट्यादिप्रक्रियायाश्च सर्ववेदान्तेष्वैकरूप्यमित्येतत्प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते—

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति । यदुक्तं 'ब्रह्मैव सर्वजगत्कारणम्' तदनुपपन्नम् । सांख्यस्मृतेर्निरवकाशत्वेन प्रबलत्वात् । तथाहि सांख्यस्मृतिर्हि मन्वादिस्मृतिवदनुष्ठेयं धर्मं कंचिदपि प्रतिपादयितुं न प्रवृत्ता किं तर्हि तत्त्वनिरूपणायैव प्रवृत्ता । मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य कपिलादिमहर्षिभिः सा प्रणीता । ते च मन्वादिवच्छिष्टा भवन्ति । तस्माच्छिष्टपरिगृहीततया प्रमाणीभूतानां कपिलादिस्मृतीनां विरोधाद्वेदान्ता एव प्रधान-

परतया नेयाः । यदि तत्त्वनिरूपणेऽप्यसौ कपिलादिस्मृतिर्बाध्यते तदा निरवकाशा स्यात् । तस्मादनवकाशया साङ्ख्यस्मृत्या वेदान्ता व्याख्येया इति पूर्वः पक्षः । अत्रोच्यते—नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति । यदि साङ्ख्यस्मृतेरनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येत । एवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशा. प्रसज्जेरन् । ताश्चोदाहरिष्यामः । ' यत्तत्सूक्ष्ममविज्ञेयं पर ब्रह्म ' इति प्रकृत्य—

' स ह्यन्तरात्मा भूताना क्षेत्रज्ञश्चेति कथ्यते ।
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥ '

इति स्कान्दे ।

विष्णुपुराणेऽपि—

नारायणः सर्वमिदं पुराणः स सर्गकाले च करोति सर्गम् ।
संहारकाले च तदत्ति भूयः ' इति ।
' शिव एव जगत्कर्ता शिवः पाता शिवोऽन्तकृत् । ' इति च ।

भगवद्गीतासु—

' अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । ' [ भ० गी० ७।६ ] इति ।

इत्याद्याः स्मृतयः शिवविष्णुपरमात्मपर्यायेश्वरकारणवादिन्यः सन्ति । श्रुतिमूला एव स्मृतयो ग्राह्या नेतरा इति सिद्धान्तितं पूर्वमीमांसायां प्रमाणलक्षणे—' विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ' [ जै० सू० १ । ३ । ३ ] इति । अनेन सूत्रेणोत्सर्गतः प्राप्तस्य स्मृतिप्रामाण्यस्यापवादः क्रियते—श्रुत्यमूलकाः स्मृतयो न ग्राह्या इति । अतः स्मृतिद्वयविरोधे प्रत्यक्षश्रुत्यनुसारिण्या ईश्वरकारणवादिन्याः स्मृतेरेव प्राबल्यम् । यथा मन्वादिस्मृतीना वेदमूलकत्व न तु तथाऽपि कापिलस्मृतेः प्रधानकारणवादिन्या मूलभूतं कंचन वेदमुपलभामहे । तस्मान्न साङ्ख्यस्मृत्या प्रत्यक्षश्रुतीना तन्मूलकमन्वादिस्मृतीना च संकोचो युक्त इति सिद्धम् ॥ १ ॥

## इतरेषां चानुपलब्धेः ॥ २ ॥ ( १ )

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि जगत्कारणानि । कुतः । वेदे तत्कारणत्वस्यानुपलब्धेः । यदपि क्वचित्तत्परमेव श्रवणमाभासते तदपि प्रधानपरमेव व्याख्यातम्—'आनुमानिकमप्येकेषाम् ' [ ब्र० सू० १ । ४ । १ ] इत्यत्र प्रथमाध्यायस्य चतुर्थपादप्रथमसूत्रे । कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः । तस्मादपि न स्मृत्यनवकाशदोषः । अत्रेदं सूत्रद्वयमधिकृत्य कश्चिदाह—विष्णौ समन्वयश्चेत्तर्हि वामपाशुपताद्यागमरूपस्मृतेरनवकाशत्वं स्यादिति पूर्वपक्षं प्रापय्य

सर्वज्ञपरमात्मविष्णुप्रणीतपञ्चरात्रोपष्टम्भाच्छ्रुतीनां विष्णावेव समन्वय इति । अत्रोच्यते— चतुर्षु वेदेषु परमपुरुषार्थमलभमानः शाण्डिल्य इमां विद्यामधीतवानिति तत्रैव वेदनिन्दाश्रवणात्पाञ्चरात्रस्यावैदिकत्वं गम्यते । न च विष्णुप्रणीतस्य तस्य कथमवैदिकत्वमिति वाच्यम् । कपिलप्रणीतस्य साङ्ख्यस्येव तस्यावैदिकत्वात् । पाञ्चरात्रादीनामवैदिकत्वं कण्ठत एवोक्त पुराणेषु । कौर्म्ये पञ्चदशाध्याये—

‘ तेषां मायावशाज्जातं गोवधं गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥
भविष्यथ त्रयीबाह्या महापातकिनः शठाः ’ ।

इत्यादिना गोतमशप्तान्समुद्दिश्य शिवविष्णू मोहशास्त्राणि चक्रतुः । तानिच—

कापालं गारुड शाक्त भैरवं पूर्वपश्चिमम् ।
पाञ्चरात्रं पाशुपत तथाऽन्यानि सहस्रशः ’ इति ॥
पाञ्चरात्रे च कापाले तथा कालमुखेऽपि च ।
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥

इति पाराशरपुराणम् । अस्मिन्नर्थे पुराणवाक्यसंग्रहस्तत्त्वकौस्तुभादवगन्तव्यः । तस्मात्पाञ्चरात्रोपष्टम्भाच्छ्रुतीना विष्णावेव समन्वय इति यदुक्तं तदशुद्ध तथैवानया दिशा कृत्स्नमपि तद्दर्शनमिति दिक् ॥ २ ॥ ( १ )

**एतेन योगः प्रत्युक्तः ॥ ३ ॥ ( २ )**

एतेन सांख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता द्रष्टव्या । तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं महदादीनि च तत्कार्याणीति कल्पनात् । ननु नेदं योगशास्त्र सांख्यशास्त्रनिराकरणेन निराकर्तुं शक्यम् । श्वेताश्वतरादिशाखासु योगस्यैव प्रपञ्चितत्वात्तत्त्वज्ञानोपयोगित्वाच्च । ‘ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः’ [ बृ० २ । ४ । ५ ] इति । ‘ दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।’ [ का० १ । ३ । १२ ] ‘ त्रिरुन्नतं स्थाप्य समं शरीरम् ’ [ श्वे० २ । ८ ] इत्यादिश्रुतिभिः । ‘ सम कायशिरोग्रीवम् ’ [ भ० गी० ६ । १३ ] इत्यादिस्मृतिभिश्च योगसाध्यस्य चित्तैकाग्र्यस्य ब्रह्मसाक्षात्कारहेतुत्वश्रवणात् । अतः प्रमाणभूतं योगशास्त्रम् । तच्च प्रधानस्यैव जगत्कारणतां वक्ति । तस्माद्योगस्मृत्या ब्रह्मकारणवादिनीनां श्रुतीनां मन्वादिस्मृतीनां च संकोचः कार्यः । तासां धर्मे सावकाशत्वादिति प्राप्ते ब्रूमः—अष्टाङ्गयोगे तात्पर्यवती योगस्मृतिः प्रमाणभूताऽपि ह्यवैदिके प्रधानकारणवादे न प्रमाणम् । तत्र तस्यास्तात्पर्याभावात् । तथा हि—‘ अथ योगानुशासनम् ’ [ पा० यो० सू० १ । १ ] इति प्रतिज्ञाय ‘ योगश्चित्तवृत्तिनिरोधः ’ [ पा० सू० १ । २ इति

योगस्यैव लक्षणमुक्त्वा तमेव कृत्स्नेन शास्त्रेण प्रपञ्चयामासेति तत्र योगे तात्पर्यम् । प्रधानादीनि तु न प्रतिपाद्यतया प्रतिजज्ञे । किं तर्हि द्वितीयपादे यमनियमासनादिसाधनप्रतिपादकेऽहेयहेयहेत्वादि विवेचयन् प्रसङ्गात्साङ्ख्यस्मृतिसिद्धानि प्रधानादीनि व्याजहार । अतो न तत्र तात्पर्यम् । नन्वेवंसति समानन्यायात् । सांख्यस्मृतिनिराकरणेनैवेयं निराकृता किमर्थं पुनरतिदिश्यत इति चेत् । अत्रोच्यते—वैदिकानि लिङ्गानि च 'ते ध्यानयोगानुगता अपश्यन्' [ श्वे० १ । ३ ] 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' [ का० २ । ३ । ११• ] इत्येवमादीनि बहुश उपलभ्यन्ते । तान्येव सम्यग्दर्शनोपायत्वेनैव योगशास्त्रेऽङ्गी क्रियन्तेऽतो योगस्मृतिरनपवदनीयेति शङ्का मा भूदित्यातिदेशः कृतः । वेदान्ताविरोध्यंशे साङ्ख्ययोगयोर्नाप्रामाण्य तद्विरोध्यंशे त्वप्रामाण्यमिति तात्पर्यमधिकरणद्वयस्य ज्ञेयम् । अर्थैकदेशे संप्रतिपत्तावप्यर्थैकदेशे विप्रतिपत्तेः सांख्ययोगस्मृत्योरेव निराकरणे यत्नः कृत इति भाष्यात् । तस्मान्न योगस्मृत्या वेदमूलस्मृतीना संकोचः ॥ ३ ॥ (२)

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

ब्रह्मकारणवादे सांख्ययोगस्मृतिविरोधः परिहृत इदानीं तर्कविरोधपरिहारार्थमिदमधिकरणम् । यद्यपि तर्कस्य स्वातन्त्र्येण प्रामाण्यं नास्तीति वैदिकार्थपरिपन्थित्वं न सम्भवति तथाऽपि 'श्रोतव्यो मन्तव्यः' [ बृ० २ । ४ । ५ ] इति श्रुतिर्मनन विदधती तर्कस्याऽऽदर्तव्यत्व दर्शयति । युक्तिभिरनुचिन्तनं मननमिति मननशब्देन तर्कोऽभिधीयते । बलवत्तर्कानुगृहीतप्रमाणविरोधे सति श्रुतेः प्रतिपादितप्रामाण्यानिर्वाहाद्यत्नेन तन्निराकरण कर्तव्यमतस्तर्कविषय आक्षेपः क्रियते न विलक्षणत्वादस्येति । तत्र पूर्वः पक्षः—यदुक्तं चेतन ब्रह्म जगत्कारणमिति तन्नोपपद्यते । कुतः । अस्य जगतः स्वकारणाद्ब्रह्मणः सकाशाद्विलक्षणत्वात् । ब्रह्म चेतनं प्रकाशरूपमानन्दात्मक शुद्धं च जगदचेतनमप्रकाशं दुःखरूपमशुद्ध चेति वैलक्षण्यम् । कुतोऽवगम्यत इत्यत आह—तथात्व च शब्दात् । तथात्व वैलक्षण्य ब्रह्मजगतोः प्रकृतिविकारयोः शब्दाच्छ्रुतेरवगम्यते । 'विज्ञान चाविज्ञान च' [ तै० २ । ६ ] इति । तथा प्रयोगोऽपि—अचेतन जगच्चेतनाद्ब्रह्मणो न जायते विलक्षणत्वात् । यद्येन विलक्षणं तत्तस्मान्न जायते । मृदो रुचकादिवत् । तस्मान्न ब्रह्म जगत्कारणम् ॥ ४ ॥

ननु चेतनत्वमपि क्वचिदचेतनत्वेनाभिमतानां भूतेन्द्रियाणां श्रूयते । यथा 'मृदब्रवीत्' । 'आपोऽब्रुवन्' । [ श० प० ब्रा० ६ । १ । ३ । २ । ४ ] 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' [ छा० ६ । २ । ३ । ४ ] इत्येवमादिका भूतविषया चेतनत्वश्रुतिरिन्द्रियविषयाऽपि 'ते हेमे प्राणा अहंश्रेयसे विवदमानाः' [ बृ० ६ । १ ७ ] इत्येवमादिकाऽतो नोक्तवैलक्षण्यमत आह—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्द आशङ्कामपाकरोति । न खलु मृदब्रवीदित्येवमादिकाभिः श्रुतिभिर्भूतेन्द्रियाणां चेतनत्वमाशङ्कनीयम् । यतोऽभिमानिव्यपदेशोऽयम् । मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवतास्तत्र व्यपादिश्यन्ते न भूतेन्द्रियमात्रम् । कुतः । विशेषानुगतिभ्याम् । विशेषो हि भोक्तॄणां भूतेन्द्रियाणां च चेतनाचेतनविभागलक्षणः पूर्वमभिहितः । अपि च कौषीतकिनः प्राणसंवादे करणमात्रशङ्कापरिहाराय तदधिष्ठातृचेतनपरिग्रहाय देवताशब्देन वागादीन्विशिंषन्ति । ‘ एता ह वै देवता अहṃ श्रेयसे विवदमानाः ’ [ कौ० उ० २ । १४ ] इति । ‘ ता वा एताः सर्वा देवताः प्राणे निःश्रेयस विदित्वा ’ [ कौ० उ० २ । १४ ] इति च देवताशब्देन विशेषितत्वाद्विशेषः । न चाचेतनेष्वपि तेजोबन्नेषु देवताशब्दः श्रूयते ‘ हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ’ [ छा० ६ । ३ । २ ] इति वाच्यम् । देवताशब्दस्य तेषा शक्तिविशेपद्योतनार्थत्वेन चेतनवाचित्वाभावात् । अनुगतिश्च । मन्त्रार्थवादेतिहासपुराणादिषु सर्वत्राभिमानिन्यश्चेतना देवता अवगम्यन्ते । ‘ अग्निर्वाग्भूत्वा मुखं प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् ’ [ ऐ० आ० २ । ४ । २ । ४ ] इत्येवमादिका श्रुतिः करणेषु देवतानुगतिं दर्शयति । ततश्च जगदचेतनं ब्रह्म चेतनमिति तयोर्वैलक्षण्यान्न ब्रह्मप्रकृतिक जगत् । इति पूर्वपक्षे प्राप्ते राद्धान्तः ॥ ५ ॥

## दृश्यते तु ॥ ६ ॥

तुशब्दः पूर्वपक्षव्यावर्तकः । यदुक्तम्—‘ विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकम् ’ इति नायं नियमो यतो वैलक्षण्येऽपि ब्रह्मजगतोः प्रकृतिविकृतिभावो दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः । अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यश्चेतनाना वृश्चिकादीनां च । अय भावः—अशेषस्य प्रकृतिस्वभावस्यानुवर्तनं न विकारमात्र इत्यभिप्रेतम् । तथा च सति विकारत्व नोपपद्येत । यत्किंचित्स्वभावानुवर्तनं तु प्रकृतेऽप्यस्ति । ब्रह्मसत्ताया विकारेष्वनुवर्तनात् । नच विकारेषु चैतन्यमापादयितुं न हि शक्यत इति वाच्यम् । यच्चेतनानन्वितं तदब्रह्मप्रकृतिकं यथाऽमुकमिति दृष्टान्ताभावात् । सर्वस्य विकारस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात् । तदुक्तं भाष्यकारैः—रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरो लिङ्गाद्यभावाच्च नानुमानादीनाम् । आगममात्रसमधिगम्य एवायमर्थो धर्मवत् ‘ नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ’ [ का० १ । २ । ९ ] इति । स्मृतिरपि—‘ अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ’ इति । यदपि श्रवणव्यतिरेकेण मनन विदधच्छब्द एव तर्कमादर्तव्य दर्शयतीत्युक्तम् । नानेन मिषेण शुष्कतर्कस्यात्र लाभः संभवति । श्रुत्यनुगृहीत एव तर्कोऽनुभवाङ्गत्वेनाऽऽश्रीयते । ‘ तर्काप्रतिष्ठानात् ’ [ ब्र० सू० २ । १ । ११ ] इति च केवलस्य तर्कस्य विप्रलम्भकत्वं प्रदर्शयिष्यतीति ॥ ६ ॥

ननु चेतनं ब्रह्म शब्दादिहीनमचेतनस्य शब्दादिमतश्च जगतः कारणं चेदुत्पत्तेः पूर्वं जगतोऽसत्त्वादसत्कार्यवादः प्रसज्येत तच्चानिष्टं सत्कार्यवादिनस्तवेत्याशङ्क्य निराकरोति—

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥**

उत्पत्तेः पूर्वं कार्यमसदिति यदुक्तं तन्न । कुतः । प्रतिषेधमात्रत्वात् । प्रतिषेधमात्रं हीदमस्य प्रतिषेधस्य न प्रतिषेध्यमस्ति । प्रतिषेधमात्रं शब्दमात्र न तु तस्याऽर्थोऽस्तीत्यर्थः । अय भावः—कार्यस्य कारणसत्तैव सत्ता न तु तद्व्यतिरेकेण सत्तात्वमस्ति । कल्पित-भावाभावयोरधिष्ठानस्वरूपत्वात् । उत्पत्त्यनन्तर यथा कार्यस्य कारणात्मना सत्त्वं तथोत्पत्तेः पूर्वमपि ॥ ७ ॥

पुनरपि शङ्कासूत्रम्—

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

यदि सावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुचित्वादिधर्मकं कार्यं ब्रह्मकारणकं तर्ह्यपीतौ लये स्वकारणे लीयमानं सत्कारण ब्रह्म स्वकीयैर्धर्मैर्दूषयेत् । ततश्च तद्वत्कार्यवत्कारणस्यापि कार्य-स्यैवाशुचित्वादिप्रसङ्गात्सर्वज्ञं शुद्धं ब्रह्म जगत्कारणमित्यसमञ्जसम् । समस्तस्याविभागस्य विभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीत्यसमञ्ज-समपि ॥ ८ ॥

अत्र समाधानसूत्रम्—

**न तु दृष्टान्तभावात् ॥ ९ ॥**

तुरवधारणे । नैवास्मदीये दर्शने किंचिदसामञ्जस्यमस्ति । कुतः । दृष्टान्तभावात् । कार्यं स्वलये कारणमात्मीयेन धर्मेण न दूषयतीत्यत्र शतशो दृष्टान्तसत्त्वादित्यर्थः । न हि घटादयोऽपि स्वाकारेण मृदं दूषयन्ति । रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमा-त्मीयेन धर्मेण दूषयन्तीत्येवंजातीयका दृष्टान्ता अनुसधेयाः । यदि घटादयोऽपीतौ कारण-मात्मीयेन धर्मेण दूषयेयुस्तर्हि तेषा तादवस्थ्यमापद्येत । किंच स्थितावपि समानोऽयं प्रसङ्गः । कार्यकारणयोरनन्यत्वाभ्युपगमात् । ' इदं सर्वं यदयमात्मा ' [ बृ० २ । ४ । ६ ] ' ब्रह्मैवेदममृत पुरस्तात् ' [ मु० २ । २ । ११ ] ' सर्वं खल्विदं ब्रह्म ' [ छा० ३ । १४ । १ ] इत्येवमादिभिः श्रुतिभिः कार्यस्य त्रिष्वपि कालेषु कारणान-न्यत्वं श्राव्यते । यथा मायावी कदाऽपि स्वमायया न दूष्यत एवमात्मा स्वाध्यस्तेन न दूष्यते । इत्यादिदृष्टान्तभावान्नोक्तदोषावकाशः ॥ ९ ॥

**स्वपक्षदोषाच्च ॥ १० ॥**

पूर्वपक्षिणः सांख्यस्यापि पक्षे तदुद्भाविता दोषाः समाना इत्यर्थः । तेनापि शब्दादिही-नात्प्रधानाच्छब्दादिमतो जगत उत्पत्त्यङ्गीकारात् । वैलक्षण्ये प्रकृतिविकृतिभावानुपपत्तिः ।

उत्पत्तेः प्रागसत्त्वप्रसङ्गः । अपीतौ कार्यस्य कारणाविभागाभ्युपगमात्तद्वत्प्रसङ्गोऽपि समानः । तथोत्सन्नसर्वविशेषेषु विकारेषु लये कारणाविभागात्मता गतेष्विदमस्य पुरुषस्योपादानमिदमस्येति प्रलयात्पूर्वं प्रतिपुरुष ये नियता भेदा न ते तथैव पुनरुत्पत्तौ नियन्तुं शक्यन्ते कारणाभावात् । विनैव कारण नियमाङ्गीकारे कारणाभावसाम्यान्मुक्तानामपि पुनः संसारप्रसङ्गः । अस्मन्मतरीत्यैव तेनापि समाधेयमिति भावः ॥ १० ॥

**तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥ ( ३ )**

अपिर्युक्तिसमुच्चये । इतश्च ब्रह्मकारणवादे केवलेन तर्केण न प्रत्यवस्थातुं शक्यते । कुतः । तर्काप्रतिष्ठानात् । निरागमाणा पुरुषमत्युत्प्रेक्षिताना तर्काणामप्रतिष्ठितत्वादित्यर्थः । केनचित्तार्किकेण यत्नतोऽप्यनुमितोऽर्थोऽन्येनान्यथा क्रियते सोऽप्यन्येनान्यथेति तर्कस्यानवस्थितिः सिद्धैवास्ति। अथ वाच्य वयमन्यथाऽनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यति । न हि प्रतिष्ठितस्तर्क एव नास्तीति वक्तु शक्यते । एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते । तदप्यन्येनान्यथयितु शक्यत एव । ननु सर्वतर्काव्यवस्थितौ व्यवहारमात्रोच्छेदः प्रसज्जेत । तथासति धूमादिदर्शनानन्तर वह्न्यादिविषयिणी प्रवृत्तिर्न स्यात् । अप्रतिष्ठिततर्कसाम्येन तर्कान्तरस्याप्रतिष्ठितत्वात् । किंच श्रुत्यर्थविप्रतिपत्तौ तर्कस्यैव निर्णयहेतुत्वाच्च । तदुक्तं मनुना—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ [ म० स्मृ० १२ । १०५ ] इति ।

तस्मात्प्रतिष्ठिततर्केण प्रत्यवस्थान सभवत्येवेत्यभिप्रेत्य शङ्कतेऽन्यथाऽनुमेयमिति चेदित्यन्तेन । अप्रतिष्ठिततर्कादन्यप्रकारेण प्रतिष्ठिततर्केण प्रत्यवस्थातुं शक्यत एवेति शङ्कार्थः। अत्र समाधानम्—एवमप्यनिर्मोक्षप्रसङ्ग इति । सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनां सिद्धान्तः । ऐकरूप्येण ह्यवस्थितो योऽर्थः स परमार्थो लोके तद्विषयं ज्ञानं सम्यग्ज्ञानम् । तत्रैवंसति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना । तार्किकाणां त्वन्योन्याविरोधात्प्रसिद्धा विप्रतिपत्तिः । यद्रि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिष्ठापितं तदपरेण व्युत्थाप्यते तेनापि च प्रतिष्ठापित तदप्यपरेण व्युत्थाप्यत इति । कथमेवंरूपानवस्थिते विषये तर्कप्रभवं सम्यग्ज्ञानं भवेत् । तादृशेनाव्यवस्थितविषयकेण ज्ञानेन कथ मोक्षः स्यादिति भावः । तस्मात्तर्कमात्रजन्यब्रह्मज्ञानान्मोक्षो न सभवतीति सिद्धम् ॥ ११ ॥ ( ३ )

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ ( ४ )**

सांख्ययोगस्मृतिभ्यां तदीयतर्केण च ब्रह्मकारणवादस्य बाधो मा भून्नाम । कणादबुद्धादिस्मृतिभिस्तदीयतर्केण च ब्रह्मकारणवादो बाध्येतेति कश्चन मन्दमतिराशङ्केतेत्यतः

प्रधानसांख्यमल्लनिबर्हणन्यायेनातिदिशति शिष्टापरिग्रहा इति । परिगृह्यन्त इति परिग्रहाः । न परिग्रहा अपरिग्रहाः शिष्टैर्मन्वादिभिः केनचिदप्यंशेनापरिगृहीता येऽण्वादिकारणवादाः । तथा हि कणादो महर्षिः परमाणूनां जगत्कारणत्व स्मरति । बुद्धश्च भगवतो विष्णोरवतारोऽभावं जगत्कारणं स्मरति । तेऽपि व्याख्याताः । एतेन सांख्यतत्तर्कनिराकरणप्रकारेण निराकृता वेदितव्याः । तुल्यत्वात् । तुल्यमत्रापि वेदैकवेद्यस्य जगत्कारणस्य ब्रह्मणः शुष्कतर्काग्राह्यत्वं तादृशस्य तर्कस्याप्रतिष्ठितत्वम् । अन्यथाऽनुमानेऽप्यनिर्मोक्ष आगमविरोधश्चेत्येवजातीयकं निराकरणे कारणम् ॥ १२ ॥ ( ४ )

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥ ( ५ )

पुनरन्यथा ब्रह्मकारणवादस्तर्कबलेनैवाऽऽक्षिप्य प्रतिक्षिप्यते । प्रसिद्धो ह्ययं लोके भोक्तृभोग्यविभागः । भोक्ता चेतनो जीवो भोग्यः शब्दादयो विषया इति । यद्येषां परस्परविभागो न स्यात् । मूलकारणाद्ब्रह्मणोऽनन्यत्वात् । ततश्च लोकप्रसिद्धो भोक्तृभोग्यविभागो मज्जेतेति शङ्कते—भोक्त्रापत्तेरविभागश्चेदिति । मूलकारणादनन्यत्वेन भोग्यस्य भोक्तृत्वापत्तिः । उपलक्षणमेतत् । भोक्तुश्च भोग्यत्वापत्तिः । नचास्य प्रसिद्धस्य भोक्तृभोग्यविभागस्य बाधनं युक्तम् । तस्मात्प्रसिद्धस्य तयोर्विभागस्याभावप्रसङ्गादयुक्त ब्रह्मोपादानत्वं जगत इति चेत्कश्चित्तार्किकश्चोदयेत् । तत्रोत्तरमिदं स्यादिति । अद्वैतिनामप्यस्माक पक्षेऽयं विभागः स्यादुपपद्येत । तत्र दृष्टान्त.—लोकवदिति । यथा समुद्रादनन्यत्वेऽपि फेनतरङ्गबुद्बुदादीनामितरेतरविभाग उपपद्यते । तरङ्गादिरूपेण भेदस्य समुद्ररूपेणाभेदस्य च दृष्टत्वेन भेदाभेदयोर्विरोधाभावात् । भेदाभेदविरोधव्यवहारस्याऽऽकारभेदेनापि रहितेऽत्यन्तमेकस्मिन्नपि वस्तुनि मायया सावकाशत्वात् । तथा ब्रह्माकारेणाद्वैतं भोक्तृभोग्याकारेण द्वैतमित्याकारभेदाद्व्यवस्थोपपत्तौ न कोऽपि विरोधः । यद्यपि भोक्ता न ब्रह्मणोऽन्यस्तथाऽपि तयोरौपाधिको हि विभागो व्यवहारेऽस्त्येवाऽऽकाशस्येव घटाद्युपाधिनिमित्तकः । भोग्यस्यापि विवर्तत्वेन कारणाद्भेदाभेदावप्युपपद्येते अविद्वद्विद्वदृष्टिभ्यामिति न काऽप्यनुपपत्तिः । अत्र यत्परेणोक्तम्——भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । भोक्तुर्जीवस्यापऽऽत्तेः । परेऽव्यये सर्व एकी भवन्तीति मोक्षे ब्रह्मत्वापत्तिश्रवणात्तयोरविभागो भेदाभावः । ततो न जगत्कारणत्वं ब्रह्मणो युक्तमिति पूर्वः पक्षः । सिद्धान्तस्तु——स्यादेवं यदि मुक्तस्य ब्रह्माभेदे प्रमाणं लभ्यते । एकीभावस्तु स्याल्लोकवत् । यथैकीभूता ब्राह्मणास्तथेहापीत्यर्थ इति । तदसारम् । ‘ ब्रह्मैव सन्ब्रह्माप्येति ’ [ बृ० ४ । ४ । ६ ] ‘ ब्रह्म वेद ब्रह्मैव भवति ’ [ मु० ३ । २ । ९ ] ‘ तत्त्वमसि ’ [ छा० ६ । ८ । ७ ] ‘ अयमात्मा ब्रह्म ’ [ बृ० २ । ५ । १९ ] ‘ सर्वं खल्विदं ब्रह्म ’ [ छा० ३ । १४ । १ ] इत्यादिकाः श्रुतयः ।

विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ '

इत्याद्याः स्मृतयश्च जीवब्रह्माभेदे प्रमाणम् । आस्तां तावत्पूर्वश्रुतिप्रमाणत्वम् । सत्यं भिदेति त्वयैव पठिता ह्यपूर्वश्रुतिः पूर्वश्रुतिषु ' द्वा सुपर्णा ' [ श्वे० ४ । ६ ] इत्यादिषु पारमार्थिकं भेदं साधयितुमनीशासु भेदं साधयितुं प्रवृत्ता सैव प्रमाणम् । विस्तरस्तु तत्त्वकौस्तुभमध्वमुखभञ्जनादौ द्रष्टव्यः ॥ १३ ॥ ( ५ )

ननु प्रपञ्चस्य ब्रह्माभेदमङ्गीकृत्य स्याल्लोकवदिति पूर्वपक्षः पराकृतः । तस्य प्रपञ्चस्य ब्रह्माभिन्नत्वमेव कुतो नाङ्गी क्रियत इत्यत आह सूत्रकारः—

**तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥**

तस्य प्रपञ्चस्य ब्रह्मणः सकाशादनन्यत्वम् । यद्वा तस्माद्ब्रह्मप्रपञ्चस्यानन्यत्वम् । तस्मात्कारणाद्ब्रह्मणोऽनन्यत्वमन्यत्वाभावः कार्यस्यावगम्यते । कुतः, आरम्भणशब्दादिभ्यः । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्र दृष्टान्तापेक्षायामुक्त ' यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' [ छा० ६ । १ । ४ ] इति । अस्यायमर्थः—मृत्पिण्डः कारणं तद्विकारा घटशरावोदञ्चनादयः । मृद्वस्त्वन्यदन्यानि घटशरावादिवस्तूनीति तार्किकादयो मन्यन्ते तत्र घटादीनां पृथग्वस्तुत्वनिरासायविकारशब्दैस्तान्व्यवहरति । मृद्वस्तुनो विकाराः संस्थानविशेषा घटादयो न पृथग्वस्तुभूताः । एवं च सति घटाकारप्रतिभासदशायामपि मृन्मात्रमेव स्वतन्त्रं वस्तु न घटादिकम् । ततो मृद्यवगतायां घटादीनां यत्तात्त्विकं स्वरूपं तत्सर्वमवगतं भवति । आकारविशेषा न ज्ञायन्त इति चेत् । मा ज्ञायन्तां नाम । तेषामवस्तुभूतानां जिज्ञासानर्हत्वात् । चक्षुषा प्रतिभासमाना विकारा निरूपिता अपि सन्तो मृद्व्यतिरेकेण न स्वरूपं किंचिल्लभन्ते घटोऽय शरावोऽयमुदञ्चनमिदमिति । वाङ्निष्पाद्यं नामधेयमात्र लभन्ते । विकारोऽपि वाचा निष्पाद्य एवाय पृथुबुध्नोदराकारो घट इति । तदुक्तं भाष्यकारैः—यतो वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चन चेति न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति नाममात्र ह्यस्ति तदनृतं मृत्तिकेत्येव सत्यमिति । एष ब्रह्मणो दृष्टान्त आम्नातस्तथा ब्रह्मोपदेशोऽवगन्तव्य इति । ब्रह्मणि मृत्तिकान्यायस्य जगति घटादिन्यायस्य च योजयितुं शक्यत्वात् । नचैतावता मृत्तिकायाः सत्यत्वमिति* भ्रमितव्यम् । अस्य संदर्भस्य विकारमिथ्यात्वे कारणसत्यत्वे च तात्पर्यात् । द्वैतपरिभाषयैवाद्वैत बोधनीयमिति सिद्धान्तात् । एव दृष्टान्ते वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मणि तद्व्यतिरेकेण प्रपञ्चस्याभावः प्रत्येतव्यः । आरम्भणशब्दादिभ्य इत्यादिपदात् ' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ' [ छा० । ६ । ८ । ७ ] ' इदं सर्वं यदयमात्मा ' [ बृ० २ ।

* मूलपुस्तके–'ति न भ्र°' इति विद्यते परं तु तदसंगतामिति मत्वा न स्थापितम् ।

४ । ६ ] ' ब्रह्मैवेदं सर्वं ' [ मु० २ । २ । ११ ] ' सर्वं खल्विदं ब्रह्म [ छा० ३ । १४ । १ ] ' नेह नानाऽस्ति किंचन ' [ बृ० ४ । ४ । १९ ] इत्यादि संगृहीत वेदितव्यम् । तस्मात्प्रपञ्चस्य ब्रह्मानन्यत्व सिद्धम् । इदं परमार्थदृष्ट्या तदनन्यत्व सूत्रकार आह—व्यवहाराभिप्रायेण तु स्याल्लोकवदिति पूर्वमुक्तम् । तथा च ' यत्र नान्यत्पश्यति ' [ छा० ७ । २४ । १ ] ' यत्र त्वस्य सर्वमात्मैवाभूत् ' [ बृ० २ । ४ । १४ ] इति वेदान्ताः परमार्थावस्थायां द्वैताभाव वदन्ति । व्यवहारे तु ' एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषा लोकानामसभेदाय ' [ बृ० ४ । ४ । २२ ] इत्याद्युभयमपि प्रमाण संगच्छते । विस्तरस्तु भाष्यादवगन्तव्यः ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

इतश्च कार्यस्य कारणादनन्यत्वम् । कुतः । चोऽवधारणे । कारणभाव एव कार्यस्योपलब्धेः । तदभावे चानुपलब्धेः । सत्कारणानुविद्धस्यैव कार्यस्योपलब्धेरित्यर्थः । तद्यथा सत्यां मृदि घट उपलभ्यते । सत्सु तन्तुषु पटः । अत एव सन्घटः सन्पट इति घटो भातीह इति च व्यवहारः संभवति । तस्माद्ब्रह्मणि कार्यरूपः प्रपञ्चो मायापरिकल्पित एव न पारमार्थिकः । यथा प्रातिभासिकस्यापि सर्पस्य भयकम्पाद्यर्थक्रियाकारित्वं तथा यावद्व्यवहारं प्रपञ्चस्याप्यर्थक्रियाकारित्वमुपपद्यते ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्च कारणात्कार्यस्यानन्यत्वम् । यस्मादवरस्य कार्यस्य प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वात्सत्त्वश्रवणात् । उत्पत्त्यनन्तरमपि कारणानन्यत्व कार्यसिद्धमिति तात्पर्यम् । ' सदेव सौम्येदमग्र आसीत् ' [ छा० ६ । २ । १ ] ' आत्मा वा इदमेक एवाग्र आसीत् । [ ऐ० आ० २ । ४ । १ । १ ] ' ब्रह्म वा इदमग्र आसीत् ' बृ० १ । ४ । १० ] इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्सदनन्यत्वं श्रूयते । यच्च यदात्मना यत्र न वर्तते न तत्तत उत्पद्यते सिकताभ्य इव तैलम् । तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते । अत्र कारणाद्भिन्नमेव कार्यमिति तार्किकमाध्वयोराग्रहः । सूक्ष्मचिदचित्प्रपञ्चविशिष्टं ब्रह्म कारणं स्थूलचिदचित्प्रपञ्चविशिष्टं ब्रह्म कार्यम् । अव्यक्तत्वं कारणत्वं व्यक्तत्वं कार्यत्वम् । तदेव विशिष्टं ब्रह्माव्यक्तं सद्व्यक्तं भवतीति तयोर्विशिष्टयोरद्वैतमिति नीलकण्ठरामानुजयोराग्रहः ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु ' असद्वा इदमग्र आसीत् ' [ तै० २ । ७ ] इत्यादिश्रुतिरुत्पत्तेः प्राक्कार्यस्यासत्त्वं व्यपदिशति तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वं संभवतीति चेन्न । कुतः, धर्मान्तरेण वाक्यशेषात् । अयमर्थः—न ह्ययमभावाभिप्रायेण प्रागुत्पत्तेः कार्यस्या-

सद्व्यपदेशः। किं तर्हि व्याकृतनामरूपत्वादिधर्माद्व्याकृतनामरूपत्वादि तदेव धर्मान्तरम्। तेन धर्मान्तरेणासद्व्यपदेशोऽयम्। कथमेतदवगम्यत इति चेत्तत्राऽऽह—वाक्यशेषात्। यदुपक्रमे संदिग्धार्थं वाक्यं तच्छेषान्निश्चीयते। इह च 'असदेवेदमग्र आसीत्' [ छा० ३। १९। १ इत्युपक्रमे यदसच्छब्देन निर्दिष्टं तदेव पुनस्तच्छब्देन परामृश्य सदासीदिति वाक्यशेषे श्रूयते। 'असद्वा इदमग्र आसीत्' [ तै० २। ७ ], इत्यत्रापि तदात्मानं स्वयमकुरुतेति विशेषणान्नात्यन्तासत्त्वम्। यद्युपक्रमेऽत्यन्तासत्त्वं विवक्षितं स्यात्तर्हि सदासीदित्यनुपपन्नं स्यात्। तस्मान्नामरूपाव्याकरणादसदिवाऽऽसीदित्युपचारादुत्पत्तेः प्रागसदित्युच्यते न त्वभावाभिप्रायेणेति सिद्धम्॥ १७॥

## युक्तेः शब्दान्तराच्च॥ १८॥

युक्तेः शब्दान्तराच्च कारणादनन्यत्वं प्रागुत्पत्तेः सत्त्वं च कार्यस्यावगन्तव्यम्। युक्तिस्तावत्। आहुरत्र भाष्यकाराः—दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते। न दध्यार्थिभिर्मृत्तिकोपादीयते न घटार्थिभिः क्षीरं न रुचकार्थिभिर्मृत्तिका। तदेतदसत्कार्यवादे नापद्येत। अविशिष्टे हि प्रागुत्पत्तेः सर्वत्र सर्वस्यासत्त्वे कस्मात्क्षीरादेव दध्युत्पद्यते न मृत्तिकायाः। मृत्तिकाया एव च घट उत्पद्यते न क्षीरादिति। अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दधिनिष्पादकः कश्चिदतिशयो न मृत्तिकायां मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीरेऽस्तीत्युच्यते। अतोऽतिशयवत्त्वात्प्रागवस्थाया असत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च भवति। इत्यादियुक्तयो भाष्यादवगन्तव्याः। न हि तन्त्वादिभ्योऽन्यत्पटादिकं कार्यमित्यत्र किंचित्प्रमाणमस्ति। तन्तुव्यतिरेकेण पटस्यादर्शनात्। न ह्याकारविशेषमात्रेण वस्त्वन्यत्वं शक्यं वक्तुम्। संकुचिताङ्गात्तु देवदत्तात्तस्यैव प्रसारिताङ्गस्य भेदापत्तेः, बाल्याद्यवस्थासु भेदापत्तेश्च। शब्दान्तरं च। पूर्वसूत्रेऽसच्छब्दोपादानात्तदन्यः सच्छब्दः शब्दान्तरम्। 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' [ छा० ६।२।१ ] इत्यादि। 'असदेवेदमग्र आसीत्' [ छा० ३। १९। १ ] इति चासत्पक्षमुपक्षिप्य 'कथमसतः सज्जायेत' [ छा० ६। २। २ इत्याक्षिप्य 'सदेव सौम्येदमग्र आसीत्' इत्यवधारयति। तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यश्रवणात्। कारणात्मना सत्त्वं तदनन्यत्वं च कार्यस्य सिद्धम्। यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्पश्चाच्चोत्पद्यमानं कारणे समवेयात्तदा कारणादन्यत्स्यात्। तत्र 'येनाश्रुतं श्रुतं भवति' [ छा० ६।१।३ ] इतीयं प्रतिज्ञा पीड्येत। सत्त्वानन्यत्वाभ्यामेवेयं प्रतिज्ञा समर्थ्यते॥ १८॥

## पटवच्च॥ १९॥

युक्तिप्रपञ्चोऽयम्। यथा संवेष्टितस्य प्रसारितस्य च पटस्य प्रतीतिकार्यवैलक्षण्येऽपि न पटस्य भेदः। अयमर्थः—स्पष्टमुक्तो भाष्यकारैः—यथा च संवेष्टनसमये पट इति गृह्य-

माणोऽपि न विशिष्टायामविस्तारो गृह्यते । स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते । न संवेष्टितरूपादन्योऽयं पट इति । एव तन्तुपटयोरपि प्रतीतिवैलक्षण्येऽपि नैव कारणाद्भिन्नं कार्यमित्यर्थः ॥ १९ ॥

## यथा च प्राणादि ॥ २० ॥ ( ६ )

यथा च प्राणापानादिषु प्राणायामेन निरुद्धेषु कारणमात्ररूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाऽऽकुञ्चनप्रसारणादिकं कार्यान्तरम् । तेष्वेवानिरुद्धेषु जीवनादधिकमाकुञ्चनप्रसारणादिकं कार्यान्तरं निर्वर्त्यते । नैतावता प्राणप्रभेदानां प्रभेदवतः प्राणादन्यत्वं समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्व सिद्धमतः सिद्धा श्रौती प्रतिज्ञा 'येनाश्रुतं श्रुतं भवति' [ छा० ६ । १ । ३ ] इत्यादिका ॥ २० ॥ ( ६ )

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । चेतनाद्ब्रह्मणो जगत्सृष्टावभ्युपगम्यमानायां हिताकरणादिदोषः प्रसज्जते । कुतः । इतरव्यपदेशात् । इतरस्य शारीरस्य 'स आत्मा तत्त्वमसि श्वेतकेतो' [ छा० ६ । ८ । ७ ] 'अयमात्मा ब्रह्म' [ बृ० २ । ४ । ६ ] इत्यादिकया श्रुत्या ब्रह्मात्मत्वस्य व्यपदेशात्कीर्तनादित्यर्थः । यद्वा 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुत्या स्रष्टुरेवाविकृतस्य परमात्मनः कार्यानुप्रवेशेन जीवात्मत्वस्य व्यपदेशात् । तस्माद्ब्रह्मणः स्रष्टृत्वं तज्जीवस्यैवेत्यतः स स्वतन्त्रः कर्ता जीवो हितमेवाऽऽत्मनः कुर्यान्नाहितं जन्ममरणजरारोगाद्यनेकानर्थरूपम् । किंच मयेदं सृष्टमिति प्रत्यभिजानीयात् । स्वेच्छयाऽनायासेनैव मायावीव विश्वमुपसंहरेच्च । यद्वा परमात्मा स्वतन्त्रः सर्वशक्तिः सर्वज्ञः स्वस्य जीवाभेदं पश्यञ्जीवानां हितमेव कुर्यान्नाहितम् । प्रकृते तददर्शनाद्धिताकरणादिदोष ईश्वरे प्रसक्त इति न चेतनकारणवादः समुचित इति पूर्वः पक्षः ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । यत्सर्वज्ञ सर्वशक्ति नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्माधिकं जीवादन्यत्तदेव जगतः स्रष्टृ न जीवचैतन्यम् । कुतः, भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्यः' [ बृ० २ । ४ । ५ ] 'सता सौम्य तदा सपन्नो भवति' [ छा० ६ । ८ । १ ] इत्यादौ जीवब्रह्मणोर्भेदनिर्देशात् । न चाभेदश्रुतिविरोध इति वाच्यम् । वास्तवैक्यस्यौपाधिकभेदस्य चाऽऽकाशघटाकाशयोरिव जीवब्रह्मणोर्वेदान्तेषु क्रियासमभिहारेणोद्घोषात् । न वयं भेदाभेदकल्पस्य विशिष्टाद्वैतस्य वादिनो न वा सांख्या इव प्रकृतिपरिणाम-

वादिनो न वाऽऽतुरादिप्रमाणाभासमूलकभेदवादिनः किं तर्हि प्रसिद्धश्रुतिस्मृतिपुराणेति-हासादिमूलकवास्तवैक्यस्य व्यावहारिकजीवब्रह्मभेदस्य च वादिनः। तदुक्तं भाष्य-कारैः—यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवत्यपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्। समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यव-हारस्य सम्यग्ज्ञानेन बाधितत्वात्। तत्र कुत एव सृष्टिः कुतो वा हिताकरणादयो दोषा इति तस्मान्नित्यमुक्तस्य ब्रह्मणो न हिताकरणादिदोषप्रसङ्गः। तदुक्तं गीतायाम्—

नाऽऽदत्ते कस्यचित्पापं नचैव सुकृतं विभुः।
अज्ञानेनाऽऽवृतं ज्ञान तेन मुह्यन्ति जन्तवः॥

[ भ० गी० ५। १५ इति ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ( ७ )

यथा पृथिवीत्वसामान्याक्रान्तानामप्यश्मनां वज्रवैदूर्यचन्द्रकान्तप्रक्षेपणादीनामुत्तममध्य-माधमभेदवैचित्र्यम्। यथा चैकपृथिव्याश्रितानामपि बीजानां बहुविधपत्रपुष्पफलगन्धरसादि-वैचित्र्यम्। तद्वदेकस्यापि ब्रह्मण उपाधिभेदाज्जीवप्राज्ञभेदेन पृथक्त्व कार्यवैचित्र्य चोपपद्य-तेऽतस्तदनुपपत्तिः परपरिकल्पितदोषानुपपत्तिः। विकारस्य वाचारम्भणमात्रत्वात्॥२३॥ (७)

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

नन्वेकमेवाद्वितीयं चेतनं ब्रह्म जगतः कारणमिति यदुक्तं तन्नोपपद्यते। कुतः। उपसंहारदर्शनात्। लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रतन्तुतुरीवे-मादीनि तत्तत्साधनान्युपसंहृत्य घटादिकार्याणि कुर्वन्तीति दृष्टम्। ब्रह्मणश्चासहायस्य तत्तत्कार्योपयुक्तसाधनोपसंग्रहाभावात्कथं स्रष्टृत्वमुपपद्यते। तस्मान्न ब्रह्म जगत्कारणमिति चेत्। अत्रोच्यते। क्षीरवद्धि। हि हेतौ। हि यस्माद्यथा क्षीरं जलं वा स्वयमेव बाह्यसाधन-मनपेक्ष्य दधिहिमभावेन परिणमते तथा ब्रह्मापि बाह्यसाधनमनपेक्ष्य जगत्सृजति। नच दधिभावे औत्स्य(ष्ण्य)मपेक्षितमिति वाच्यम्। औत्स्य(ष्ण्य)स्य दधिभावशक्तेः पूर्णतासंपा-दकत्वात्। ब्रह्म तु परिपूर्णशक्तिकं न तस्यान्येन केनचित्पूर्णता संपादयितव्या। अस्मिन्नर्थे श्रुतिश्च—

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च॥ [ श्वे० ६। ८ ] इति।

तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणाम उपपद्यते । अत्र विद्यारण्यपादानां व्याख्या 'एकमेवाद्वितीय ब्रह्म' [ छा० ६ । २ । १ ] इति श्रुत्वा त्रिविधपरिच्छेदशून्यत्वं ब्रह्मणोऽवगम्यते । स्रष्टव्यानि त्वाकाशवाय्वग्न्यादीनि विचित्राणि । न ह्यविचित्रे कारणे कार्यवैचित्र्यं युक्तम् । अन्यथा क्षीरादेकस्मादेव दधितैलाद्यनेकविचित्रकार्यं स्यात् । क्रमश्चाऽऽकाशादीनां श्रूयते । न च तस्य व्यवस्थापकं किंचिदस्ति तस्मादनेकविधकार्याणां क्रमेण जन्माद्यद्वितीयब्रह्मणो न संभवतीति प्राप्ते ब्रूमः—यद्यपि तत्त्वतोऽद्वैतं ब्रह्म तथाऽपि मायासहायमिति श्रुतियुक्तिविद्वदनुभवैरवगम्यते । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [ श्वे० ४ । १० ] इति श्रुतिः । न च मायाङ्गीकारे द्वैतापत्तिः । वास्तवस्य द्वितीयस्याभावात् । तस्मान्मायोपाधिकाद्ब्रह्मणो विचित्रकार्याणां क्रमेण सृष्टिः संभवतीति । आचार्यपादैः सिद्धान्ते क्षीरदृष्टान्तो योजितो विद्यारण्यपादैस्तु पूर्वपक्षे किमत्र युक्ततरं तत्सुधियो विदांकुर्वन्तु ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥ ( ८ )

ननु क्षीरादेरचेतनस्यात्र दृष्टान्तो नास्माभिरभ्युपेयते । यावन्तश्चेतनाः कुलालादयस्ते ससहाया एव कार्याणि जयन्ति तथा ब्रह्मापि ससहायमस्तु तत्राऽऽह—देवादिवदिति । यथा लोके देवाः पितर इत्यादयो महाप्रभावा ऋषयश्च चेतनाः सन्तोऽनपेक्ष्यैव साधनान्तरमैश्वरयोगात्संकल्पमात्रेणानेकविचित्रकार्याणि निर्मिमाणा उपलभ्यन्ते मन्त्रार्थवादेतिहासपुराणादौ तथेहापि । अत्रेदं तात्पर्यम् । नहि चेतनमात्र ससहायमेव कार्यं निर्मिमीते नान्यथेत्येकान्त इति । तस्मान्न ब्रह्मणो जगज्जन्मादौ सहायापेक्षेति सिद्धम् ॥ २५ ॥ (८)

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

नन्वनन्तराधिकरणे क्षीरदधिन्यायेनाद्वितीयं ब्रह्म जगदाकारेण परिणमत इति व्यवस्थापितम् । तत्किं कार्त्स्न्येन परिणमत उतैकदेशेन । नाऽऽद्यः । कार्त्स्न्येन परिणामे ब्रह्मणः क्षीरवदनित्यता प्रसज्येत । द्वितीये—

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । [ श्वे० ६ । १९ ]
दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥ [ मु० २ । १ । २ ]

इत्यादिनिरवयवत्वप्रतिपादकश्रुतिविरोधः । यद्वा कृत्स्नस्य ब्रह्मणः परिणामप्रसक्तौ कार्यव्यतिरेकेण कारणस्याभावः प्रसज्जेत । ततश्च 'आत्मा वा अरे द्रष्टव्य.' [ बृ० २ । ४ । ५ ] इति द्रष्टव्यतोपदेशानर्थक्यं स्यात् । अयत्नतः कार्यस्य दृष्टत्वात् । अजत्वादिशब्दव्याकोपश्च । सावयवत्वे चानित्यत्वप्रसङ्ग इति सर्वथाऽयमयुक्तः कारणाभिन्नकार्यवाद इति पूर्वपक्षसूत्रार्थः ॥ २६ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्देनाऽऽक्षेपं प्रतिक्षिपति । न तावत्कृत्स्नप्रसक्तिरस्ति । कुतः । श्रुतेः । यथा 'ब स्यां प्रजायेय ' [ छा० ६ । २ । ३ ] इत्यादिश्रुतिवाक्येषु तदेतद्ब्रह्माभिन्ननिमित्तोप दनत्वेन श्रूयते, एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते—' एतावानस्य मा माऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ' [ छा० ३ १२ । ६ ] ' सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रवि नामरूपे व्याकरवाणि ' [ छा० ६ । ३ । २ ] ' सता सौम्य तदा संपन्नो भवति [ छा० ६ । ८ । १ ] इत्यादौ । यथा लोके मणिमन्त्रौषधीनां शक्तयो हि विरुद्धानेव कार्यविषया दृश्यन्ते किमुताचिन्त्यप्रभावस्य ब्रह्मणः । ननूपादानस्य ब्रह्मणः श्रौतम विकारव्यतिरेकेणावस्थानं कथमुपपद्येत । उक्तदोषद्वयप्रसङ्गात् । नैष दोषः । कुतः शब्द मूलत्वादिति । अतीन्द्रियार्थयाथात्म्यस्य वेदैकसमधिगम्यत्वादित्यर्थः । ननु श्रुतिरपि क विरुद्धमर्थं प्रतिपादयेत् । निरवयवं च ब्रह्म प्रपञ्चाकारेण परिणमते न च कृत्स्नमिति । नै दोषः । ' इन्द्रो मायाभिः पुरुरूप ईयते ' [ बृ० २ । ५ । १९ ] इत्यादिश्रुतिभ्यः ब्रह्मणो मायाशक्तिभिर्जगद्रूपत्वपरिणाम उपपद्यते न त्वसौ वास्तवः । तेन कृत्स्नैकदेशा कल्पयोर्नावकाशः । अविद्यापरिकल्पितस्य रूपभेदस्य वाचारम्भणमात्रत्वात् । तस्माद् ज्यते परिणामः ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

कथमेकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनानेकविधा सृष्टिः स्यादिति मा विवादीः । हि हेतौ यत आत्मनि स्वप्नदृशि स्वरूपानुपमर्देन विचित्रा सृष्टिः श्रूयते—' न तत्र रथा न रथयो न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते ' [ बृ० ४ । ३ । १० ] इत्यादौ चकारो दृष्टान्तान्तरसमुच्चयार्थः । मायाव्यादिषु च स्वरूपानुपमर्देन गजाश्वादिसृष्टिर्दृश्यते एवं ब्रह्मण्यपि मायिकी सृष्टिरनेकविधा भवतीति नोक्तदोषावकाशः । यत्तु कश्चिदाह कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा जीवो हि स्वतन्त्रः कर्ताऽस्त्वित्याशङ्क्य तत्खण्डनार्थ मिदम् । जीवः किं सर्वसामर्थ्येन प्रवर्तते किंवांऽशेन । नाऽऽद्यः । अङ्गुल्या तृणचाल सर्वशक्त्या प्रवृत्त्यापत्तेः । नचेष्टापत्तिरनुभवविरोधात् । नान्त्यः । अंशाभावात् । त निरवयवत्वं श्रूयते भाल्लवेयश्रुतौ ' अथ यो जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुख दुःखी शरीरेन्द्रियस्थः ' इति । सिद्धान्ते तु—

' यत्तु युक्त्या विरुध्येत तदीशकृतमेव हि ' ॥

इति गतिः प्रमाणसिद्धा । तस्माज्जीवस्य स्वातन्त्र्यानुपपत्तेर्युक्तं विष्णुर्जगत्कर्तेति तदसत् । निरवयवत्वस्य तेन दुर्वचत्वात् । ' व्यतिरेको गन्धवत् ' [ ब्र० सू० २।३।२६

इत्यधिकरणे जीवस्य सांशतायास्तेनैव स्थापनात् । एवं चांशविशेषैः कार्यानुसारितारतम्येन कर्तृत्वमुपपद्यत एव । जीवमात्रस्य भाल्लवेयोक्तलक्षणे सति नारकिजीवविरञ्चिजीवयोरविशेषप्रसङ्गश्च । तदनन्तरम् —'श्रुतेस्तु शब्दमूलत्वात् ' [ ब्र० सू० २ । १ । २७ ] न हरेः कर्तृत्वे युक्तिविरोधः । योऽसौ विरुद्धोऽविरुद्धः । 'मनुरमनु. ' इत्यादिश्रुत्या लोकविरुद्धधर्माणामीश्वरेऽविरुद्धतयाऽवस्थानोक्तेरित्याह । तदसत् ।

' निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ' [ श्वे० ६ । १९ ] ।

' नेह नानाऽस्ति किंचन ' [ बृ० ४ । ४ । १९ ] इत्यादिश्रुतीनां व्याकोपात् । किंच सर्वेषां विरोधानां विष्णावदूषणत्वे द्वितीयाध्यायवैयर्थ्यात् । जीवब्रह्मणोरभेदापाताच्च । ' आत्मनि चैवं विचित्राश्च हि ' [ ब्र० सू० २ । १ । २८ ] आत्मन्येवैव युक्तिविरोधो नास्ति ।

' विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्युः ' ।

इतिश्रुतेरित्याह । इदं सोपाधिके ब्रह्मण्यस्माभिरप्यभ्युपेयते निरुपाधिके तु ' नेह नानाऽस्ति किंचन ' इत्यादिश्रुतिविरोधान्नाभ्युपेयते । ते धर्मा वास्तवा एवेति वदतस्तस्य भेदवादिनो मतं प्रसिद्धश्रुतिस्मृत्यादिभिः प्रमाणैः खण्डितुं न दुःशकं तथाऽपि भाल्लवेयादिश्रुतिप्रहारो दुर्वार इति मत्वोपरम्यते ॥ २८ ॥

## स्वपक्षदोषाच्च । २९ ( ९ )

इतरमतेऽप्ययं दोषः समानः । प्रधानवादी निरवयवमपरिच्छिन्नं प्रधानं सावयवस्य परिच्छिन्नशब्दादियुक्तस्य कार्यस्योपादानकारणमिति ब्रूते । तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वव्याकोपो वा प्रसज्जेत । यदि कार्ये कल्पिता विचित्रशक्तय एव प्रधानस्यावयवस्थानीयास्तर्हि ब्रह्मवादिनोऽपि समानम् । अणुवादिनोऽपि दोषोऽयं समानः । अणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत तर्हि कार्ये द्व्यणुकादौ महापरिमाणानुपपत्तिः । एकदेशेन संयोगे निरवयवत्वव्याकोप इति । परिहृतस्तु ब्रह्मवादिना मायाशक्तिं पुरस्कृत्य स्वपक्षदोषः । सांख्यारम्भवादिनोस्तु नैव निस्तारः ॥ २९ ॥ ( ९ ) ।

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

विचित्रमायाशक्तियोगाद्ब्रह्मणो विचित्रकार्योपादानत्वमुपपद्यत इति प्रतिपादितम् । योगः संबन्धः सोऽपि मायिक एव । कथमवगम्यते विचित्रशक्तियुक्तं ब्रह्मेति । उच्यते । सर्वोपेता सर्वशक्तियुक्ता परा देवता 'सेयं देवतैक्षत ' [ छा० ६ । ३ । २ ] इति श्रुतेः । कुतः । तद्दर्शनात् । तथा च दर्शयति श्रुतिः ' सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः '

[ छा० ३ । १४ । ४ ] ' सत्यकामः सत्यसंकल्पः ' [ छा० ८ । ७ । १ ] ' यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः [ मु० १ । १ । ९ ] इत्यादिका । केचित्

' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' [ श्वे० ६ । ८ ] ।

' मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ' [ श्वे० ४ । १० ] इत्यादिदर्शनात्सर्वाऽपि शक्तिरुपेता ब्रह्माश्रितैवेति ज्ञायते । अतो मायाशक्तिमतस्तस्य किं किं न संभवतीति व्याचक्रुः ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ ( १० )

ननु विचित्रशक्तिमत्यपि सा परा देवता विकरणत्वाच्चक्षुःश्रोत्रादिकरणरहितत्वात्कथं जगन्निर्मातुं प्रभवेदिति चेत् । नच तस्या देवताया विकरणत्वमश्रौतमिति वाच्यम् । ' अचक्षुष्कमश्रोत्रमवागमनाः ' [ बृ० ३ । ८ । ८ ] इति श्रुत्या श्रौतत्वावगमात् । यदत्र देयमुत्तरं तत्पूर्वमेव दत्तम्—सर्वशक्तिमतो ब्रह्मणः सर्वं सभवतीति । तथा च श्रुतिः- ' अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ' [ श्वे० ३ । १९ ] इति अकरणस्यापि ब्रह्मणः सर्वसामर्थ्ययोग दर्शयति । यत्तु ' सर्वोपेता च तद्दर्शनात् । परा देवता न केवल विचित्रशक्तिः किं तु सर्वया सर्वविषयिण्या सार्वकालिक्या च शक्त्या युक्तः । तत्र चतुर्वेदशिखा प्रमाणीकृता । ' श्रुतेस्तु शब्दमूलत्वात् ' । ' आत्मनि चैवं विचित्राश्च हि ' । 'सर्वोपेता च तद्दर्शनात् ' । अनया त्रिसूत्र्या भगवत्यचिन्त्यशक्तियुक्ते न कोऽपि विरोधः संभवतीति कश्चिदाह । तदयुक्तम् । जीवब्रह्मणोरभेदापातात् । तथा हि-

'विष्णौ श्रुत्येकगम्ये रव इव रसनं साधनं बाधनं वा<br>
कर्तुं शक्त न मानान्तरमखिलजगत्क[र्तृ]रीति स्वरीतिः ।<br>
स्मृत्यारूढा कथ न व्यपगमयति ते लोकदृष्ट्या निरूढा-<br>
मेकत्वायोगशङ्कां परतनुधरयोर्वल्गसि त्व वृथैव ' ॥ इति

प्रत्यक्षसिद्धस्य जीवस्य श्रुत्येकगम्येन सह कथमभेद इति चेत् । रामकृष्णादिशरीराणामिवेति गृहाण । तत्र लोकसिद्धभेदानुवादकानि पुराणानीति त्वमेवावोचः । नाहं सर्वज्ञ इति भेदप्रतीतिस्तु सर्वज्ञाभेदानवगमाद्भविष्यति । तव मते नाहमणुरित्यादिवत् ॥३१॥(१०)

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

जगतश्चेतनकर्तृकत्वं पुनः प्रकारान्तरेणाऽऽक्षिपति । परमात्मेदं जगन्निर्मातुं नार्हति। कुतः । प्रयोजनवत्त्वात्प्रवृत्तीनाम् । लोके पुरुषो हि प्रयोजनमुद्दिश्यैव प्रवर्तते ।

' प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ' ॥

इति न्यायात् । यदि परमात्मा स्वप्रयोजनाय सृष्टौ प्रवर्तत इति कल्प्येत पूर्णकामत्वं

परमात्मनः श्रूयमाणं बाध्येत । प्रयोजनाभावेऽप्युन्मत्तवत्प्रवर्तत इति कल्प्येत तदा परमात्मनः श्रूयमाणा सर्वज्ञता बाध्येतेति पूर्वः पक्षः ॥ ३२ ॥ ( १० )

तत्र सिद्धान्तमाह—

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥ ( ११ )

तुशब्द आक्षेपं परिहरति । यथा लोके राजादीनां विनाऽपि प्रयोजनं लीलया मृगयादौ प्रवृत्तयो दृश्यन्ते । यथा वोच्छ्वासादयः स्वभावादेव प्रवर्तन्ते । एवमीश्वरस्यापि विना प्रयोजन स्वभावादेव केवललीलारूपायां जगद्रचनाया प्रवृत्तिर्भविष्यति । न हीश्वरस्य प्रयोजनं न्यायतः श्रुतितो वा संभवति । न च स्वभावो निवारयितु शक्यते । यद्यप्यस्माकं जगद्रचना गुरुतरारम्भेवाऽऽभाति तथाऽपीश्वरस्य लीलैव केवलेयमपरिमितशक्तित्वात् । यद्यपि लौकिकलीलासु किंचित्प्रयोजनमुत्प्रेक्षितु शक्य तथाऽपि ब्रह्मणि न तदुत्प्रेक्षितुं शक्यते तस्य पूर्णकामत्वात् । तस्माल्लीलामात्रमेवेति सिद्धम् ॥ ३३ ॥ ( ११ )

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याऽऽक्षिप्यते स्थूणानिखननन्यायेन प्रतिज्ञातार्थदृढीकरणाय । देवादीन्सुखिनस्तिर्यगादीन्दुःखिनस्तदुभयेतरान्मनुष्यादींश्च मध्यमान्निर्मिमाणस्येश्वरस्य पृथग्जनस्येव वैषम्यं प्रसज्जेत निर्निमित्तं सर्वाः प्रजाः संहरतो नैर्घृण्य [ च ] प्रसज्जेत । शुद्धबुद्धमुक्तस्वभावस्येश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गाज्जगत्कारणत्वमनुपपन्नमिति प्राप्ते ब्रूमः । न तावदीश्वरस्य वैषम्यप्रसङ्गोऽस्ति । कुतः । सापेक्षत्वात् । प्राणिनामुत्तममध्यमाधमलक्षणवैषम्ये तत्तत्कृतपुण्यपापकर्मणामेव प्रयोजकत्वात् । नचैतावतेश्वरस्य स्वातन्त्र्यहानिर्भवति । अन्तर्यामितया कर्माध्यक्षत्वात् । नन्वेवसति परकुट्टीप्रभातन्याय आपद्येत । ईश्वरे वैषम्य परिहर्तु कर्मणां वैषम्यहेतुत्वमुक्त्वा पुनरपीश्वरस्य स्वातन्त्र्यसिद्धये तेषा कर्मणा नियामकत्वेऽभ्युपगम्यमाने सत्यन्ततो गत्वेश्वरस्यैव वैषम्यहेतुत्वप्रसङ्गात् । नाय दोषः । नियामकत्व नाम तत्तद्वस्तुशक्तीनां व्यवस्थापादकत्वम् । ' एष सेतुर्विधरण एषा लोकानामसंभेदाय ' [ बृ० ४ । ४ । २२ ] इति श्रुतेः । शक्तयस्तु मायाशरीरभूताः । न तु तासामुत्पादक ईश्वरः । ततश्च मायाशक्तिवशात्कर्मणां वैषम्यहेतुत्वे सति न व्यवस्थापकस्येश्वरस्य वैषम्यप्रसङ्गः । संहारस्य सुषुप्तिवद्दुःखाजनकत्वान्मायाशक्त्या जगत्संहर्तुरीश्वरस्य प्रत्युत सघृण[ त्व ] मेव न निर्घृणत्वम् । तस्मान्नेश्वरे वैषम्यनैर्घृण्ये संभवतः । तथा हि दर्शयति— ' एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ वाऽसाधु कर्म कारयति तं यमधो निनीषते ' [ कौ० ३ । ८ ] इति । ' पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणा ' [ बृ० ३ । २ । १३ ] इति च । आभ्या श्रुतिभ्या

साधारणकारणत्वमीश्वरस्य पर्जन्यवदसाधारणकारणत्वं तत्तत्प्राणिकर्मणामेव व्रीह्यादिबीजवदिति भाष्ये स्थितम् ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

ननु ' सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् ' [ छा० ६ । २ । १ ] इति प्राक्सृष्टेरविभागावधारणात्तदानीं कर्म नास्ति । यदपेक्षया विषमा सृष्टिः स्यात् । तस्मादवान्तरसृष्टिषु पूर्वपूर्वकर्मापेक्षया सृजत ईश्वरस्य वैषम्याभावेऽपि प्रथमसृष्टौ पूर्वकर्मासंभवाद्वैषम्यदोषस्तदवस्थ इति चेन्न । ससारस्यानादित्वात् ॥ ३५ ॥

कथ ससारस्यानादित्व तत्राऽऽह—

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ ( १२ )

कर्मान्तरेण न शरीरम् । शरीरमन्तरेण न च कर्म । ससारस्यानादित्वेन बीजवृक्षवदन्योन्याश्रयपरिहारः सभवति । तस्मात्संसारस्यानादित्वमुपपद्यत उपलभ्यते च । ' धाता यथापूर्वमकल्पयत् ' [ ऋ० सं० १० । १९० । ३ ] इति श्रुतौ । ' न रूपमस्येह तथोपलभ्यते नान्तो न चाऽऽदिर्न च सप्रतिष्ठा ' [ भ० गी० १५ । ३ ] इति स्मृतौ च । तस्मादनादौ ससारे बीजवृक्षवद्धेतुहेतुमद्भावे हेतुभूतात्कर्मणः सर्ववैषम्यान्नेश्वर उक्तदोषावकाशः ॥ ३६ ॥ ( १२ )

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्च । यस्मादस्मिन्सर्वज्ञे सर्वशक्त्युपेते महामायोपाधिके ब्रह्मणि जगत्कारणे सर्वेषा कारणधर्माणामुपपत्तेः( त्तिः ) तस्मादिदमौपनिषद दर्शनं निरवद्यमिति भाष्यम् । विद्यारण्यपादा अत्राऽऽहुः—ननु ब्रह्मणः प्रकृतित्व नोपपद्यते । निर्गुणत्वात् । लोके सगुण एव मृदादौ तदुपलब्धमिति प्राप्ते ब्रूमः । यद्यपि प्रक्रियतेऽनयेति प्रकृतिरितिव्युत्पत्त्या विक्रियमाणत्व प्रतीयते तथाऽपि तद्विक्रियमाणत्वं द्वेधा संभवति—क्षीरादिवत्परिणामत्वेन वा रज्ज्वादिवद्भ्रमाधिष्ठानत्वेन वा । तत्र निर्गुणे परिणामित्वासभवेऽपि भ्रमाधिष्ठानत्वमस्तु । दृश्यते हि निर्गुणेऽपि जात्यादौ भ्रमाधिष्ठानता । मलिन ब्राह्मणं दृष्ट्वा शूद्रोऽयमितिव्यवहारदर्शनात् । तस्मान्निर्गुणमपि ब्रह्म प्रकृतिरिति सिद्धमिति । भाष्यस्यास्य च व्याख्येयव्याख्यानभाव एव । यत्तु परेणोक्तम्—द्विविधं वैषम्यं निर्घृणत्वं च—एकं धर्माद्यनपेक्षाप्रयुक्तम् । अपरं तु सापेक्षत्वेऽपि कर्मादिसत्तादेरीश्वराधीनत्वप्रयुक्तम् । तत्राऽऽद्य नाङ्गीकार्यम् । कर्मकाण्डाप्रामाण्यापत्तेः । द्वितीयं तु वैषम्यादिकं दूषण नेति न जीवानामीश्वरस्य प्रत्यवायः सभवति येन तदापादकं

सद्वैषम्यादिदोषतां लभेदि(ते)ति । तदसत् । भ्रमाधिष्ठानतामन्तरेण कयाऽपि विधया निर्दोषत्वापादनायोगादित्यन्यत्र विस्तरः ।

इति लक्ष्मीनरहरिसूरिसूनोर्हरिदीक्षितस्य कृतौ ब्रह्मसूत्रवृत्तौ सुबोधिन्यां
द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयः पादः ।

---

**रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥**

पूर्वपादे स्वपक्षे परोद्भावितदूषणनिरासेन स्वपक्षः साधित इदानीं परपक्षं दूषयितुं द्वितीपाद आरभ्यते । यद्यपि 'ईक्षतेर्नाशब्दम्' [ ब्र० सू० १ । १ । ५ ] इत्याद्यधिकरणेषु सांख्यमतं निराकृतं तथाऽपि तत्र यानि वेदान्तवाक्यानि तेन स्वपक्षानुगुण्येन योजितानि तस्य तद्व्याख्यान व्याख्यानाभासमित्येतावत्पूर्वत्र कृतम् । इदानीं तु युक्तिबलेन प्रधानकारणत्वं तेनोक्तं तन्निरस्यते । एव तार्किकादिमतान्यपि निरस्यन्त इत्यपौनरुक्त्यम् । तत्र सांख्यो मन्यते—सुखदुःखमोहात्मक प्रधानं जगतः प्रकृतिरुपादानमिति यावत् । जगति सर्वत्र सुखाद्यन्वयदर्शनात् । घटपटादयो लभ्यमानाः सुखाय भवन्ति जलाहरणप्रावरणादिकार्यकारित्वात्त एवान्यैरपहियमाणा दुःखाय मोहाय च भवन्ति । अतः सुखदुःखाय मोहान्वयदर्शनात्प्रपञ्चस्य सुखदुःखमोहात्मकतया त्रिगुणात्मकस्य त्रिगुणात्मक प्रधानमेवोपादान तच्चेतनस्य पुरुषस्यार्थं साधयितु विचित्रविकारात्मना प्रवर्तत इति प्राप्ते ब्रूमः—अनुमानं प्रधानं जगत्कारणं न भवति । कुतः—रचनानुपपत्तेः । अचेतनस्य प्रधानस्य विचित्रसृष्टिरचनानुपपत्तेः । लोके प्रतिनियतसंनिवेशविशेषस्य प्रासादादेर्बुद्धिमच्छिल्पिकर्तृकत्वोपलम्भात् । इय तु जगद्रचना संभावितत्तमैः शिल्पिभिर्मनसाऽप्यालोचयितुमशक्या कथमचेतनं प्रधान तत्र कारणं भवेद्यदि चेतनानधिष्ठितम् । चशब्दो जडेषु हेतोरसिद्धि द्योतयति । घटादीनां सुखाद्यात्मकत्व न प्रतीयते । सुखदुःखमोहानामान्तरत्वप्रसिद्धेः । तस्मादचेतनं प्रधानं स्वप्रधानतया न जगत्कारणम् ॥ १ ॥

**प्रवृत्तेश्च ॥ २ ॥**

आस्तां तावद्रचना । या प्रधानस्य रचनानुकूला प्रवृत्तिर्गुणसाम्यावस्थातः प्रच्युतिः सत्त्वरजस्तमसामङ्गाङ्गिभावापत्तिः साऽप्यचेतनस्य प्रधानस्य नोपपद्यते । चेतनाधिष्ठितस्यैव

रथादेः प्रवृत्तिदर्शनात् । तदुक्तं भाष्यकृद्भिः—नहि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वाऽनधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते । दृष्टाच्चादृष्टसिद्धिरतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवतीति ॥ २ ॥

**पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥**

ननु यथा क्षीरमचेतनं स्वयमेव वत्सविवृद्धये प्रवर्तते । यथा वा जलं स्वयमेव लोकोपकाराय स्यन्दते तथा प्रधानमचेतनं स्वयमेव पुरुषार्थसिद्धये प्रवर्तत इति चेन्नैतत्साधु यतस्तत्रापि चेतन ईश्वर एव प्रवर्तक इति शेषः । तयोरपि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरिति न दृष्टान्तता । 'योऽप्सु तिष्ठन्योऽपोऽन्तरो यमयति' [ बृ० ३ । ७ । ४ ] 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' [ बृ० ३ । ८ । ९] इत्यादिश्रुतेः । चेतनाया धेनोर्वत्सस्नेहेन क्षीरं प्रवर्तते वत्सपेपणाय क्षीरमाकर्षतीति लोके प्रसिद्धमेतत् । पूर्वपादे 'उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि' [ ब्र० सू० २ । १ । २४] इत्यत्र तु बाह्यसाधननिरपेक्षमपि स्वाश्रय भवतीत्येतल्लोकदृष्ट्या निदर्शितम् । शास्त्रदृष्ट्या पुनः सर्वत्रेश्वरापेक्षत्वमापाद्यमानं न पराणुद्यते ॥ ३ ॥

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥**

सांख्यसिद्धान्ते त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधान प्रधानस्य तद्व्यतिरेकेण प्रवर्तकं निवर्तकं वा किंचिद्बाह्यमपेक्ष्यमवस्थित नास्ति । पुरुषस्तूदासीनो न प्रवर्तको न च निवर्तकः । अतो व्यतिरेकानवस्थितेश्चेतनानपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम् । ईश्वरस्य मायोपाधिकत्वात्सर्वज्ञत्वाच्च प्रवृत्तिः कदाचित्कदाचिन्निवृत्तिश्च न विरुध्यते । अत्रान्नभट्टैर्व्याख्यातम्—सर्वदा महदाद्याकारेण परिणाम एव स्यान्न तु कदाचिदपि तस्य व्यतिरेकः । व्यतिरेकस्यानवस्थितेरिति व्यतिरेकाभावादित्यर्थः । कुतः । अनपेक्षत्वात्, चेतनानपेक्षत्वादिति । अत्र सांख्यमतखण्डनाय प्रवृत्तेन केनचिद्वालिगतम्—

सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम् ।
मायावाद्युपमा यायादिति ॥

सर्वमानविरोध एव दुर्दीक्षादुष्टोऽनुष्ठानसंकल्पः । तत्र दीक्षितोऽयं सांख्यो मायावादिनामुपमात्वं प्राप्नुयात् । तेऽपि हि कर्तृत्वभोक्तृत्वादिसकलधर्मविकलमसत्कल्पं चैतन्यमात्रमङ्गीकुर्वन्ति । अविद्याया एवाचेतनायाः सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चाभ्युपगच्छन्ति । तदेतेषा सर्वप्रमाणविरुद्धाङ्गीकारित्वेन सांख्योऽयं दृष्टान्तभावमापद्यत इति तदुभयं तस्य

शास्त्रसंप्रदायानभिज्ञतां स्फुटयति । तथा हि । 'कर्ता शास्त्रार्थवत्त्वात्' [ ब्र० सू० २ । ३ । ३३ ] इत्यधिकरणे बन्धश्चैतन्यस्य स्थापितः । मोक्षोऽप्यविद्यानिवृत्तिरूपश्चेति स्पष्टमाकरे । बन्धहेतुरविद्याऽपि साङ्ख्याभिमतप्रकृतिवन्न स्वतन्त्रा किन्त्वीश्वराधीनेति स्पष्टमेव । एवंस्थितेऽविद्याया एव सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चेति वदन्स वराकः कैश्चिदद्वैतवादिबालकैः प्रतारित एव । असत्कल्पं चैतन्यमिति प्रलापमात्रम् । कालत्रयाबाध्यं सर्वाधिष्ठानं सन्मात्रमिति सर्वोपनिषत्सिद्धस्यासत्कल्पत्वायोगात् । सकलधर्मवैकल्यात्तथोक्तमिति चेन्न । त्वन्मतेऽपि स्वरूपातिरिक्तधर्माभावात् । स्वरूपत्वस्य चास्माभिरपि स्वीकाराच्च । प्रत्युतास्माभिर्व्यावहारिका धर्मास्तत्र स्वी क्रियन्ते । स्वरूपातिरिक्तधर्मानभ्युपगन्तुस्तव विपरीतोऽयं सगुणवादः । अपि च धर्मवैकल्यादसत्त्वमिति त्वया दुर्वचम् । अलीकस्यापि ज्ञानविषयत्वमत्यन्ताभावप्रतियोगित्वादिकं च धर्म इति त्वदभ्युपगमात् । किंच जीवे बन्धो नास्तीति त्वदभ्युपगमात्तवैवायं दुरुद्धरो दोषः । यथा चैतत्तथा 'कर्ता शास्त्रार्थवत्त्वात्' [ ब्र० सू० २ । ३ । ३३ ] इति त्वदीयाधिकरणस्य भङ्गे वक्ष्यामः । विस्तरस्तु तत्त्वकौस्तुभे द्रष्टव्य इति दिक् ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

ननु यथा तृणपल्लवोदकादिकं निरपेक्षमेव क्षीराकारेण परिणमत एव प्रधानमपीति चेन्न । अन्यत्राभावात् । धेन्वैव ह्युपभुक्तं तृणादि क्षीरी भवति नानडुहोपयुक्तम् । ततश्च धेन्वादेरन्यत्र तृणादेः क्षीरीभावादर्शनान्न तृणादिकं निरपेक्षं क्षीरी भवतीति न दृष्टान्त इत्यर्थः । तृणादिवदिति शङ्का । अन्यत्राभावादिति दृष्टान्तनिरासेन समाधानमित्यनुसंधेयम् ।

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रधानस्य प्रवृत्तिर्न भवतीति स्थापितम् । तथाऽपि तुष्यतु भवानिति स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम । तथाऽपि दोषस्तदवस्थ एव । कुतः । अर्थाभावात् । प्रयोजनाभावादित्यर्थः । अयमर्थः—यदि प्रधानस्य स्वाभाविकी प्रवृत्तिः किंचिदपि सहकारि नापेक्षत इत्युच्यते । तर्हि किंचित्प्रयोजनमपि नापेक्षिष्यत इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इति प्रतिज्ञा हीयेत । स यदि ब्रूयात्सहकार्येव नापेक्षते प्रयोजनं त्वपेक्षत एवातो न प्रतिज्ञाभङ्गः । तत्र विचार्यते—प्रधानस्य प्रवृत्तिः पुरुषस्य भोगार्थाऽपवर्गार्था वोभयार्था वा । आद्येऽपवर्गाभावप्रसङ्गः । द्वितीये भोगाभावप्रसङ्गः । तृतीयेऽप्यनिर्मोक्षप्रसङ्गः । भोक्तव्यानां प्रकृतिमात्राणामानन्त्यात् । निर्मलस्यासङ्गोदासीनस्य पुरुषस्य तु न प्रवृत्तिर्नापि निवृत्तिः संभवति । तस्मात्पुरुषार्थो प्रधानस्य प्रवृत्तिरित्येतदयुक्तम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथाऽपि ॥ ७ ॥

यथा कश्चिदपङ्गुरन्धः कश्चिच्चक्षुष्मान्पङ्गुः । तत्रान्धमपङ्गुमधिष्ठाय पङ्गुश्चक्षुष्मांस्तं प्रवर्तयति । यथा वाऽयस्कान्तः स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति । एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति चेत् । समाधत्ते—तथाऽपीति । तथाऽपि दोषबाहुल्यमित्यर्थः । पुरुषस्य प्रवर्तकत्वे तस्यौदासीन्यभङ्गः । प्रधानस्याभ्युपगतस्वातन्त्र्यभङ्गः । अयस्कान्तवत्संनिधिमात्रेण प्रवर्तकत्वे संनिधिनित्यत्वेन प्रवृत्तिनित्यताप्रसङ्गः । प्रधानस्याचेतनत्वात्पुरुषस्य चौदासीन्याच्च तयोः संबन्धानुपपत्तिः । योग्यतावशात्संबन्धे योग्यताया नि[त्य]त्वादनिर्मोक्षप्रसङ्गः । सिद्धान्ते तु परमात्मनः स्वरूपेणौदासीन्य मायावशाच्च प्रवर्तकत्वमिति न किंचित्संकटम् ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

किंच गुणानां साम्यावस्था प्रकृतिः । तत्र गुणानामङ्गाङ्गिभावव्यतिरेकेण न महदाद्युत्पत्तिः । स चाङ्गाङ्गिभावोऽचेतन[प्रति]क्षोभयितारमन्तरेण न भवति । न च क्षोभकः पुरुष इति वाच्यम् । तस्यासङ्गोदासीनस्वभावत्वात् । अतोऽङ्गित्वानुपपत्तेश्च रचनानुपपत्तिः ॥८॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

ननु कार्यवशेन गुणा अनुमीयन्ते । तत्र यथा कार्यं संभवति तथा गुणानां स्वभावः कल्प्यः । तत्र साम्यावस्थायामपि वैषम्ययोग्या एव गुणा अवतिष्ठन्ते । तेनाङ्गाङ्गिभावसंभवात्कार्योपपत्तिरित्येवंप्रकारेणानुमीयत इति चेत् । अत्र समाधिः—ज्ञशक्तिवियोगादिति । चैतन्याभावादित्यर्थः । अचेतनाना गुणाना साम्यावस्थायां वैषम्ययोग्याणामपि निमित्तमन्तरेण वैषम्ये सर्वदा तत्प्रसङ्गः । साम्ये च सर्वदा साम्यप्रसङ्ग इत्याङ्गित्वानुपपत्तिदोषस्तदवस्थ एव ।

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ ( १ )

परस्परविरुद्धश्चायं सांख्यानां मतोपन्यासः । क्वचित्सप्तेन्द्रियाण्यनुक्रामन्ति क्वचिदेकादश । तथा क्वचिन्महतस्तन्मात्रसर्गः । क्वचिदहकारात् । क्वचित्त्रीण्यन्तःकरणानि क्वचिदेकमिति । प्रसिद्ध एव श्रुत्या 'सदेव सौम्येदमग्र आसीत्' [ छा० ६ । २ । १ ] 'आत्मा वा इदमेक एवाग्र आसीत्' [ तै० १ । १ ] इत्यादिकयेश्वरकारणवादिन्या श्रुत्या स्मृत्या च विरोधः । तस्मादसमञ्जस सांख्यदर्शनम् । अत्र भाष्ये महता प्रबन्धेन सांख्योत्थापिता शङ्का निराकृता । सा दिक्प्रदर्शनेन विद्यारण्यपादैरुपपाद्योपसहृता । तथा हि । पूर्वस्मिन्पादे चेतनाद्ब्रह्मणो विलक्षण जगत्कथ जायत इत्याक्षिपतः सांख्यान्प्रति लोकसिद्ध गोमयवृश्चिकादिनिदर्शन तत्राभिहितम् । तेन सांख्यकृतमाक्षेप परिहृत्य स्वपक्षः स्थिरी कृतः । आचार्यैस्तु पूर्वपादे श्रुतिभिः सांख्यमतं निरस्यास्मिन्पादे युक्तिभिः सांख्यमतखण्डना-

नन्तरं चैतन्यस्यैकस्य ब्रह्मणो जगतः कारणत्वमभ्युपगच्छतां कार्यकारणविरोधं वेदा- न्तिनां तप्यतापकयोर्वैजात्यानभ्युपगमात्प्रदर्शयता साङ्ख्यानां विकारभेदस्य वाचारम्भणमा- त्रत्वाद्व्यवहारे यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति सांख्यकृत आक्षेपः परिहृतः ॥ १० ॥ ( १ )

इदानीं परमाणुकरणवादो निराकर्तव्यस्तत्राऽऽदौ तदुद्भावित दोष तत्प्रक्रियादृष्टान्तेनैव समाधत्ते सूत्रकारः—

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ ( २ )

शुक्लेभ्य एव तन्तुभ्यः शुक्ल. पटो जायते न तु रक्तेभ्योऽतश्चेतनाद्ब्रह्मणो जगदचेतन- मुत्पद्यत इत्यनुपपन्नम् । कारणद्रव्यसमवायिनो गुणाः कार्ये समानजातीय गुणान्तरमार- भन्त इति नियमादिति प्राप्तेऽभिधीयते। अस्यैव विसदृशोत्पत्तौ दृष्टान्तः । यथा पारिमाण्डल्य- युक्ताभ्या परमाणुभ्या द्वाभ्यां ह्रस्वमणुपरिमाणोपेत दीर्घमहत्परिमाणरहित द्व्यणुकमुत्पद्यते । इदमेकं निदर्शनम् । तादृशेभ्यस्त्रिभ्यो द्व्यणुकभ्यो दीर्घं महत्परिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यते । इदमपर निदर्शनम् । अत्र परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते । तथाऽणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी नाऽऽरभेते त्र्यणुकादौ स्वसमानजातीये अणुत्वह्रस्वत्वे । त्र्यणुकस्य महत्वदीर्घत्वपरिमाणयोगाभ्युपगमात् । एव चेतनाद्ब्रह्मणो विजातीयाचेतनोत्पत्तौ किं बाधकमिति भावः । सूत्रेऽणुपरिमाणमध्याहार्यम् । तथा च यथाक्रमं परमाणौ परिमण्डलं तदेव पारिमाण्डल्यम् । द्व्यणुकेऽणुपरिमाणं ह्रस्वत्वं च । त्र्यणुकादौ महत्परिमाण दीर्घत्वं चेति सूचयितु वाशब्द. ॥ ११ ॥ ( २ )

## उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

इदानी परमाणुकारणवादो निराक्रियते । तत्रेत्थ काणभुजी शास्त्रस्थितिः—पृथिव्यप्ते- जोवाय्वाकाशकालदिगात्ममनासीति नवैव द्रव्याणि। तेषामाकाशादीनि निरवयवाणि नित्यानि। अत एव पृथ्व्यादीनि नित्यान्यनित्यानि चेति द्विविधानि । तत्र विनश्यतां पृथिव्यादीना सावयवाना परमाणुपर्यन्तो विभागो भवति स प्रलयकालः । ततः सर्गकाले परमेश्वरस्य सिसृक्षा भवति तदा परमाणुष्वचलेषु प्राण्यदृष्टापेक्ष कर्मोत्पद्यते । तस्मात्कर्मणस्तदाश्रय एकः परमाणुरपरेण परमाणुना संयुज्यते । ततो द्व्यणुकादिगतानि रूपादीनि भवन्ति तन्तु- पटन्यायवदिति । तत्रेदमभिधीयते—यदेतदाद्यं कर्मानिमित्त सनिमित्त वा । अनिमित्तत्वे नियामकाभावात्सर्वदा तदुत्पत्तौ प्रलयाभावप्रसङ्गः । सनिमित्तत्वेऽपि तन्निमित्त दृष्टमदृष्ट वा । न तावद्दृष्टम् । प्रयत्नस्याभिघातस्य वा शरीरोत्पत्तेः प्रागसभवात् । ईश्वरप्रयत्नस्य च नित्यस्य कादाचित्काद्यकर्मोत्पत्ति प्रत्यनियामकत्वात् । नापि प्राण्यदृष्टमाद्यकर्म निमित्तम् ।

आत्मसमेतस्यादृष्टस्य परमाणुभिरसंबन्धात् । अदृष्टवता पुरुषेण परम्परासंबन्ध इति चेत् । तस्य सार्वदिकत्वात्सर्वदा कर्मप्रसङ्ग इति नियतकालसृष्टिर्न स्यात् । एवं प्रलयेऽपि योज्यम् । संयोगोत्पत्त्यर्थं वा । उभयथाऽपि न कर्म संभवति । अतस्तदभावः । सृष्टिप्रलययोरभाव इत्यर्थः । यद्वा परमाणुकर्मणः सनिमित्तत्वेऽनिमित्तत्वे चोभयथाऽपि न नियतकालं कर्म । अतस्तदभावः सृष्ट्यभाव इति वा सूत्रार्थः । नचेश्वरस्य सृष्ट्यादिकर्तृत्वाङ्गीकारान्नियत-कालोपपत्तिः । तस्यापि नित्यज्ञानादिमत्त्वेन सर्वदा कार्यप्रसङ्गे दृष्टसाचिव्येनैव नियतत्वस्य पराभिमतत्वात् 'सिद्धान्ते तु ' लोकवत्तु लीलाकैवल्यम् ' [ ब्र० सू० २।१।३३ ] इति सूत्रश्रुतिस्मृत्यनुसारेणोपपादितमेव पुरस्तात् । तस्मादनुपपन्नोऽय परमाणुकारणवादः ॥१२॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

कार्यकारणयोः समवायाभ्युपगमाच्च परमाणुकारणता न संभवति । कुतः । साम्यादनवस्थितेः । द्वाभ्यां परमाणुभ्यामुत्पद्यमानं द्व्यणुकं द्वाभ्यां परमाणुभ्यामत्यन्तभिन्नं सद्द्वयोः परमाण्वोः समवैतीति भवताऽभ्युपगम्यते । यथैव द्व्यणुकं द्वाभ्यां परमाणुभ्यां भिन्न सत्समवायलक्षणसंबन्धेन ताभ्यां संबध्यत एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्समवायान्तरेण समवायिभिः संबध्येत । अत्यन्तभिन्नत्वसाम्यात् । संबन्धो हि संबन्धिभ्य भिन्नस्तावाश्रितश्चैकश्चेति तल्लक्षणात् । इष्टापत्तौ तस्यान्यस्तस्यान्य इत्यनवस्थाप्रसङ्गः । संबन्धत्वात्सबन्धान्तरनैरपेक्ष्ये सयोगेऽपि तथा स्यात् । नच गुणत्वात्संयोगः संबन्धान्तरमपेक्षेतागुणत्वान्न समवाय इति वाच्यम् । अपेक्षाकारणत्वस्य तु तौल्यात् । गुणपरिभाषायाश्चातन्त्रत्वात् । तस्मादनवस्थायां प्रसज्यमानायां द्व्यणुकानुत्पत्तौ जगदनुत्पत्तिः । एकासिद्धौ सर्वासिद्धेः ।

## नित्यमेव च भावात् ॥ १४ ॥

किंच । परमाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभाव वा । आद्ये प्रवृत्तेर्नित्यमेव च भावात्प्रलयाभावप्रसङ्गः । द्वितीये निवृत्तेर्नित्यमेव च भावात्सर्गाभावप्रसङ्गः । उभयस्वभावत्वं च विरोधादसंभाव्यम् । अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसङ्गः अदृष्टादेरतन्त्रत्वे नित्याप्रवृत्तिप्रसङ्गः । तस्मादनुपपन्नः परमाणुकारणवादः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

सावयवानां द्रव्याणामवयवशो विभज्यमानानां यत्रावधिः स परमाणुः । ते च परमाणवश्चतुर्विधा रूपादिगुणवन्तः कार्यारम्भका नित्याश्चेति वैशेषिका अभ्युपगच्छन्ति । तन्नोपपद्यते । अयमेव विपर्ययः । कुतः । रूपादिमत्त्वात् । लोके यद्यद्रूपादिमद्वस्तु तत्तत्स्वका

णात्स्थूलमनित्यं च दृष्टम् । यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च । तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च, एवं परमाणवोऽपि रूपादिमन्तः स्वकारणमपेक्ष्य स्थूला अनित्याश्च । परमकारणे ब्रह्मण्येव वर्तमानेन नित्यशब्देन नञ्समास उपपद्यते । न पुन. परमाणुनित्यत्वमपेक्षते । तस्मादयुक्तः प्रधानकारणवादः ॥ १५ ॥

## उभयथा च दोषात् ॥ १६ ॥

किंच गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी । रसरूपस्पर्शगुणाः सूक्ष्मा आपः । रूपस्पर्शगुणं सूक्ष्मतरं तेजः । स्पर्शगुणः सूक्ष्मतमो वायुरिति । एवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मतारतम्येनोपेतानि लोके लक्ष्यन्ते । तद्वत्परमाणवोऽप्युपचितापचितगुणा अभ्युपगम्येरन्न वा । उभयथा च दोषप्रसङ्गात् । पक्षद्वयेऽपि दोषसंभवान्नाणूनां कारणत्वमित्यर्थः । गुणोपचयत्वकल्पने सावयवत्वप्रसङ्गः । गुणापचयोऽपि मूर्त्यपचयमन्तरेण न भवति । कार्ये तथा दर्शनात् । यदि परमाणुत्वसाम्यप्रसिद्धये सर्वे परमाणव एकैकगुणा एव कल्प्येरंस्ततस्तेजसि स्पर्शोपलब्धिर्न स्यात् । अप्सु रूपस्पर्शयोः । पृथिव्यां रसरूपस्पर्शानाम् । कारणगुणपूर्वकत्वात्कार्यगुणानाम् । अथ सर्वे चतुर्गुणा एव कल्प्येरंस्ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात्तेजसि गन्धरसयोरित्यादि । नचैतद्दृश्यते । तस्मादनुपपन्नोऽणुवादः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ ( ३ )

प्रधानकारणवादो वेदविद्भिर्मन्वादिभिः सत्कार्यत्वाद्यंशेऽभ्युपगतः । अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैरंशे कस्मिन्नपि परिगृहीत इत्यत्यन्तमनादरणीयो वेदवादिभिः । अत्र भाष्ये—वैशेषिकाः षट् पदार्थान्द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यान्भिन्नलक्षणानत्यन्तभिन्नानभ्युपगच्छन्ति । तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति । यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नाना नेतरेतराधीनत्वं सभवत्येव द्रव्यादीनामत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्व गुणादीनां भवितुमर्हतीत्यादि महता प्रबन्धेन तन्मतखण्डनं कृतमस्ति भाष्यत एव तदवगन्तव्यम् । तस्मादस्य परमाणुकारणवादस्यात्यन्तमनपेक्षा । अत्यन्तोपेक्षा वेदवादिभिः कर्तव्येत्यर्थः । अत्र परेण तर्कशास्त्रं खण्डयता मोक्षधर्मपठित सृगालवाक्यं निदर्शनायोक्तम्—

> अहमासं पण्डितको हैतुको वेदनिन्दकः ।
> आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ' ॥ इति ।

तन्मन्दम् । कमठमाठरकौण्ठरव्यादिश्रुतिप्रमाणानुगुणं ब्रह्मतर्कमभ्युपगच्छतस्तस्य तर्कस्तु

पार्ष्णिग्राह एव । न्यायामृततर्कताण्डवादिग्रन्थास्तु तन्मूलका एव । एवसति तर्कशास्त्रं खण्डयन्नुपजीव्याविरोधमेव प्रकटी चकारेति दिक् ॥ १७ ॥ ( ३ )

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वैशेषिकराद्धान्तो वेदविरुद्धत्वान्नापेक्षितव्य इत्युक्तम् । सोऽर्धवैनाशिकः । वैनाशिकत्वसाम्यात्सर्ववैनाशिकमतमिदानीं निरस्यते तत्र केचित्सर्वास्तित्ववादिनः । केचिद्विज्ञानमात्रास्तित्ववादिनः । अन्ये पुनः सर्वशून्यवादिन इति त्रयो वादिनो भवन्ति । ज्ञानेन विषयोऽनुमेय इति सौत्रान्तिकः । विषयप्रत्यक्षवादी वैभाषिकः । इमौ द्वौ वैनाशिकावान्तरभेदौ । एवञ्चैते पञ्च वैनाशिकाः । तत्र सर्वास्तित्ववादिनो बौद्धास्तावन्निरस्यन्ते । ते खल्वेवमाहुः—पृथिव्यादिचतुष्टयस्य परमाणवः क्रमेण खरस्निग्धोष्णचलनस्वभावाः पृथिव्यादिभावेन स्वयमेव सहन्यन्ते । अतोऽतिरिक्तः कश्चनावयवी नास्ति । पुञ्जीभूताश्चतुर्विधाः परमाणवस्तज्जन्य एव लोकत्रयात्मको बाह्यसमुदाय इत्युच्यते । एव रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धा आन्तरसमुदाय उन्यते । एते सर्वव्यवहारास्पदभावेन संहन्यन्ते । तत्र शब्दस्पर्शादयो विषया इन्द्रियाणि च रूपस्कन्धः । स्कन्धः प्रभेद इत्यर्थः । येन तदभिव्यक्तिः स विज्ञानस्कन्धोऽहमित्याकारः । सुखदुःखादिक वेदनास्कन्धः । देवदत्तादिनामधेयं संज्ञास्कन्धः । रागादयः क्लेशा उपक्लेशाश्च मदनादयो धर्माधर्मौ चेत्येतेषा वासना संस्कारस्कन्धः । एतेभ्यः पञ्चस्कन्धेभ्यः पुञ्जीभूतेभ्य आन्तरः समुदायो जायते । तस्मादुच्यते समुदायद्वयमिति प्राप्तेऽभिधीयते—समुदाय उभयहेतुकेऽपि तदप्राप्तिः । उभयहेतुकेऽपि बाह्ये पृथिव्यादिपरमाणुहेतुके समुदाये रूपविज्ञानादिस्कन्धहेतुके चाऽऽन्तरे समुदायेऽभ्युपगम्यमानेऽपि तदप्राप्तिः । तस्य समुदायद्वयस्यासिद्धिः । अन्यस्य भोक्तुः सहन्तुः स्थिरस्य चेतनस्य तैरनभ्युपगमात् । निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमः स्यात् । संहन्तारमन्तरेण समुदायानुपपत्तौ तदाश्रया लोकयात्रा च लुप्येत ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

यद्यपि चेतनः स्थिरः संहन्ता नाभ्युपगम्यते तथाऽप्यविद्यादीनामितरेतरकारणत्वाद्बीजाङ्कुरवत्कार्योत्पत्तिरुपपद्यते । ते चाविद्यादयः—अविद्या सस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदना तृष्णोपादानं भवो जातिर्जरा मरणमित्यादयः सौगतसमये प्रसिद्धाः । तस्मान्नास्ति चेतनापेक्षेति चेन्न । कुतः । उत्पत्तिमात्रनिमित्तत्वात् । अत्रायं भाष्याशयः—भवेदुपपन्नः सघातो यदि संघातस्य किंचिन्निमित्तमवगम्येत । नत्ववगम्यते । यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्योत्पत्तिमात्रनिमित्तं भवेत् । नतु संघातोत्पत्तेः किंचिन्निमित्त सभवति । कश्चन चेतनो भोक्ता सोऽस्य संघातस्योत्पत्तेर्निमित्तं वक्तव्यः । स तु त्वया नाभ्युपेयते । तस्माच्चेतनं विना संघातोत्पत्तौ न किमपि निमित्तमस्तीति

सूत्रार्थः । यद्भोगार्थः संघातः स्यात्स नास्ति स्थिरो भोक्तेति तत्राभ्युपगमः । ततश्च भोगो भोगार्थ एव स नान्येन प्रार्थनीयः । तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन प्रार्थनीय इति भोक्तुर्मुमुक्षोः स्थिरस्य चेतनस्य निमित्तस्याभावान्न संघातोत्पत्तिरित्यभिप्रायः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

पूर्वमविद्यादीनां बीजाङ्कुरवदितरेतरकारणत्वात्कार्योत्पत्तिं प्रति निमित्तत्वमुक्तं तदपीदानीं न संभवतीति प्रतिपाद्यते । क्षणभङ्गवादिनस्तस्यायमभ्युपगम उत्तरस्मिन्क्षण उत्पद्यमाने पूर्वः क्षणो नश्यतीति । तथाचोत्तरोत्तरक्षणोत्पादे पूर्वपूर्वक्षणस्य हेतुत्वं न संभवति । कुतः । पूर्वनिरोधात् । पूर्वस्य नाशादित्यर्थः । नह्येवमङ्गीकुर्वता पूर्वोत्तरक्षणयोः कार्यकारणभावः संपादयितुं शक्यते । नच पूर्ववृत्तित्वमात्रं हेतुताप्रयोजकं न कार्यसहभावोऽपीति वाच्यम् । उपादानस्य मृदादेः कार्यानुस्यूतस्यैव हेतुत्वदर्शनात् । किंचोत्पादनिरोधौ वस्तुनः स्वरूपं वाऽवस्थान्तरं वा वस्त्वन्तरमेव वा । यदि तावद्वस्तुनः स्वरूपमेवोत्पादनिरोधौ स्यातां तर्हि वस्तुशब्द उत्पादनिरोधशब्दौ च पर्यायाः स्युः । अथोच्येतोत्पादनिरोधौ वस्तुन आद्यन्ताख्ये अवस्थे इति । एवमप्याद्यन्तमध्यक्षणत्रयसंबन्धित्वाद्वस्तुनः क्षणिकत्वाभ्युपगमहानिः । अथोच्येत वस्तुनः सकाशाद्भिन्नावेव ताविति । तथात्वे ताभ्यामुत्पादनिरोधाभ्यामसंसृष्टत्वाद्वस्तुनः शाश्वतत्वं स्यात् । तस्मात्सर्वथाऽपि नोपपद्यते परमते क्षणिकानां हेतुहेतुमद्भावः ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

क्षणभङ्गवादे पूर्वक्षणस्य नष्टत्वादुत्तरक्षणं प्रति हेतुत्वं न संभवतीत्युक्तम् । अथ हेतावसत्येव कार्योत्पत्तिं ब्रूयात् । तर्हि प्रतिज्ञोपरोधः प्रतिज्ञाहानिः स्यादिति शेषः । चतुर्विधान्पुञ्जीभूतान्पृथिव्यादिपरमाणून्कृत्वा बाह्यसमुदाय उत्पद्यते स्कन्धपञ्चकादान्तरसमुदाय उत्पद्यत इति प्रतिज्ञा हीयेतेत्यर्थः । यदि हेतुत्वसिद्धये कारणस्य कार्यकालावस्थायित्वमभ्युपेयेत तर्हि कार्यकारणयोर्यौगपद्यमेककालवृत्तित्वमापद्येत । तथाऽपि सर्वं क्षणिकमिति या प्रतिज्ञा तस्या हानिः स्यादेवेति भावः ॥ २१ ॥

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

वैनाशिका इत्थं कल्पयन्ति—बुद्धिबोध्यं त्रयाद्भिन्नं संस्कृतं क्षणिकं चेति । तदपि च त्रयं प्रतिसंख्याप्रतिसंख्यानिरोधावाकाशश्चेति । आकाशमग्रे दूषयिष्यति । अत्र निरोधद्वयं दूषयति—प्रतिसंख्याप्रतिसंख्यानिरोधयोः संतानसंतानिनाशयोरप्राप्तिरसंभव इत्यर्थः । कुतः । अविच्छेदात् । संतानस्येति शेषः । संतानस्य नाशो वा । संतानिनो वा । नाऽऽद्यः । तस्य नाशासंभ-

वात् । तथाहि—संतानिव्यतिरिक्तसंतानाभावेनान्त्यसंतानिनाश एव तन्नाशो वाच्यः । एवं चान्त्यस्य संतानिनोऽजनकतया ह्यसत्त्वं स्यात् । तन्मते जनकस्यैव सत्त्वेनाभ्युपगमात् । तथा चान्त्यस्य संतानस्यासत्त्वे तज्जनकस्योपान्त्यस्यापि संतानिनोऽप्यन्तासत्त्वम् । एवं तत्पूर्वस्य तत्पूर्वस्येति संतानस्यासत्त्वान्न तस्य नाशः । निरुपाख्यस्य नाशासंभवात् । अन्त्यस्य संतानिनः सत्त्वाभ्युपगमे च संतानाविच्छेदान्न नाशसंभवः । न द्वितीयः । क्षणिकमते ह्युत्पन्नमात्रस्य स्वरूप एव ध्वस्तत्वेन पुरुषव्यापारानपेक्षणात् । न हि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति । सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात् । अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानादिति भाष्यकृत आहुः । तस्मान्निरोधद्वयस्याप्यनुपपत्तिः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

योऽयमविद्यानिरोधः प्रतिसंख्यानिरोधान्तःपाती स किं निर्हेतुकः सहेतुको वा । नाऽऽद्यः । मुमुक्षूणां स्वमते शमदमादिमार्गोपदेशानर्थक्यप्रसङ्गात् । न द्वितीयः । स्वमते सर्वस्यापि निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गात् । एवमुभयथाऽपि दोषप्रसङ्गादयुक्तं वैनाशिकदर्शनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तैराकाशस्य निरुपाख्यत्वमुच्यते तदनेन निराक्रियते—आकाशे च न निरुपाख्यत्वम् । पृथिव्यादिवद्वस्तुत्वप्रतीतेरविशेषात् । शब्दलिङ्गकानुमानेन वस्तुत्वसिद्धेश्च । गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनाच्च । तस्माद्यदुक्तं सौगतेन निरोधद्वयमाकाशं चेति त्रयमप्येतन्निरुपाख्यमवस्तु नित्यं चेति विप्रतिषिद्धम् । नह्यवस्तुनो नित्यत्वमनित्यत्वं वा संभवति । वस्त्वाश्रयत्वाद्धर्मधर्मिव्यवहारस्य । तस्मात्पूर्वोक्तत्रयस्य नित्यत्वाश्रयत्वाद्वस्तुत्वमेव स्यान्न निरुपाख्यत्वम् ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

सर्वस्यापि क्षणिकत्वमभ्युपगच्छन्वैनाशिकत्वमङ्गीकुर्यात् । तदनुपपन्नम् । कुतः । अनुस्मृतेः । अनुभवानन्तरं स्मरणमनुस्मृतिः । सा क्षणिकविज्ञानसंततेरात्मत्वाभ्युपगमे न संभवति । अनुभवितुर्नष्टत्वात् । पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात् । नहि देवदत्तेनानुभूतं यज्ञदत्तः स्मरतीति लोके क्वचिदपि दृष्टम् । चकारेणाहं तदद्राक्षमिदं पश्यामीत्यादि प्रत्यभिज्ञानं समुच्चिनोति । विस्तरस्तु भाष्यादवगन्तव्यः ॥ २५ ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

वैनाशिका अभावाद्भावोत्पत्तिरिति मन्यन्ते । नष्टाद्धि बीजादङ्कुर उत्पद्यते नानष्टात् । तथा नष्टात्क्षीराद्दधि । निर्विकाराच्चेत्कारणात्कार्यमुत्पद्येत तर्हि सर्वं सर्वत उत्पद्येतेति

समर्थयन्त्यभावाद्भावोत्पत्तिम् । अत्रोच्यते—असतोऽभावाद्भावोत्पत्तिरिति वैनाशिकमतं न युक्तम् । कुतः । अदृष्टत्वात् । असतः शशविषाणादेः कारणत्वादर्शनात् । नच सहकारिविशेषसहकृतादभावादपि भावोत्पत्तिरिति वाच्यम् । सहकारिविशेषस्यैव कारणत्वप्रसङ्गात् । यत्तूक्तं स्वरूपोपमर्दमन्तरेण न कूटस्थात्कारणात्कार्योत्पत्तिरिति । तदयुक्तम् । कूटस्थादेव सुवर्णलक्षणात्कारणाद्रुचकाद्युत्पत्तिदर्शनात् । येष्वपि बीजादिषु स्वरूपोपमर्दो दृश्यते तेष्वप्यनुपमृद्यमानानां बीजाद्यवयवानामङ्कुरादिकारणत्वमभ्युपगम्यते । अन्यथा भर्जिताद्बीजादङ्कुर उत्पद्येत । प्रागभावादीनां सिद्धान्तेऽनभ्युपगमात्तस्य कारणकोटावनुप्रवेशः । विस्तरस्तु भाष्यादनुसंधेयः । अपि च चतुर्भ्यश्चित्तचैत्यलक्षण आन्तरसमुदाय उत्पद्यते । पृथिव्यादिपरमाणुभ्यः पुञ्जीभूतेभ्यो बाह्यो भूतभौतिकलक्षणसमुदाय उत्पद्यत इत्यभ्युपगम्येदानीमभावाद्भावोत्पत्तिं कल्पयन्तो वैनाशिकाः कथं नापत्रपन्ते ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ ( ४ )

यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येत तर्ह्युदासीनानामपि क्षेत्रादिकर्मस्वयतमानानां कृषीवलादिजनानां सस्यादिसमीहितसिद्धिः स्यात् । उद्योगाभावस्य सुलभत्वात् । स्वर्गापवर्गयोश्च न कश्चित्कथंचित्समीहेत । नचैतद्युज्यतेऽभ्युपगम्यते वा केनचित्तस्मान्न युज्यतेऽभावाद्भावोत्पत्तिः ॥ २७ ॥ ( ४ )

## नाभाव उपलब्धेः ॥ २८ ॥

एवं बाह्यार्थवादिनौ सौत्रान्तिकवैभाषिकौ निरस्येदानीं बाह्यार्थापलापिनं विज्ञानवादिनं बौद्धं निराकर्तुमिदं सूत्रम् । तस्मिन्किल विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपलभ्यते । बाह्यार्थमभ्युपगच्छतामपि बुद्ध्यारोहादृते प्रमाणादिव्यवहारानुदयात् । नच बाह्यार्थावगमाभावे नानाविधनामरूपजात्यादिव्यवहारानुपपत्तिः । यथा स्वप्ने बाह्यार्थाननपेक्ष्य केवलया बुध्या तत्तद्वासनावासितया तत्तद्व्यवहार उपपद्यते तथैव केवलया बुद्ध्या जाग्रद्व्यवहाराणामपि समुपपत्तेः । किंच मायामरीचिकोदकगन्धर्वनगरादिप्रत्यया विनैव बाह्यार्थान्ग्राह्यग्राहकाकारा भवन्ति । एवं जागरितगोचरा अपि प्रत्ययत्वाविशेषात् । एवं प्राप्ते ब्रूमः—बाह्यार्थानामभावो न संभवति । कुतः उपलब्धेः । घटपटादीनामुपलभ्यमानानामपह्नवानौचित्यात् । अत्र भाष्यकारैर्बाह्यार्थापलापमापाद्य समाहितम्—नचोपलभ्यमानस्यैवाभावो भवितुमर्हति । तथाहि—कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे नच तृप्यामीति । तद्वदिन्द्रियसंनिकर्षेण स्वयमुपलभमान एव बाह्यार्थं नाहमुपलभे नच सोऽस्तीति ब्रुवन्कथमुपादेयवचनः स्यात् । ननु नाहमेवं ब्रवीमि न कंचिदर्थमुपलभ इति । किंतूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि । बाढमेवं ब्रवीषि निरङ्कुशत्वात्ते तुण्डस्य ननु युक्त्युपेतं ब्रवीषि । यत

उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्य उपलब्धेरेव । नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्य चेत्युपलभते । उपलब्धिविषयत्वेनैव कुम्भस्तम्भकुड्यादीन्सर्वे लोका उपलभन्त इति । किंच । यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति बाह्यार्थं प्रत्याख्यातुकामेन तेनोक्तम् । तत्र बाह्यार्थाभावे वत्करणमनर्थक स्यात् । नहि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्मान्न बाह्यार्थापलापो युक्तः ॥ २८ ॥

ननु स्वप्नशुक्तिरजतादिज्ञानानां यथा निरालम्बनत्वं तथा जाग्रज्ज्ञानानामपि भविष्यतीत्यत आह —

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिबोधवज्जागरगोचरा अपि घटपटादिबोधा विनैव बाह्यमर्थं भवेयुः प्रत्ययत्वाविशेषादिति तदत्र निराक्रियते—स्वप्नादिबोधतुल्यत्व जाग्रद्बोधस्य नास्ति । कुतः । तयोर्वैधर्म्यात् । अस्ति वैधर्म्यं स्वप्नजागरप्रत्यययोः । किं पुनर्वैधर्म्यम् । स्वप्नादिबोधस्य बाध्यत्वमबाध्यत्व जाग्रद्बोधस्येति वैधर्म्यम् । बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य मिथ्या मयोपलब्धस्तुरङ्गम इति । एवं मायाविष्वपि । नैवं जागरोपपलब्ध वस्तु घटादिक बाध्यते । अभ्युपगम्य स्वप्नादेर्निरालम्बनत्वमेतदुक्तम् । अनिर्वचनीयालम्बनत्व तु तत्राप्यस्त्येवेति मन्तव्यमित्यन्नभट्टा आहुः । यत्त्वत्र परेणोक्तम्—' नाभाव उपलब्धेः ।' नच जगच्छून्य भवितुमर्हति । कुतः । उपलब्धेः । प्रत्यक्षेण दृश्यमानत्वादित्यर्थः । नच दृष्टस्यापि स्वप्नादिवदसत्त्वमिति वाच्यम् । स्वप्नस्यासत्त्वाभावादिति । तदसत् । बाह्यपदार्थदर्शनजनितसंस्कारेण स्वप्नो जायत इति वदता प्रत्युत स्वेनैव स्वप्नासत्त्वस्य प्रतिपादनात् । बौद्धाभिमतसिद्धेः परस्य तन्मताज्ञानाच्च ॥ २९ ॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदुक्तं परेण वासनानिमित्तकमेवेदं ज्ञानवैचित्र्यं नार्थनिमित्तकमिति तदनेन सूत्रेण निरस्यते । वासनानां भावो नोपपद्यते । कुतः । अनुपलब्धेः । त्वत्पक्षे बाह्यार्थानामनुपलब्धेः । त्वया बाह्यार्थज्ञानानभ्युपगमादित्यर्थः । बाह्यार्थज्ञानजन्याः खलु संस्कारा अर्थाभावे कथमुत्पद्येरन् । जाग्रदर्थोपलब्धिजन्यत्वात्स्वप्नजनकवासनानाम् । लोके वासनान साश्रयत्वदर्शनात् । त्वन्मते चाऽऽश्रयाभावादनादित्वमपि नोपपद्यते । तस्मान्नोपपद्यते वासनाना सभवः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमान्न तद्योग्यम् । प्रवृत्तिविज्ञानवद्वासनानामधिकरण भवितुं नार्हतीत्यर्थः । स्थिरस्वरू

स्वालयविज्ञानेऽङ्गीक्रियमाणे क्षणिकत्वसिद्धान्तहानिः स्यात् । तस्मान्न वासनासंभवः । शून्यवादनिराकरणेऽप्येतान्येव सूत्राणि योजनीयानि । तथाहि—'नाभाव उपलब्धे' । ज्ञानार्थयोरभावो नोपपद्यते । कुतः । सर्वप्रमाणैरुपलब्धेरिति प्रथमसूत्रार्थः । 'वैधर्म्याच्च न स्वप्नादिवत्' । स्वप्नवन्न जाग्रति शून्यत्वं संभवति । स्वप्ने बाध्यत्व जाग्रद्व्यवहारेऽबाध्यत्वमिति वैधर्म्यप्रतिपादनाद्दृष्टान्तासिद्धेः । स्वमते तत्राप्यनिर्वचनीयविषयस्य ज्ञानस्याभ्युपगमान्न दृष्टान्तता । 'न भावोऽनुपलब्धेः' प्रपञ्चस्यातात्त्विकत्व व्यवस्थापयता ह्यबाधितमधिष्ठान वस्तुभूत वाच्यम् । तस्य च भावः सत्ता तव मते नास्ति प्रमाणैस्तदनुपलब्धेः । त्वया सर्वशून्यत्वाङ्गीकारादित्यर्थः । क्षणिकत्वाच्चेति सूत्र उपदेशादिति पूर्णीयम् । तेन क्षणिकपदार्थसत्त्वोपदेशात्सर्वशून्यत्वोपदेशाच्च व्याहतवचन. स नाऽऽदेयवचन इत्यर्थः । इत्यन्नंभट्टैः शून्यवादपरतयेमानि सूत्राणि व्याकृतानि । भाष्यकारैस्तु शून्यवादपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नाऽऽदरः क्रियत इत्युपेक्षितः ॥ ३१ ॥

## सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥ ( ५ )

वैनाशिकत्वसामान्यात्सौत्रान्तिकवैभाषिकविज्ञानवादिशून्यत्वादिसमया सर्वथा शब्दतश्चार्थतश्चानुपपन्नत्वादयुक्ताः । तेषा नयेष्वपशब्दबाहुल्यमालयविज्ञानस्य क्षणिकत्वमभ्युपेत्य वासनाश्रयत्वाश्रयित्वे स्थायित्वप्रसङ्गादित्यभ्युपगमोऽनुपपन्नः । वासनाद्यसंबद्धप्रलापित्वदर्शनात् । अत एवोक्तं भाष्यकारैः—किं बहुना सर्वप्रकारेण यथा यथाऽयं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव न काञ्चिदप्यत्रोपपत्तिं पश्यामोऽतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहार इति । ॥ ३२ ॥ ( ५ )

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

पूर्वोक्तप्रकारेण चतुर्विधबौद्धमतानि निराकृतानीदानीं दिगम्बरमतं निरस्यते, तेनाधिकरणेन । दिगम्बरा एवाऽऽर्हताः । ते खल्वेवमाहुः—जीवोऽजीवश्चेति द्वौ पदार्थौ । तत्र जीवश्चेतनशरीरपरिमाणः सावयवः । अजीवः षड्विधः । तत्राऽऽद्यः पृथिवीगिरिसमुद्रादिः । आस्रवसंवरनिर्जरबन्धमोक्षाः पञ्च । एवमजीवपदार्थः षड्विधः । तत्राऽऽस्रवो नामेन्द्रियवर्गः । आस्रवति गच्छत्यनेन विषयाञ्जीव इति व्युत्पत्तेः । संवृणोति विवेकमिति संवरः कामक्रोधादिकारणमविवेकः । निःशेषेण जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुञ्छनतप्तशिलारोहणादिकं तपो निर्जरः । कर्माष्टकेनाऽऽपादिता जन्मपरम्परा जीवस्य बन्धः ।

कर्माष्टकं च चत्वारि घातिकर्माणि पापरूपाणि चत्वारि चाघातिकर्माणि पुण्यविशेषरूपाणीति । शास्त्रोक्तोपायेन तेभ्योऽष्टकर्मभ्यो निर्मुक्तस्य जीवस्य पञ्जरनिर्मुक्तपक्षिवत्संततोर्ध्वगमनं मोक्षः । त एते सप्त पदार्थाः सप्तभङ्गीनयेन व्यवस्थाप्यन्ते । स्यादस्ति । स्यान्नास्ति । स्यादस्ति च नास्ति च । स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च । स्यान्नास्ति चावक्तव्यश्च । स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तभङ्गीनयः । अस्यार्थः—स्याच्छब्द ईषदर्थवाची निपातः । प्रतिवादिनश्चतुर्विधाः—सद्वादिनोऽसद्वादिनः सदसद्वादिनोऽनिर्वचनीयवादिनश्चेति । अनिर्वचनीयमतेन मिश्रिताः सद्वादिनोऽसद्वादिनः सदसद्वादिनश्च पुनस्त्रिविधा इत्येवं सप्तवादिनः । तानेतान्सप्तवादिनः प्रति सप्तविधा न्यायाः क्रमेण प्रयोक्तव्याः । तद्यथा—यदा सद्वादी समागत्याऽऽर्हतं पृच्छति किं तव मते मोक्षोऽस्तीति । तत्राऽऽर्हत उत्तरं ददाति स्यादस्तीति । एवमसद्वादिन प्रति स्यान्नास्तीति । एवं यथावादिक्रममुत्तराणि ददाति । तावता वादिनः सर्वे निर्विपा( ण्णा ) नोत्तरं प्रतिपद्यन्ते । अतोऽस्य सप्तभङ्गीन्यायस्य विद्यमानत्वाज्जीवजीवास्रवादिसिद्धौ किमाश्चर्यम् । समन्वयस्यैवमार्हतमतविरोधे प्राप्ते ब्रूमः । सप्तभङ्गीनयोऽयमयुक्तः । कुतः । एकस्मिन्नसंभवात् । एकस्मिञ्जीवपदार्थे सदसद्वादिविरुद्धधर्मासंभवादित्यर्थः । एकस्य जीवस्य सद्वादिनं प्रति सद्रूपत्वमसद्वादिनं प्रत्यसद्रूपत्वं चेत्येवमादिधर्मप्रतिपादकत्वादप्रमाणं विवसनमतम् । तदुक्तं भाष्यकारैः—एकस्मिन्धर्मिणि सत्त्वासत्त्वयोर्विरुद्धधर्मयोरसंभवात् । सत्त्वे चैकस्मिन्धर्मे सत्त्वस्य धर्मान्तरस्यासंभवादसत्त्वे चैव सत्त्वस्यासंभवादसंगतमेवेदमार्हतमतमिति ॥ ३३ ॥

**एवं चाऽऽत्माकात्स्न्र्यम् ॥ ३४ ॥**

किंच स्याद्वादे यथैकस्मिन्धर्मिणि विरुद्धधर्मासंभवो दोषः प्रसक्त एवमात्मनो जीवस्याकात्स्न्र्यमपरो दोषः प्रसज्येत । कथम् । शरीरपरिमाणो जीव इत्यार्हता मन्यन्ते । तथात्वेऽकृत्स्नत्वमसर्वगतत्वं जीवस्य स्यात् । तथा घटादिवदनित्यत्वं प्रसज्जेत । किंच शरीराणामनवस्थितपरिमाणत्वान्मनुष्यशरीरपरिमाणो जीवः केनचित्कर्मणा गजशरीरं प्राप्तो न कृत्स्नं गजशरीरं व्याप्नुयात् । पिपीलिकाशरीरं प्राप्नुवन्न तच्छरीरे समीयेत । तस्माज्जीवस्य शरीरपरिमाणत्वमयुक्तम् ॥ ३४ ॥

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

नच पर्यायेणाप्यवयवोपचयापचयाभ्यां तत्तद्देहपरिमाणत्वमप्यविरोधेनोपपादयितुं शक्यते । कुतः । विकारादिभ्यः । विकारादिदोषप्रसङ्गादित्यर्थः । अवयवोपचयापचयाङ्गीकारे विक्रियावत्त्वप्रसङ्गस्ततोऽनित्यत्वप्रसङ्गस्तश्च बन्धमोक्षाभ्युपगमो बाध्येत । तस्मान्न पर्यायेणोपचयापचयाभ्युपगम आत्मन आश्रयणीयः ॥ ३५ ॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ ( ६ )**

अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैस्तद्वत्पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषोऽवयवोपचयापचयरूपविशेषाभावः प्रसज्येतेत्यर्थः । अन्त्यपरिमाणस्योत्पत्तिमत्त्वे नित्यत्वं न संभवतीति पूर्वकालेऽपि तदेवाङ्गीकर्तव्यम् । न परिमाणान्तरम् । ततश्च यच्छरीरे मोक्षस्तच्छरीरपरिमाण एव सर्वदाऽऽत्मेति निश्चयान्नावयवोपचयापचयादिना गजमशकानुगुणत्वोपपादन युक्तम् । तस्मादार्हतमतमसगतमित्युपेक्षितव्यम् ॥ ३६ ॥ ( ६ )

**पत्युरसामञ्जस्यात् ॥ ३७ ॥**

पूर्वाध्यायस्योपान्त्याधिकरणे जगतो निमित्तमुपादानं चेश्वर इति श्रुतिप्रमाणबलाद्यदुक्तं तदेतदसहमानास्तार्किकाः शैवादयः सांख्ययोगव्यपाश्रयाः प्रत्यवतिष्ठन्ते । ते खल्वेदमाहुः—प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वर इति स्वप्रक्रियानुसारेण वर्णयन्ति । तत्र माहेश्वराः प्रकृतिपुरुषेश्वरा इतरेतरविलक्षणा इति मन्यन्ते । माहेश्वराणामयमधिको विशेषः । कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षायोपदिष्टाः । अतः पशुपतिरीश्वरो निमित्तकारणमिति । अन्येऽपि केचनानन्तकल्याणगुणपूर्णः सर्वशब्दवाच्यः स्वतन्त्रो विष्णुरेव जगत्कारणमिति वदन्ति निमित्तकारणमेव नतूपादानमित्येव तेषां सिद्धान्तः । एते भाष्यानुक्ता अपि प्रसङ्गादुक्ताः । तथाचैतेषां वादिनां मतेषु यथा कुलालोऽनुपादानभूतो मृत्पिण्डदण्डचक्रादीनि साधनानि नियच्छन्कर्ता भवति तथा तटस्थ ईश्वरः सर्वसाधनानि नियच्छन्कर्ता भवतीति प्राप्ते ब्रूमः—पत्युरसामञ्जस्यादिति । पत्युरीश्वरस्य सर्वाधिष्ठातृत्वेन तटस्थकारणत्वमेव नतूपादानत्वमिति नोपपद्यते । कस्मात् । असामञ्जस्यात् । केवलनिमित्तत्वे वैषम्यनैर्घृण्यदोषद्वयस्य दुष्परिहरत्वमेवासामञ्जस्य तस्मादित्यर्थः । प्राणिकर्मापेक्षत्वाददोष इति चेन्न । कर्मेश्वरयोः प्रवर्तयितृत्वेऽन्योन्याश्रयदोषप्रसङ्गात् । कथ तर्हि त्वया परिहृतो दोष इति चेत् । प्राणिकर्मसापेक्षत्वादिति ब्रूमः । तथात्वे श्रुतयोऽस्माकं प्रमाणं त्वयाऽप्यन्ततो गत्वा श्रुतयश्चेदङ्गीक्रियन्ते तर्हि तटस्थत्वं परित्याज्यं स्यात् । 'सोऽकामयत बहु स्यां प्रजायेय' [ छा० ६ । २ । ३ ] इत्यादिश्रुतीनां ब्रह्मणो विवर्तोपादनत्वप्रतिपादिकानां विरोधात् । तस्मान्न युक्तस्तटस्थेश्वरवादः । यत्तु परेणोक्तम्—पत्युरञ्जनप्रसिद्धेश्वरस्य जगत्कारणत्वं न युक्तम् । पारतन्त्र्यादिदोषग्रस्तत्वेनासामञ्जस्यादिति तदसत् । ईश्वरद्वेषप्रयुक्तत्वेन श्रुत्यसमतत्वात् । तन्मतखण्डन तत्त्वकौस्तुभेऽनुसंधेयम् कथ तर्हि पाशुपतमतं त्वया नोपादीयत इति चेत् । साक्षाद्विष्णोः कपिलस्य बुद्धस्य च मतं यथा नोपादीयते तद्वदित्यवगच्छ ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३७ ॥

पुनरप्यसामञ्जस्यम् । नहि प्रधानपुरुषव्यतिरिक्त ईश्वरः सबन्ध विना न प्रधानपुरुषावी-शीत । न तावत्सयोगलक्षणः संबन्धः संभवति । प्रधानपुरुषेश्वराणा व्यापकत्वान्निरवय-वत्वाच्च । नापि समवायलक्षणस्तेषामयुतसिद्धत्वाभावात् । तस्मात्संबन्धाभावान्नाधिष्ठातृत्वसं-भवः । सिद्धान्ते तु तादात्म्यसबन्धस्य सत्त्वान्नानुपपत्तिः । अपिचाऽऽगमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयति न तस्य यथादृष्ट सर्वमभ्युपगन्तव्यम् । परस्य तु दृष्टान्तबलेन कारणादिस्वरूप निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति तस्मादनुपपन्नो निमि-त्तकारणेश्वरवादः ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

अधिष्ठितिरित्यधिष्ठानम् । नह्यप्रत्यक्ष रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति । कुम्भकारस्तु प्रत्यक्षानि मृदादीन्यधिष्ठाय प्रवर्तयति । तथा न सभवतीश्वरस्य । अतोऽधि-ष्ठानानुपपत्तेश्चेश्वरनिमित्तकारणवादोऽनुपपन्न. ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

ननु यथेन्द्रियादेः करणस्याप्रत्यक्षत्वेऽपि चेतनस्य जीवस्याधिष्ठेयत्वमस्ति तथा प्रधाना-देरपीश्वराधिष्ठेयत्वमस्त्विति चेन्न । कुतः । भोगादिभ्यः । भोगादिप्रसङ्गादित्यर्थः । करणग्रा-मस्याधिष्ठातृजीवभोगसाधनत्वात्तदधिष्ठेयत्वमङ्गी क्रियते । तद्वत्प्रधानादेरपीश्वराधिष्ठेयत्व ईश्वर-भोगसाधनत्वप्रसङ्गः । आदिशब्देन ससारिणामिवेश्वरस्यापि संसारधर्मा अपि प्रसज्जेरन् । सूत्रद्वयस्यापरा व्याख्या—‘ अधिष्ठानानुपपत्तेश्च ’ । लोके साधिष्ठानो हि राजा राष्ट्र-स्येश्वरो दृश्यते । साधिष्ठानः सशरीर इत्यर्थः । तथेश्वरस्यापि शरीरमङ्गीकर्तव्यम् । तच्च न संभवति । प्राक्सृष्टेः शरीरस्यासभवात् । ‘ करणवच्चेन्न भोगादिभ्यः ’ । करणानी-न्द्रियाण्यस्य सन्तीति करणवच्छरीर तदीश्वरस्य नोपपद्यते । कुतः, भोगादिभ्यः । शरीरवत्त्वे सतीश्वरस्य जीववद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्जेत ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ ( ७ )

किंच प्रधानपुरुषेश्वरा अनन्ता इत्यभ्युपगम्यन्ते पूर्वोक्तवादिभिः । तान्प्रतीदं प्रष्टव्यम् । सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता ज्ञायते न वा । आद्ये विकल्पे सर्वेषामन्त-वत्त्वादनित्यता स्यात् । अन्त्ये विकल्पे सर्वज्ञतेश्वरस्य भज्येत । तव मते कथमिति चेत् । न वय युक्त्या सर्वज्ञत्वमीश्वरस्य ब्रूमः । किं तर्हि श्रुतिप्रमाणेन ब्रूमः । ‘ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ’ [ मुण्ड० १ । ९ ] इत्यादिश्रुतय ईश्वरस्य सर्वज्ञतायां प्रमाणम् । सर्वज्ञसर्ववित्पदाभ्यां स्वस्मिन्नध्यस्तं सर्वं जानाति परं तु न तत्सर्वं मिथ्येति वेत्ती[ति] प्रकटीकृतोऽयमभिप्रायः । यद्वा सर्वं जानाति परं तु सर्वमनन्तमिति वेत्ति ।

अहमप्ययं ब्रवीमीति चेत् । तर्हि युक्तिपथं विहाय श्रौतं पन्थानमाश्रयस्व । तस्मादसंगतस्तार्किकादिपरिगृहीत ईश्वरनिमित्तकारणवादः ॥ ४१ ॥ ( ७ )

## उत्पत्त्यसंभवात् ॥ ४२ ॥

एवं केवलनिमित्तेश्वरकारणवादं प्रत्याख्यायेदानीं पाञ्चरात्रिकाणां भागवतानां मतं प्रत्याख्यायते । तत्र भागवता मन्यन्ते—भगवानेको वासुदेवो निरञ्जनो ज्ञानस्वरूपः परमार्थतत्त्वम् । स जगत उपादानं निमित्तं च । तस्माच्च वासुदेवात्संकर्षणाख्यो जीवो जायते तस्मात्प्रद्युम्नाख्यं मनो जायते तस्मादनिरुद्धाख्योऽहंकारो जायते । तदित्थं वाक्यार्थः संपद्यते—स एको वासुदेवश्चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितः । वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेणेति । तेषां वासुदेवः परा प्रकृतिः । इतरे संकर्षणादयः कार्यरूपा इति । अत्रेद भाष्यम्—योऽसौ नारायणोऽव्यक्तात्परः प्रसिद्धः परमात्मा सर्वात्मा स आत्मानमनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते । ' स एकधा भवति त्रिधा भवति ' [ छा० ७ । २६ । २ ] इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते । श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इत्यत्र ब्रूमः—न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवत्यनित्यत्वादिदोषप्रसङ्गात् । उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्निति । तथात्वेऽनित्यत्वप्रसङ्गेन भगवत्प्राप्तिलक्षणो मोक्षो न स्यात् । किंच कृतनाशाकृताभ्यागमः प्रसज्येत । पूर्वसृष्टौ यो जीवस्तस्मिन्नुत्पत्तिमत्त्वेन प्रलयदशाया विनष्टे सति तत्कृतयोर्धर्माधर्मयोरफलप्रदत्वेन विनाशः प्रसज्येत । अस्मिन्कल्प उत्पद्यमानस्य नूतनजीवस्य धर्माधर्मयोः पूर्वमननुष्ठितयोः सतोरिह सुखदुःखप्राप्तिर्भवतीत्यकृताभ्यागमः प्रसज्येत । प्रतिषेधयिष्यति च बादरायणाचार्यो जीवस्योत्पत्तिं ' नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ' [ ब्र० सू० २ । ३ । १७ ] इति । एतामेवानुपपत्तिमाशङ्क्यार्धपाञ्चरात्रिकैर्वासुदेवादयश्चत्वारो हरेरवतारा अन्यूनाधिकगुणा इति प्रतिपादितं तदपि वासुदेवो जगत उपादानं निमित्तकारणं चेति प्रतिपादकपञ्चरात्रस्मृतिविरुद्धम् । अत एव ते धर्माः पाञ्चरात्रिका उच्यन्ते यथार्धवैनाशिकास्तद्वत् ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

किंच कर्तुर्जीवात्करणमुत्पन्नमिति यदुक्तं तन्नोपपद्यते । देवदत्तादेः कर्तुः परश्वादिकरणस्योत्पत्त्यदर्शनात् । नचास्मिन्नर्थे श्रुतिरस्ति यद्वासुदेवात्संकर्षणो जीव उत्पन्नस्तस्मात्प्रद्युम्नाख्यं मन उत्पन्नं तस्मादनिरुद्धाख्योऽहंकार उत्पन्न इत्यभिधात्री ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

यद्येतद्दोषपरिहाराय संकर्षणादयः सर्वेऽपीश्वरा एव विज्ञानैश्वर्यबलशालिनोऽभ्युपगम्यन्ते तथाऽपि तदप्रतिषेधः । उत्पत्त्यसंभवदोषस्यापरिहारः प्रकारान्तरेण स एव दोषोऽत्रापि लगतीत्यर्थः । तथाहि—यदि परस्परभिन्ना एवैते वासुदेवादयस्तुल्यधर्माणोऽङ्गी क्रियेरंस्तदाऽनेकेश्वरकल्पनानर्थक्यमेकेनैवेश्वरेण कार्यसिद्धेः । अथोच्येतैकस्य भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति । तथाऽप्युत्पत्त्यसंभवो दोषस्तदवस्थ एव । नहि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति । एवं प्रद्युम्नानिरुद्धयोरपि । अन्योन्यातिशयाभावात् । मृद्घटादेरन्योन्यातिशयवत एव कार्यकारणभावदर्शनात् । वासुदेवादिषु तारतम्यस्य तैरनङ्गीकारात् । अङ्गीकारे तु प्रागुक्त उत्पत्त्यसभव इत्यभिप्रायः । अत्र भाष्यकारा आहुः—नचैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन् । ब्रह्मादेः स्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमादिति ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥ (८)

भागवतैर्ज्ञानादीनामात्मगुणत्वं क्वचिदुक्तं क्वचिच्च ज्ञानैश्वर्यशक्तिबलवीर्यतेजांस्यात्मन एव गुणा भगवतो वासुदेवस्येति ज्ञानाद्यात्मकत्वमुक्तमित्येको विप्रतिषेधो वेदविप्रतिषेधश्च । चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्माच्छ्रुतिविरोधस्य स्वयमेवाङ्गीकृतत्वादिदमसंगतं पञ्चरात्रम् ।

## इति द्वितीयाध्यायस्य द्वितीयः पादः ।

---

## अथ तृतीयः पादः ।

---

इतः परं पादद्वयेन नानाशाखागतोत्पत्तिवाक्यानां ब्रह्मोपादनत्वसमन्वयस्य च विरोधः परिह्रियते । तथा च भाष्यम्—सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्योत्पत्तिरस्त्युत नेतीति ।

## न वियदश्रुतेः ॥ १ ॥

आकाशं नोत्पद्यते । कुतः । अश्रुतेः । उत्पत्तिप्रकरणेऽस्योत्पत्तिर्न श्रूयते तस्मादित्यर्थः । छान्दोग्ये हि—' सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् ' [ छा० ६ । २ । १ ] इति सच्छब्दवाच्य ब्रह्म प्रकृत्य ' तदैक्षत ' ' तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] इति च पञ्चानां भूतानां मध्यमं तेज आदिकृत्वा त्रयाणां तेजोबन्नानामेवोत्पत्तिः श्रूयते ।

श्रुतिश्च नः प्रमाणमतीन्द्रियार्थज्ञानोत्पत्तौ । नचात्र श्रुतिरस्त्याकाशोत्पत्तिप्रतिपादिनी । तस्मान्नास्त्याकाशस्योत्पत्तिरिति शङ्कासूत्रम् ॥ १ ॥

पुनरपि शङ्कासूत्रम्—

**अस्ति तु ॥ २ ॥**

तुशब्दः पक्षान्तरपरिग्रहे । छान्दोग्य आकाशोत्पत्त्यश्रवणेऽपि तैत्तिरीयके 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ । १ ] इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' [ तै० २ । १ । १ ] इति तदुत्पत्तिश्रुतिरस्तीत्यर्थः । ततश्च श्रुत्योर्विप्रतिषेधः । क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति । अतः क्वचित्तेजसः साक्षाद्ब्रह्मोपादानकत्वं श्रूयते 'तत्तेजोऽसृजत' [ छा० ६ । २ । ३ ] इति क्वचिदाकाशस्येति । तत्र प्रथमं छान्दोग्ये तेजस उत्पत्तिरवगम्यते । तैत्तिरीयके चाऽऽकाशस्य । नचोभयोः प्रथमजत्वं संभवति । एवं श्रुत्योः परस्परविरोधादप्रामाण्यम् । एवमुत्तरत्र विरोधादप्रामाण्यमुन्नेयमिति ॥ २ ॥

अस्मिञ्श्रुतिविरोधे कश्चिदाह—

**गौण्यसंभवात् ॥ ३ ॥**

नास्त्याकाशस्योत्पत्तिः । अश्रुतेरेव । 'आत्मन आकाशः संभूतः' [ तै० २ । १ । १ ] इति वियदुत्पत्तिवादिनी श्रुतिर्गौणी भवितुमर्हति । कुतः । असंभवात् । आकाशोत्पादकस्य समवाय्यसमवायिनिमित्ताख्यकारणत्रयस्य दुःसंपादत्वादित्यर्थः । न ह्यस्ति काणभुजे मते कारणत्रयादृते कार्यद्रव्योत्पत्तिरिति । किंचोत्पत्तिमतां च पृथिव्यादीना कार्याणां पूर्वोत्तरकालयोर्विशेषः संभाव्यते । पूर्वं मृत्पिण्डोऽभूदिदानी घट इत्यादिः । आकाशस्य तु न पूर्वोत्तरकालयोर्विशेषः संभाव्यते पूर्वमनवकाशमच्छिद्रं बभूवेदानी सच्छिद्रं सावकाशमिति । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' [ तै० २ । १ । १ ] इति जनिश्रुतिर्घटाकाशो मठाकाश इतिवद्गौणी द्रष्टव्या ॥ ३ ॥

**शब्दाच्च ॥ ४ ॥**

शब्दादपि वियन्नोत्पद्यते । 'वायुश्चान्तरिक्ष[1] चैतदमृतम् । [ बृ० २ । ३ । ३ ] 'आकाशवत्सर्वगतश्च नित्यः' । इत्याकाशेन ब्रह्मोपमिमानः शब्द आकाशस्य नित्यत्वं सर्वगतत्वं चास्तीति सूचयति । तस्मान्नित्यमेवाऽऽकाशम् ॥ ४ ॥

नन्वेकस्य संभूतशब्दस्याऽऽकाशे गौणत्वं तेजःप्रभृतिषु मुख्यत्वमित्येतद्विरुद्धमत आकाशः संभूत इत्यत्रापि मुख्यत्वमेवेत्याशङ्क्याऽऽह—

---

१ लिखितपुस्तके 'क्षं चामृ' ।

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥**

एकस्यापि संभूतशब्दस्य विषयभेदाद्गौणत्वं मुख्यत्वं च स्याद्ब्रह्मशब्दवत् । यथा 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' [ तै० ३ । २ ] इत्यस्मिन्नधिकारेऽन्नादिषु ब्रह्मशब्दो गौण आनन्दे मुख्यस्तथाऽत्रापीति । न चैवमद्वैतश्रुतिव्याकोप इति वाच्यम् । स्वकार्यापेक्षया तदुपपत्तेः । तदाहुर्भाष्यकृतः—नच नभसाऽपि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वम् । न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति । क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्तत्वादिधर्मसामान्यात् । सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति । तेनान्यत्वमवसीयत इत्यादि । तस्माद्वाक्त नभसः संभवश्रवणमिति ॥ ५ ॥

इमामाकाशनित्यत्ववादिनीं पञ्चसूत्रीमेकदेशिमतेन प्रवृत्तां दूषयति—

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' [ छा० ६ । १ । ३ ] इति । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' [ मु० १ । १ । ३ ] इति । 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' [ बृ० ४ । ५ । ६ ] इत्येवरूपा प्रतिज्ञा प्रतिवेदान्तं जागर्ति । तस्याः प्रतिज्ञाया अहानिस्तर्हि स्याद्यदि कृत्स्नस्य जगतो ब्रह्मणः सकाशादव्यतिरेकः स्यात् । व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीय प्रतिज्ञा हीयेत । स चाव्यतिरेको व्योमादेर्ब्रह्मकार्यत्वे मृद्घटन्यायेनोपपादयितुं सुशको नान्यथा । शब्देभ्यश्च प्रतिज्ञासिद्धिरवगम्यते । ते च शब्दाः 'ऐतदात्म्यमिदं सर्वम्' [ छा० ६ । ८ । ७ ] 'सर्वं खल्विदं ब्रह्म' [ छा० ३ । १४ । १ ] 'ब्रह्मैवेदममृत पुरस्तात्' [ मु० २ । २ । ११ ] इत्यादयः । कार्यकारणयोर्भेदे प्रयोगश्च । आकाशो जायते विभक्तत्वाद्घटवत् । नचासिद्धो हेतुः । वाय्वादिवैलक्षण्यस्याऽऽकाशे प्रसिद्धत्वात् । नापि ब्रह्मण्यनैकान्तिकत्वम् । सर्वात्मकस्य ब्रह्मणः कस्माच्चिद्विभक्तत्वेन दुर्भणत्वात् । तेन जनिश्रुतिरनुगृहीता च भवति । यदुक्तमश्रुतेर्न वियदुत्पद्यत इति तदयुक्तम् । वियदुत्पत्तिविषयश्रुत्यन्तरदर्शनादजनिश्रुतीनां वियदुपादानब्रह्मपरत्वात् । नाप्याकाशतेजसोः प्राथम्यप्रतिपादकश्रुत्योर्विरोधः । छान्दोग्यवाक्ये तैत्तिरीयके श्रुताकाशोत्पत्तेरुपसंहारात्—आकाशं वायुं च सृष्ट्वा तेजोऽसृजतेति । यत्तु कारणत्रितयासंभव इत्युक्त तदसत् । आरम्भवादे त्रितयापेक्षायामपि विवर्तवादे तदनपेक्षत्वात् । न चैकाद्वितीयश्रुतिकोपो भवति । क्षीरोदकवद्ब्रह्मनभसोर्व्यतिरेकोपपात्तेः (?) । 'आकाशः संभूतः' [ तै० २ । १ ] 'सर्वं खल्विदं ब्रह्म तज्जलानिति' [ छा० ६ । १४ । १ ] इत्यादिश्रुतिविरोधप्रसङ्गात् । तदुक्तं भाष्यकृद्भिः—तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं

सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्तमिति द्रष्टव्यमिति । यदुक्तं विभुत्वादाकाशं नित्यमिति । तदसत् । 'पादोऽस्य विश्वा भूतानि' [ छा० ३ । १२ । ६ ] इति श्रुतेः । तस्मादेतेभ्यो हेतुभ्यो ब्रह्मणः कारणादाकाशमुत्पद्यते—

यदुक्तं गौण्यसंभवादिति तन्निराकरोति—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥ ( १ )

तुशब्दोऽसंभवाशङ्कानिवृत्त्यर्थः । यावद्विकारं विकारमभिव्याप्य विभागो वर्तत इत्यर्थः । लोकवदिति दृष्टान्तः । लोक्यत इति लोको घटादिस्तद्वत् । तथाचायमर्थः—आकाशोत्पत्तावसंभवाशङ्का न कार्या । यतो यावत्किंचिद्विकारजातं दृश्यते घटशरावादि वा कटककेयूरकुण्डलादि वा तावानेव विभागो लोके लक्ष्यते न त्वविकृतं मृदादि वा सुवर्णादि वा विभक्तं लक्ष्यते । विभागश्चाऽऽकाशस्य पृथिव्यादिभ्योऽवगम्यते तस्मात्सोऽपि विकारो युक्तः । एतेन तार्किकाणां नित्यत्वेनाभिमतानामात्मभिन्नाना कार्यत्व व्याख्यातम् । नन्वात्माऽपि व्योमादिभ्यो भिन्न इति सोऽपि घटादिवत्कार्यत्व किमिति नाऽऽप्नुयादिति चेन्न । 'आत्मन आकाश सभूतः' [ तै० २ । १ ] इति श्रुतिवत्तदुत्पत्तिश्रुतेरभावात् । किंचाऽऽत्मनोऽपि कार्यत्वेऽनवस्था स्यात् । ततश्च शून्यवादः प्रसज्येत । अत एव 'आत्मा वा इदमेक एवाग्र आसीत्' [ तै० १ । १ ] इत्याद्याः श्रुतयो विकारजातात्प्रागात्मसत्त्वमाहुः । विस्तरस्तु भाष्ये द्रष्टव्यः । 'न वियदश्रुतेः' [ ब्र० सू० २ । ३ । १ ] इत्यादिसूत्रपञ्चकेनाऽऽकाशादीनामुत्पत्तिमत्त्वमनुत्पत्तिमत्त्व चास्तीत्यत्र भाल्लवेयश्रुतिः प्रमाणत्वेनोक्ता केनचिदर्धपाञ्चरात्रिकेण तन्नाऽऽदरणीयम् । तत्खण्डन तत्त्वकौस्तुभे द्रष्टव्यम् ॥ ७ ॥ ( १ )

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ( २ )

अतिदेशोऽयमेतेनेति । वियद्व्याख्यानेन मातरिश्वाऽपि व्याख्यातः । अत्रापि संशयपूर्वपक्षसिद्धान्ताः पूर्ववद्योजनीयाः । वायुर्नित्यो वा न वेति सशयः । तत्र नित्य इति तावत्प्राप्तम् । कुतः । बृहदारण्यके—'सैषाऽनस्तमिता देवता यद्वायुः' [ बृ० १ । ५ । १ ] इति वायोर्विनाशप्रतिषेधात् । उत्पत्तिमत्त्वे च तदयोगात् । नच तैत्तिरीये 'आकाशाद्वायुः' [ तै० २ । १ ] इति तदुत्पत्तिः श्रूयते तत्कथ नित्यत्व वायोरिति वाच्यम् । तस्या उत्पत्तेर्गौणत्वात् । अत एव च्छान्दोग्ये सृष्टिप्रकरणे तेजोबन्नानामेवोत्पत्तिरभिहिता । तस्माद्वायुर्नोपपद्यत इति पूर्वः पक्षः । अत्रोच्यते—छान्दोग्ये वायुजन्माश्रवणेऽपि गुणोपसंहारन्यायेन तैत्तिरीयवाक्यस्येतरत्रोपसंहारे सति च्छान्दोग्ये वायुजन्माभ्युपेयम् । न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयतीति न्यायात् । बृहदारण्यके सैषेति वाक्यमग्न्यपेक्षयाऽधिककालावस्थायित्वपरं न त्वनुत्पत्तिपरम् । यद्वाऽनस्तमितश्रुतिस्तु न मुख्या ।

उपासनाप्रकरणे पठितत्वेन स्तुत्यर्थत्वात् । नच वायोराकाशकार्यत्वेन ब्रह्मण्यनन्तर्भावाद्ब्रह्मज्ञानेन वायुज्ञानं न सिध्येदिति शङ्कनीयम् । पूर्वपूर्वकार्यविशिष्टस्य ब्रह्मण उत्तरोत्तरकार्यहेतुत्वश्रवणाद्वियद्रूपापन्नस्यैव तस्य वायुकार्यत्वात् । तस्माद्वायुरुत्पद्यते ॥ ८ ॥ ( २ )

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ ( ३ )

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य स्यात्कस्यचिदेवं मतिर्ब्रह्मणोऽपि कुतश्चित्कारणादुत्पत्तिः स्यादिति तामाशङ्कामपनेतुमिदं सूत्रम् । छान्दोग्ये ' सदेव सौम्येदमग्र आसीत् ' [ छा० ६ । २ । १ ] इति श्रूयते । तत्सद्रूप ब्रह्म जन्मवद्भवितुमर्हति कारणत्वादाकाशादिवत् । इति प्राप्ते ब्रूमः । सद्रूप ब्रह्म न जायते । कुतः । तज्जनकस्य कारणस्यानुपपत्ते. । दुर्निरूपत्वादित्यर्थः । तथा हि न तावदसत्कारणं भवितुमर्हति । ' कथमसतः सज्जायेत ' [ छा० ६ । २ । २ ] इति निषेधश्रवणात् । नापि सदेव सतः कारणम् । आत्माश्रयापत्तेः । नापि वियदादिक सतः कारणम् । वियदादीना ततः सतो जायमानत्वात् । या तु व्याप्तिर्यद्यत्कारणं तत्तज्जायत इति सा ' स वा एष महानज आत्मा ' [ बृ० ४ । ४ । २२ ] ' स कारण करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः [ श्वे० ६ । ९ ] इत्यादिश्रुतिभिर्बाध्यते । तस्माद्ब्रह्म न जायते ॥ ९ ॥ ( ३ )

## तेजोऽतस्तथा ह्याह ॥ १० ॥ ( ४ )

छान्दोग्ये ' तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] इति तेजसो ब्रह्मोपादानकत्वं श्रूयते । तैत्तिरीयके ' वायोरग्नि ' [ तै० २ । १ ] इतिवायूपादानकत्वम् । तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां किं तावत्प्राप्तम् । ब्रह्मोपादानकमेव तेज इति । कुतः । सदेवेत्युपक्रम्य ' तत्तेजोऽसृजत ' इत्युपदेशात् । सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्याविशेषेण ' तज्जलान् ' [ छा० । ३ १४ । १ ] इति ब्रह्मप्रभवत्वश्रुतेश्चैकवाक्याच्च । तस्माद्ब्रह्मजं तेज इति प्राप्ते ब्रूमः । तेजो वायोर्जायते । कुतः । तथा ह्याह— तैत्तिरीयके ' वायोरग्निः ' इति श्रुतेः । नाऽऽनन्तर्यपदापेक्षेयं पञ्चमी कि तु ' जनिकर्तुः प्रकृतिः ' [ पा० सू० १ । ४ । ३० ] इत्यपादानपञ्चम्येव । ' उपपदविभक्तेः कारकविभक्तिर्बलीयसी ' इति वचनात् । नच साक्षाद्ब्रह्मजन्यत्वाभावे सर्वविज्ञानप्रतिज्ञाविरोधः । वायुभावापन्नब्रह्मजन्यत्वेऽपि तस्य ब्रह्मण उपादानत्वानपायात् । तदुक्तं भाष्यकृद्भिः—प्रतिज्ञाऽपि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहितजन्यत्वमित्यविरोध इति ॥ १० ॥ ( ४ )

## आपः ॥ ११ ॥ ( ५ )

छान्दोग्ये—' तदपोऽसृजत ' [ छा० ६ । २ । ३ ] इति । तैत्तिरीयके—' अग्नेरापः ' [ तै०२ । १ ] इत्युभयश्रुत्योर्यद्यपि तेजसोऽपां जन्म श्रूयते तथाऽपि तदयुक्तम् ।

निवर्त्यनिवर्तकयोरग्निजलयोर्विरुद्धयोर्हेतुहेतुमद्भावो न युक्त इति प्राप्तेऽभिधीयते । 'अतस्तथा ह्याह' इति पूर्वसूत्रादनुवर्तते । अतस्तेजस आपो जायन्ते । कुतः । तथाह्याह 'तदपोऽसृजत' । 'अग्नेरापः' इति च । तथा श्रुतिद्वयमाहेत्यर्थः । उक्ताविरोधस्तु पञ्चीकृतयोरेव नापञ्चीकृतयोः । सतापाधिक्ये स्वेदवृष्ट्युद्भवदर्शनाच्च तेजस आप उत्पद्यन्ते तथा च श्रुतिद्वयानुसारेण तेजोरूपापन्नाद्ब्रह्मणोऽपां जनिरिति न सर्वविज्ञानप्रतिज्ञाभङ्गः ॥ ११ ॥ ( ५ )

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ( ६ )

छान्दोग्ये श्रूयते—'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' [ छा० ६ । २ । ४ ] इति । तत्रान्नशब्देन पृथिव्युत्पद्यते किंवा व्रीहियवादिकमिति संशये सति किं तावत्प्राप्तम् । अन्नशब्देन व्रीहियवादिकमुच्यत इति । कुतः । तत्रैवान्नशब्दस्य लोके प्रसिद्धेरिति प्राप्ते ब्रूमः । पृथिव्यत्रान्नशब्दार्थो विवक्षितः । कुतः । अधिकाराद्रूपाच्छब्दान्तराच्च । अधिकारस्तावत् । 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति च महाभूतविषयो वर्तते । तत्र क्रमप्राप्तं महाभूतं पृथिवीमुलङ्घ्याकस्मान्न व्रीह्यादिपरिग्रहो न्याय्यः । रूपमपि 'यदग्ने रोहितं रूप तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' [ छा० ६ । ४ । १ ] इति श्रुतम् । कृष्णमेव रूप पृथिव्या बहुलमुपलभ्यते न व्रीह्यादौ । शब्दान्तरमपि समानाधिकारे तैत्तिरीयके—'अद्भ्यः पृथिवी' इति महाभूतस्यैवाद्भ्य उत्पत्तिः श्रूयते । तत्रैव पृथिव्यास्तु व्रीह्याद्युत्पत्तिर्दृश्यते । 'पृथिव्या ओषधय ओषधीभ्योऽन्नम्' [ तै० २ । १ ] इति । या प्रसिद्धिरुक्ता साऽधिकारादिहेतुभिर्बाध्यते । किंच कार्यकारणयोरन्नपृथिव्योरभेदविवक्षया तदुपपत्तिः । तस्मादन्नं पृथिवीति संबन्धः ॥ १२ ॥ ( ६ )

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ ( ७ )

किं वियदादीनि महाभूतानि स्वयमेव स्वविकारान्सृजन्त्याहोस्विदीश्वराधिष्ठितानीति विशये सति स्वयमेव सृजन्तीति तावत्प्राप्तम् । कुतः । 'आकाशाद्वायुर्वायोरग्निः' [ तै० २ । १ ] इत्यादिस्वातन्त्र्यश्रवणात् । नचाचेतनानां स्वतन्त्राणा प्रवृत्त्यनुपपत्तिः । 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' [ छा० ६ । २ । ३, ४ ] इति च भूतानामपि चेतनत्वश्रवणादित्येवं प्राप्ते ब्रूमः । तुशब्दः पूर्वपक्षनिरासार्थः । स एवेश्वरस्तत्रतत्रावतिष्ठमानोऽन्तर्यामी तं तं विकारं सृजति । कुतः । तल्लिङ्गात् । तथा च श्रुतिः—'यः पृथिव्यां तिष्ठन्० पृथिवीमन्तरो यमयति' [ बृ० ३ । ७ । ३ ] इत्याद्यन्तर्यामिब्राह्मणं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा श्रुत्यन्तरमपि—'सोऽकामयत बहु स्यां प्रजायेय' [ तै० २ । ६ । १ ] इति प्रकृत्य 'सच्च त्यच्चाभवत्' इति 'तदात्मानं

स्वयमकुरुत ' [ तै० २ । ६ । १, २ । ७ । १ ] इति च सत्यै ( तस्यै )व सर्वात्मभावं दर्शयति । यत्त्वीक्षणश्रवणमतेजसोः श्रुतं तत्परमेश्वरावेशत एव न स्वतः ॥ १३ ॥ ( ७ )

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ ( ८ )**

भूतानामुत्पत्तिक्रमश्चिन्तितः । इदानीं लयक्रमश्चिन्त्यते । उत्पत्तिक्रमेणैव लय इति शङ्का-निरासार्थस्तुशब्दः । ' यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्र-यन्त्यभिसंविशन्ति ' [ तै० ३ । १ । १ ] इति भूतानामुत्पत्तिस्थितिप्रलया ब्रह्मा-यत्ता इति श्रूयन्ते । तत्रोत्पत्तौ ' आत्मन आकाशः संभूतः ' [ तै० २ । १ ] इत्यादिश्रुत्युक्तः क्रमोऽस्तु । प्रलयस्तु क्रमं विनाऽस्तु तस्याश्रुतत्वात् । यद्वोत्पत्तिक्रमस्य श्रुतत्वात्प्रलयस्यापि क्रममभिकाङ्क्षतः स एव स्यादिति प्राप्तेऽभिधीयते । उत्पत्तिक्रमा-द्विपर्ययेण प्रलयक्रमतो( मो ) ब्रह्मणः सकाशाद्भवितुमर्हति । तथा हि लोके येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति दर्शनात् । अपि च दृश्यते मृदो जातं घटकरकादिकं प्रलयकाले मृद्भावमप्येति । एवमद्भ्यो जातं हिमकरकादिकमब्भावमप्ये-तीति । अन्यथा प्रथमतः कारणे लीने सति निरुपादनानां कार्याणामवस्थानं प्रसज्येत । स्मृतावप्युत्पत्तिक्रमविपर्ययेणाप्ययक्रम उक्तः—

' जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।

ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते । [म० भार० १२।३४१।२९] इति ।

कारणाप्यये कार्यस्यावस्थानं न युक्तम् । कार्याप्यये तु कारणावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वादिति भाष्यम् । उत्पत्तिक्रमस्तु श्रुतावुक्तः । अप्ययस्तु श्रुतावनुक्तोऽपि स्मृतियुक्ति-भ्यामनुसंधेय इति चशब्देन सूचयति । अत्र काश्चिदाह—' तदभिध्यानादेव तु तल्लि-ङ्गात्सः । ' ] ब्र० २ । ३ । १३ ] स विष्णुः संहर्ता । कुतः । तदभिध्यानरूपा-लिङ्गात् । ' तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ' [ श्वे० १ । १० ] इति हि श्रूयते । ततश्च संसारमोक्षस्य भगवदभिध्यानाधीनत्वेन तत्कर्तृत्वं लभ्यते । तथाचानादिभवभेत्तुर्विश्वसंहारसामर्थ्यमर्थसिद्धमित्याशयः । विपर्ययेण तु क्रमोऽत उपपद्यते च । प्रकृतानि भूतानि किमुत्पत्तिक्रमेण लीयन्ते व्युत्क्रमेणेति संशयः । ' अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते ' इति भाल्लवेयश्रुतौ क्रमप्रतीतेः ।

' अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् ।

व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि ' ॥

इति चतुर्वेदशिखायां व्युत्क्रमप्रतीतेश्च । तत्र क्रमेण लय इति प्राप्तम् । लोके प्राये-णोत्पत्तिक्रमेण लयदर्शनात् । सिद्धान्तमाह— विपर्ययेणेति । व्युत्क्रमेऽपि क्रमशब्दोपपत्ते-रित्यर्थः । तथा च श्रुत्यन्तरम्—

' द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा ।
सृष्टौ चान्यो लये चान्य इति वेदविदो विदुः ' ॥

तस्माच्छ्रुत्यविरोधेन भाल्लवेयसिद्धेर्युक्तो लये व्युत्क्रम इति तदसत् । ' तस्याभिध्यानात् ' [ श्वे० १ । १० ] इत्यस्याः श्रुतेः सपत्स्यमानस्य ध्यानसंप्रज्ञातासंप्रज्ञातसमाधिभिर्ब्रह्मैक्यप्रतिपादनपरत्वात् ।

' मिथ्या जीवब्रह्मभिदा सर्वं मिथ्या चराचरम् ।
दृश्यत्वाद्बाधितत्वाच्च भ्रमोऽयं रज्जुसर्पवत् ' ॥

इत्यादिभाल्लवेयाद्यनेकश्रुतिवचनानां त्वयाऽनभ्युपगमान्मयाऽपि त्वत्पठितश्रुतीनामनङ्गीकारात् । इदं प्रमाणजातं त्वत्कल्पितमिति चेत् । भाल्लवेयादिश्रुतिभिः सिद्धान्त कुर्वतस्तवापीदं दूषणमपरिहार्यमिति दिक् ।

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ (९)

भूतानामुत्पत्तिप्रलयौ क्रमव्युत्क्रमाभ्यां भवत इति निरूपितम् । आत्मादिरुत्पत्तिः प्रलयश्चाऽऽत्मावधिरिति चोक्तम् । अथेदानीं बुद्धिमनसोरुत्पत्तिश्चिन्त्यते । विज्ञानमनसी अन्तरा कस्मिंश्चिदन्तराले क्रमेणोत्पद्येते चक्षुरादिबाह्येन्द्रियैः सहेति वक्तव्यम् । कुतः । तल्लिङ्गात् ।

' बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ' ॥ [ क० ३ । ३ ]

इति श्रुतौ तयोः सेन्द्रिययोर्विज्ञानमनसोः क्वचिदुत्पत्तेर्वक्तव्यत्वात् । यद्वा मुण्डके—

' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ' ॥ [ मु० २।१।३ ] इति ।

अत्र प्राणादीनां वियदादिभ्यः पूर्वं श्रूयमाणत्वादाकाशादिकः पूर्वोक्तसृष्टिक्रमो भज्येतेति प्राप्तेऽभिधीयते । नाय दोषः । ' अन्नमय हि सौम्य मन आपोमयः प्राणस्तेजोमयी वाक् ' [ छा० ६ । ५ ।४ ] इति प्राणादीनां भौतिकत्वश्रवणाद्भूतेष्वन्तर्भावेन पृथक्क्रमो नापेक्षितः । नच मुण्डकश्रुतिः क्रमवाचिनी । ' आकाशाद्वायुर्वायोरग्निः ' [ तै० २ । १ । १ ] इत्यादाविव क्रमस्याप्रतीयमानत्वात् । केवलमुत्पत्तिमात्रं श्रूयते । तस्मान्नानया श्रुत्या पूर्वोक्तक्रमभङ्गोऽस्ति । तदुक्तं भाष्ये—यदि तावद्भौतिकानि करणानि ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति न तयोः क्रमान्तरं मृग्यमिति ॥ १५ ॥ ( ९ )

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त-स्तद्भावभावित्वात् ॥ १६ ॥ ( १० )**

जीवस्याप्युत्पत्तिप्रलयौ स्यातां जातो देवदत्तो मृतो देवदत्त इति व्यवहाराच्छास्त्रे जातकर्मादिसंस्कारोक्तेश्चेति शङ्कायां प्राप्तायामिदमधिकरणम् । तुशब्दः शङ्कानिरासार्थः । चराचरव्यपाश्रयः स्थावरजङ्गमशरीरविषयो जन्ममरणव्यपदेशो मुख्यः । स तु जीवे भाक्तः स्यात् । कुतः । तद्भावभावित्वात् । तस्य शरीरस्य जन्ममरणयोर्भावे सति शरीरयोगेण ते उभे जीवे उपचर्येते इत्यर्थः । तदुक्तं भाष्ये—न हि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिदुपलक्ष्यत इति । जातकर्मादिविधानमपि देहनिमित्तकमेव द्रष्टव्यम् । जीवस्य मुख्यजन्ममरणाङ्गीकारे कृतनाशाकृताभ्यागमौ प्रसज्जेयाताम् । तस्माज्जीवस्योत्पत्तिमरणे भाक्ते इति सिद्धम् ॥ १६ ॥ ( १० )

**नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ( ११ )**

योऽयं जीवाख्य आत्मा शरीरेन्द्रियसंघाताध्यक्षः सुखदुःखादिभोक्ता स किं व्योमादिव-द्ब्रह्मण उत्पद्यतेऽथ वा ब्रह्मवदेव नोत्पद्यत इति विशये पूर्वपक्षस्तावदित्थं प्राप्तः । तथाहि ‘ यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति ’ [ बृ० माध्य० २ । १ । २३ ] ‘ यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ’ । [ मुण्ड० २ । १ । १ ] इत्या-दिश्रुतयो जीवात्मनामुत्पत्तिप्रलयौ प्रतिपादयन्ति । तथात्व एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपरुध्येत । जीवस्य ब्रह्मवत्तत्वान्तरत्वे तु प्रतिज्ञोपरुध्येत । तस्मादुत्पद्यन्ते जीवा इति प्राप्तेऽभिधीयते । जीवात्मा नोत्पद्यते । कुतः । अश्रुतेः । क्वचिदप्युत्पत्तिप्रकरणे जीवोत्पत्ते-रश्रवणात् । ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीति चेत् । सत्यम् । ‘ यथाऽग्नेर्विस्फु-लिङ्गाः ’ इत्यादौ जीवोत्पत्तेरसंभव इति ब्रूमः । कस्मात् । नित्यत्वाच्च ताभ्यः । चशब्दा-दजत्वादिभ्यश्च । ताश्च श्रुतयः ‘ स वा एष महानज आत्माऽजरोऽभयोऽमृतो ब्रह्म । ’ [ बृ० ४ । ४ । २५ ] ‘ न जायते म्रियते वा विपश्चित् । ’ [ क० २ । १८ ] ‘ तत्सृष्ट्वा तदेवानुप्राविशत् ’ [ तै० २ । ६ । १ ] ‘ हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । ’ [ छा० ६ । ३ । २ ] ‘ स एष इह प्रविष्ट आ नखाग्रेभ्यः । ’ [ बृ० १ । ४ । ७ ] ‘ तत्त्वमसि । ’ [ छा० ६ । ८ । ७ ] ‘ अहं ब्रह्मास्मि । ’ [ बृ० १ । ४ । १० ] ‘ अयमात्मा ब्रह्म सर्वानुभूः ’ [ बृ० २ । ५ । १९ ] इत्येवमाद्या नित्यत्ववादिन्यः प्रतिपादयन्ति जीवस्य नित्यत्वम् । अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकजन्माभिप्रायात्प्रवृत्ता । अन्यथा कृतनाशादिदोषः प्रसज्येत ।

औपाधिक एव जीवब्रह्मणोर्भेदो न वास्तव इति प्रोद्घुष्टमुपनिषत्सु । तस्मान्नैवात्मोत्पद्यते प्रलीयते चेति । विस्तरस्तु भाष्ये द्रष्टव्यः । अत्र कश्चिदाह—परमात्मा लीयते न वेति संशये लीयत इति तावत्प्राप्तम् । ' तमसि निलीनः ' इति श्रुतेः । सिद्धान्तमाह—

**' नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः । '**

परमात्मा न लीयतेऽश्रुतत्वात् । निलीनशब्दो ह्यपि हि तत्त्वपरः । ' एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति । ' ' नैनं पश्यति कश्चन ' इति पैङ्ग्यश्रुतेश्च । ताभ्यः । ' नित्यो नित्यानां चेतनश्चेतनानाम् ' [ क० ५ । १३ ] इत्यादिश्रुतिभ्यो नित्यत्वावधारणाच्चेति । तदसत् । ' य इत्था वेद स तमोऽन्धमप्येति ' इति पैङ्ग्यश्रुतेर्वाक्यशेषात् ॥ १७ ॥ ( ११ )

**ज्ञोऽत एव ॥ १८ ॥ ( १२ )**

तार्किका मन्यन्ते सुषुप्तिमूर्छादिषु चैतन्याभावादचिद्रूपो जीवः । जागरणे चाऽऽत्ममनःसंयोगाच्चैतन्याख्यगुणो जायतेऽतो जीवो जड एवेति । तन्निरासार्थमिदमधिकरणम् । जीवश्चेतनः । कुतः । अत एव । चिद्रूपब्रह्माभेदादेव । औपाधिक एव तयोर्भेद इत्यसकृदवोचाम । चिद्रूपस्यैव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात् । नच चैतन्यं सुषुप्त्यादौ लुप्यते । तत्र साक्षित्वेनावस्थानात् । अन्यथा सुषुप्त्यादिपरामर्शायोगात् । कथं तर्हि सुषुप्त्यादौ द्वैताप्रतीतिरिति चेत् । द्वैतलोपादिति ब्रूमः । तथाच श्रुतिः—' यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ' [ बृ० ४ । ३ । २३ ] इति । अस्यायमर्थः—तत्र सुषुप्तौ किमपि न पश्यतीति यल्लोकैरुच्यते तदसत् । पश्यन्नेव जीवस्तदानीं न पश्यतीति तैर्भ्रान्त्योच्यते । कथं दर्शनमित्यत्र हेतुरुच्यते । द्रष्टुः साक्षिणो दृष्टेर्ज्ञानस्य विपरिलोपो न विद्यते विनाशरहितस्वभावत्वात् । अन्यथा निःसाक्षिकस्य लोपस्य वक्तुमशक्यत्वात् । कथं तर्हि लौकिका न पश्यन्तीति भ्रम इत्यत्र हेतुरुच्यते । ब्रह्मचैतन्याद्द्वितीयं क्रियाकारकफलरूपेण विभक्तं जगन्नास्ति । तस्य स्वकारणे लीनत्वात् । अतो न पश्यन्तीति लौकिकानां भ्रमः । तस्माच्चिद्रूपो जीवः । अत्र कश्चिदाह—जीव उत्पद्यते न वेति संशये नोत्पद्यते ' नित्यो नित्यानाम् ' [ क० ५ । १३ ] इति श्रुतेरिति पूर्वपक्षं प्रापय्योत्पद्यत इति सिद्धान्तितम् । नित्यस्यापि जीवस्योपाध्यपेक्षयोत्पत्तिर्युत इ(क्ते)त्यत्र काषायणश्रुतिर्व्योमसंहिता च प्रमाणत्वेनोपन्यस्ता तेन । तदसत् । सत्यप्रपञ्चवादिनस्तस्य मते औपाधिक्युत्पत्तिरित्यस्यानुत्पत्तिपर्यवसायित्वात् । किंच ' तदाऽऽत्मानं सृजाम्यहम् ' [ भ० गी० ४ । ७ ] इत्यादिवचनाद्विष्णोरप्येवमुत्पत्तिः स्यात् । तथा

च तदीयपूर्वाधिकरणं विरुध्येत । तथा च सुन्दोपसुन्दन्यायेन द्वे अप्यधिकरणे विनश्येताम् । किंच तदीयाः काषायणादिश्रुतयो व्योमसंहिता एवेति दिक् ॥ १८ ॥ ( १२ )

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

इदानीं किंपरिमाणो जीव इति चिन्त्यते । जीवोऽणुर्वा मध्यमपरिमाणो वा महापरिमाणो वेति संशयेऽणुपरिमाण इति तावत्प्राप्तम् । 'एषोऽणुरात्मा चेतसा वेदितव्यः' [ मु० ३ । १ । ९ ] इत्यणुत्वश्रवणात् । 'स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ।' [ कौषी० ३ । ३ ] 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' [ कौ० १ । २ ] इति 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय' [ बृ० ४ । ४ । ६ ] इत्युत्क्रान्तिगत्यागतीनां श्रुतिभिः परिच्छिन्नत्वसिद्धेश्च । नित्यत्वेन मध्यमपरिमाणनिरासादणुत्वसिद्धिः ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

चो हेत्वर्थः । उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या व्यवकल्प्येत । उत्तरे तु गत्यागती नाचलतः संभवतः । स्वात्मना कर्त्रा हि तयोर्गत्यागत्योः संबन्धो भवति । गमेः कर्तृस्थक्रियत्वात् । न ह्यनपसृत्य देहाद्गत्यागती स्याताम् । देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात् । 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' [ बृ० ४ । ४ । २ ] इति । तस्माच्छरीरादपसृतस्यैव गत्यागती भवतः ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

ननु जीवो नाणुः । कुतः । अतच्छ्रुतेः । अणुत्वविपरीतपरिमाणप्रतिपादकश्रुतेरित्यर्थः । ताश्च–'स वा एष महानज आत्मा योऽयं विज्ञानमयः' [ बृ० ४ । ४ । २२ ] 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिका इति चेन्न । कस्मात् । परस्यैवाऽऽत्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात् । 'योऽयं विज्ञानमयः' [ बृ० ४ । ४ । २२ ] इति निर्देशः शास्त्रदृष्ट्या वामदेववद्द्रष्टव्यः । तस्मादणुर्जीवः ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

किंच जीवोऽणुर्भवितुमर्हति । कुतः । स्वशब्दोन्मानाभ्याम् । स्वशब्दस्तावत् । 'एषोऽणुरात्मा चेतसा वेदितव्यः' [ मुं० ३ । १ । ९ ] इति स्वस्य जीवस्याणुत्वश्रुतेः । उन्मानं परमात्मनः सकाशात्पृथक्कृत्य मानम् ।

'वालाग्रशतभागस्य शतधाकल्पितस्य च ।
भागो जीवः स विज्ञेयः' [ श्वे० ५ । ९ ] इति । 'आराग्र मात्रो ह्यवरोऽपि दृष्टः' [ श्वे० ५ । ८ । इत्युन्मानं च तस्मादणुर्जीवः ॥ २२ ॥

ननु जीवस्याणुत्वे सति जाह्नवीह्रदनिमग्नस्य सर्वाङ्गीणशैत्योपलब्धिर्न स्यात् । निदाघे च सर्वाङ्गीणतापोपलब्धिश्च न स्यादित्याशङ्क्योत्तर पठति—

अविरोधश्चन्दनवत् ॥ २३ ॥

यथा चन्दनबिन्दुरेकदेशस्थोऽपि सर्वाङ्गीण सुख जनयत्येवमात्माऽप्येकदेशस्थः सर्वदेहव्यापि सुखदुःखादिकारणीभूतशैत्यतापादिक जानाति । त्वक्च सर्वशरीरव्यापिनी । त्वगात्मसंबन्धस्यापि तथात्वात् । तस्मादणुर्जीवः ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

ननु चन्दनस्यैकदेशावस्थितत्वं प्रत्यक्षसिद्धमिति तथाविधस्यैव सर्वाङ्गीणसुखजनकत्वमभ्युपेयते । जीवस्य तु न प्रत्यक्षसिद्धमेकदेशस्थत्वमिति सर्वाङ्गीणसुखानुपपत्त्याऽव्यापकत्वमेव कल्प्यमिति चेन्न । जीवस्यापि हृद्यवस्थितिविशेषस्याभ्युपगमात् । ‘ योऽय विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ’ [बृ० ४ । ३ । ७] इत्यादिश्रुतेः । अतो दृष्टान्तदार्ष्टान्तिकयोर्न वैषम्यम् । यद्यपि स्वशब्दोन्मानसूत्रेणाणुत्वसाधनात्साम्यं सिद्धमेव तथाऽपि श्रुत्यन्तरोदाहरणार्थमिदं सूत्रम् ॥ २४ ॥

ननु चन्दनस्य सावयवत्वात्सूक्ष्मावयवाना सकलदेहप्रसरणेन सर्वाङ्गीणसुखजनकत्वं भविष्यत्यतोऽस्तु जीवस्य निरवयवत्वात्कथं चन्दनसाम्यमित्यपरितोषात्प्रकारान्तरमाह—

गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वाऽणोरपि जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते । यथा लोके मण्यादेरेकदेशस्थस्यापि प्रभा गृहादिव्यापिनी व्यापक कार्यं करोति तद्वत् ॥ २५ ॥

ननु ज्ञानस्य गुणत्वाद्गुणिव्यतिरेकेण कथमवस्थान घटेत । न हि पटस्य शुक्लादिगुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । नच प्रदीपप्रभावदिति वाच्यम् । तस्या अपि द्रव्यत्वादित्याशङ्क्योत्तरमाह—

व्यतिरेको गन्धवत् ॥ २६ ॥

यथा कर्पूरा[दि]गन्धस्य गुणस्यापि सतो गुणवद्द्रव्यव्यतिरेकेणान्यत्रोपलब्धिस्तद्वज्ज्ञानस्यापीत्यविरोधः । न च गुणस्य गन्धस्य स्वाश्रयविश्लेषादर्शनात्सहैवाऽऽश्रयावयवैर्विश्लेष इति वाच्यम् । मूलद्रव्यक्षयप्रसङ्गात् । कर्पूरादौ क्षयो दृष्ट इति चेत् । न । श्रीखण्डघृतादौ तदर्शनात् । गन्ध एवाऽऽघ्रात इति लौकिकानुभवाच्च । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेन्न प्रत्यक्षत्वादनुमानाप्रवृत्तेः । तस्माद्गुणस्याऽऽश्रयव्यतिरेको युक्तः ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

श्रुतिर्हृदयाश्रयत्वमणुपरिमाणत्वं चाऽऽत्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' [ छा० ८।८।१ ] इति चैतन्येन गुणेन सर्वशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' [ कौ० ३ । ६ ] इति चाऽऽत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापित्वं गम्यते । तस्मादणुरात्मेति ॥ २८ ॥

एवं प्राप्ते ब्रूमः—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

नार्थे तुशब्दः । नाणुर्जीवः । परस्यैव ब्रह्मणो जीवरूपेणानुप्रवेशश्रवणात् । 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति तादात्म्योपदेशाच्च । परमेव ब्रह्म जीव इत्यसकृदुक्तम् । परस्य च विभुत्वाज्ज्ञानस्वरूपत्वाच्च जीवोऽपि विभुर्ज्ञानस्वरूपश्च । तथा च भाष्यकृत आहुः—परस्य ब्रह्मणो विभुत्वमाम्नात तस्माद्विभुर्जीव । तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' [ बृ० ४ । ४ । २२ ] इत्येवं जातीयका जीवविषयका विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्तीति । चैतन्यं तु स्वरूपमेव जीवस्याग्नेरिवौष्ण्यम् । कथं तर्ह्यणुत्वादिव्यपदेश इत्यत्राऽऽह—तद्गुणसारत्वात्तद्व्यपदेश इति । तस्या बुद्धेर्गुणास्तद्गुणा इच्छाद्वेषसुखदुःखादयस्त एव सारः प्रधानं यस्याऽऽत्मनः स तद्गुणसारस्तद्भावस्तद्गुणसारत्वम् । तस्मात्तद्गुणसारत्वात्तद्व्यपदेशो जीवव्यपदेश इत्यर्थः । न हि बुद्धेर्गुणानन्तरेण केवलस्याऽऽत्मनः संसारित्वमस्ति बुद्ध्युपाधिनिमित्तो हि कर्तृत्वभोक्तृत्वादिलक्षणः संसार आत्मनो न स्वतः । प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिसंबन्धादणीयस्त्वादिव्यपदेशः । 'अणीयान्व्रीहेर्यवाद्वा' [ छा० ३ । १४ । ३ ] 'मनोमयः प्राणमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः' [ छा० ३ । १४ । २ ] इत्येवप्रकारस्तद्वत् । एवं बुद्धिपरिमाणेनास्य परिमाणव्यपदेशस्तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः । तथा च—

> वालाग्रशतभागस्य शतधा कल्पितस्य च ।
>
> भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते ॥ [ श्वे० ५ । ९ ]

इत्यणुत्वमौपाधिकं भवेत्पारमार्थिकं चाऽऽनन्त्यमिति । विस्तरस्तु भाष्यादवगन्तव्यः । तस्मान्नाणुर्जीव इति सिद्धम् । यत्तु कश्चिदाह—'ज्ञोऽत एव' [ ब्र० सू० २ । ३ । १८ ] इत्यादिभिः सूत्रैर्जीवस्याणुत्वं प्रतिपाद्य 'पृथगुपदेशात्' [ ब्र० सू० २ । ३ । २८ ] इति सूत्रेण जीवब्रह्मणोर्भेदः सिद्धः । तथा च कौशिकश्रुतिः—

' भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसघो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तोऽयं च बद्धस्तस्मान्मोक्ष तत एवाभिवाञ्छेत् ' ॥ इति ।

तस्माद्भिन्न एव जीवः । न चाभेदश्रुतेरप्रामाण्यप्राप्तिर्निर्विषयत्वादिति वाच्यम् । परमात्म-गुणसदृशानन्दादिगुणस्वरूपत्वेन जीवस्य गौण्या वृत्त्या ह्यभेदव्यपदेशोपपत्तेरिति तदसत् ।

स्वनिघ्नमायो हि परः स्वतन्त्रस्तस्मादसौ प्रोच्यते नित्यमुक्तः ।
स एव जीवोऽविद्यया बन्धमेति तन्नाशे तु ब्रह्म सपद्यतेऽन्ते ।
मिथ्या भेदो ब्रह्मभावस्तु सत्यस्तस्माद्विद्वान्न प्रमाद्येत सत्यात् ॥ इति

तस्या एव कौशिकश्रुतेः । पूर्वश्रुतिस्तु व्यावहारिकभेदानुवादिनीति न विरोधः । भविष्यत्पर्ववचनमप्येवमिति दिक् ॥ २९ ॥

ननु बुद्धिसंबन्धाद्यद्यात्मनः संसारित्वं तर्हि कदाचिद्बुद्धिवियोगादसंसारित्वमपि स्यादि-त्याशङ्क्याऽऽह—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

मुक्तेः पूर्वं बुद्धिवियोगादसंसारित्वमात्मनः प्रसज्येतेत्युक्तदोषो न संभवति । कुतः । यावदात्मभावित्वात् । यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्व न निवर्तते तावदस्य बुद्ध्या संयोगो न शाम्यतीत्यर्थः । कथमेतदवम्यते तत्राऽऽह—तद्दर्श-नात् । ' योऽयं विज्ञानमयो मनोमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव ' ( बृ० ४ । ३ । ७ ) इत्यादि । तत्र विज्ञा-नमय इति बुद्धिमय इत्येतदुक्तं भवति । यथा लोके स्त्रीमयो देवदत्त इति स्त्रीप्रधानोऽभि-धीयते तद्वत् । ' स समानः सन्नुभौ लोकावनुसंचरति ' इति च लोकान्तरगमनेऽपि बुद्धेरवियोगं दर्शयति । केन समान इत्याकाङ्क्षायां संनिधानात्तयैव बुद्ध्येति गम्यते । तच्च संनिधानं श्रुतिर्दर्शयति—' ध्यायतीव लेलायतीव ' इति । एतदुक्तं भवति—नायं स्वतो ध्यायति नापि चलति ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां चलतीवेति । मिथ्याज्ञाननि-मित्तस्य संसारस्य तत्त्वज्ञानं विना न निवृत्तिरिति चशब्देन सूचयति । तथा च श्रुतिः— ' तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ' ( श्वे० ३ । ८ ) इति । यत्तु कश्चिदाह—बिम्बस्य परमात्मनोऽनाद्यनन्तत्वादुपाधेश्च यावदात्मभावित्वात् सर्वगतः बिम्बस्योपाधिसंबन्धस्य च नित्यत्वाच्च प्रतिबिम्बो जीवो नित्यः । तदुक्तम्—

' जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ' इति ॥

सत्यम् । स्वश्चिदाभासो रूप्यतेऽनेनेति स्वरूपमन्तःकरणं तदेवारो ( वो )पाधिरि-त्यर्थः । ' कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ' इति श्रुतेः । यत्तु जीवस्वरूपमे-

वोपाधिरिति तेनोक्तं तदसत् । ' मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः ' इत्यत्र स्वरूपेणेति तृतीयाऽपार्थिका । करणताया बाधितत्वात् । एव स्थिते चैतन्यस्योपाधित्वं नोपपद्यत इति यत्तेनास्मान्प्रति वक्ष्यते तत्स्वव्याघातमनालोच्येति दिक् ॥ ३० ॥

ननु ' सता सौम्य तदा सपन्नो भवति ( छा० ६ । ८ । १ ) इति वचना-त्कृत्स्नविकारप्रलयाभ्युपगमाच्च तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येत्यत उत्तरं पठति—

### पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा लोके बाल्ये विद्यमानान्येव पुंस्त्वादीनि यौवनेऽभिव्यज्यन्ते तद्वत्सुषुप्त्यादौ संस्का-रात्मना सत एव तस्य बुद्धियोगस्य जाग्रदादावभिव्यक्तियोगात् । अभिव्यक्तेर्युक्तत्वादित्यर्थः । तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्युपाधिसबन्ध इति ॥ ३१ ॥

नन्वन्तःकरणस्यैवाभावात्कथ तद्गुणसारत्वम् । अन्तःकरणमेवानेकधा मनो बुद्धिर्विज्ञानं चित्तमिति चोच्यते । तस्यैवान्तःकरणस्याभावाद्बुद्ध्यभावस्तदभावे कथ तद्गुणसारत्वमित्या-शङ्क्य श्रुतिसिद्धमप्यन्तःकरण युक्त्या साधयति—

### नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-
### नियमो वाऽन्यथा ॥ ३२ ॥ ( १३ )

अन्तःकरणमस्तीत्यवश्यमभ्युपगन्तव्यम् । अन्यथा तस्मिन्ननभ्युपगम्यमाने नित्यो-पलब्ध्यनुपलब्धिप्रसङ्गः स्यात् । आत्मेन्द्रियाणामुपलब्धिसाधनाना संनिधाने सति नित्य-मेवोपलब्धिः प्रसज्येत । अतः सत्यपि साधने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत । नचैव दृश्यते । अथवाऽन्यतरस्याऽऽत्मन इन्द्रियस्य वा नियमः शक्तिप्रतिबन्धः कल्प्येत । नचाऽऽत्मनः शक्तिप्रतिबन्धः संभवति । अविक्रियत्वात् । नापीन्द्रियस्य तस्य पूर्वोत्तरक्षणयोरप्रतिबद्धशक्तिकस्य मध्येऽकस्मात्तत्प्रतिबन्धायोगात् । तस्माद्यस्यावधानानव-धानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथा च श्रुतिः—' अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ' [ बृ० १ । ५ । ३ ] इति । कामादयश्चास्य वृत्तय इति दर्शयति—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' [ बृ० १ । ५ । ३ ] इति । तस्माद्युक्तमेव ' तद्गुणसारत्वात्तद्व्यपदेशः ' [ ब्र० सू० २ । ३ । २९ ] इति । यत्तु कश्चिदाह— जीवो ज्ञानानन्दादिस्वरूपो न वेति संशये नेति प्राप्तम् । स दुःखाद्विमुक्त आनन्दी भवति सोऽज्ञानाद्विमुक्तो ज्ञानी भवति सोऽबलाद्विमुक्तो बली भवति स नित्यो निरातङ्कोऽ-वतिष्ठत इति पैङ्गिश्रुतेः । अहमिति जीवस्वरूपे भासमानेऽप्यानन्दादिरूपाननुभवाच्च । सिद्धान्तमाह—' पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ' । जीवो ज्ञानानन्दादिरूपो

भवत्येव । न च पैङ्गिश्रुतिविरोधः । यथा बाल्ये सदेव पुंस्त्वं यौवनेऽभिव्यज्यत एवं सतामेवाऽऽनन्दादीनामभिव्यक्त्यपेक्षया तदुपपत्तेः । न चासतामुत्पत्तिरेव किं न स्यादिति वाच्यम् ।

' बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ' ॥

इति गौपवनश्रुतेः । अत एव नानुभवविरोधः । संसारावस्थायां सतामप्यानन्दादीनां भावरूपाज्ञानेनाऽऽवृततयाऽननुभवस्य तद्विपरीतानुभवस्य चोपपत्ते. । भगवत्प्रसादेनाऽऽवरणनिवृत्तौ सत्यामानन्दानुभवतद्विपरीताननुभवयोरुपपत्तेश्च । जीवस्वरूपस्याऽऽनन्दादेरावरणतन्निवृत्त्योरनभ्युपगमे बाधकमाह—' नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा' । अन्यथाऽऽवरणतन्निवृत्त्योरनभ्युपगमे सज्जीवानां मोक्षयोग्याणां नित्यमानन्दाद्यनुभवः स्यात् । असुराणां कदाऽपि न स्यात् । दुःखाद्यनुभवश्च सदा स्यात् । मध्यमानां मानुषाणां तु नित्योपलब्ध्यनुपलब्धी स्याताम् । ' नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्याः ' इत्यग्निवेश्यश्रुतिः ।

' नित्यानन्दबलेनैव युक्ता नैव तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
सम्यग्ज्ञानं तु देवानां मानुषाणां विमिश्रितम् ॥
विपरीतं च दैत्यानां ज्ञानस्यैव व्यवस्थितिः ' ।

इति भविष्यत्पर्वणि च । उपाधिरिह बाह्यो बोध्यः । तदयं फलितोऽर्थः—जीवाश्रितमनाद्यज्ञानमानन्दादेर्ब्रह्मस्वरूपतद्गुणगणादेश्चाऽऽवरकं मायाविद्याप्रकृत्यादिशब्दवाच्यं द्रव्यरूपं ज्ञानविरोधिभावरूपमज्ञानं सर्वथा स्वीकर्तव्यम् ।

' अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ' [ गौ० पा० १ । १६ ]

' भूयश्चान्ते विश्वमायानिवृत्तिः [ श्वे० १ । १० ] इत्यादिश्रुतिभ्यः । तच्च प्रतिजीवं भिन्नमिति नैकमुक्तौ सर्वमुक्तिः । अनिर्वचनीयतानभ्युपगमाच्च नाद्वैतवादिमतप्रवेश इति । अत्रोच्यते—जीवो ब्रह्म नित्यानन्दादिस्वरूपत्वादित्याद्यनुमानस्य लाघवतर्कोपष्टब्धस्याभेदे प्रमाणत्वात् । ' नाहमानन्दो नाहं ज्ञानमित्यादेर्नाहं ब्रह्मेत्यस्य चानुभवस्य समानयोगक्षेमत्वात् । आवरणस्यापि तुल्यत्वात् । व्यूहावतारादाविवाऽऽखण्डलार्जुनादाविव त्वन्मते विरुद्धधर्मसमावेशस्य संभवाच्च । अनिर्वचनीयतायाश्चानिच्छता रुदताऽपि त्वयाऽभ्युपेयत्वाच्च । तथा च श्रुतयः । मैत्रायणीयोपनिषदि चतुर्थप्रपाठके प्रपञ्चस्य मिथ्यात्वमाम्नातम्— ' इन्द्रजालमिव मायामयस्वप्न इव मिथ्यादर्शनम् ' [ मैत्र्युप० ४ । २ ] इति । तिष्ठन्त्विहैवंजातीयिकाः पुराणश्रुतयः ।

' इन्द्रजालमिदं सर्वं मायया परिकल्पितम् ।
मिथ्या जीवेश्वरभिदा सत्यं ब्रह्मैव निष्कलम् ॥ '

इति पैङ्गिश्रुतिः ।

' मृषा ह्येवैतत्सर्वं यदिदं किं च ' इति काण्वायणश्रुतिः । एवंजातीयकानि तुरकमठकौण्ठरव्यादिश्रुतिप्रमाणान्यस्मिन्नर्थे सन्ति विस्तरभयान्नेह लिख्यन्ते । युक्तिप्रपञ्चस्तु तत्त्वकौस्तुभेऽनुसंधेय इति दिक् ॥ ३२ ॥ ( १३ )

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

साङ्ख्या आत्मनः कर्तृत्वं नेच्छन्ति तन्निराकरणार्थमिदमधिकरणम् । जीवः कर्ता भवितुमर्हति । कुतः । शास्त्रार्थवत्त्वात् । ' यजेत जुहुयात् ' इत्यादिशास्त्रस्य कर्तुः फलप्रतिपादकस्यार्थवत्वात् । अन्यथा तदनर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति । नचासति कर्तरि तदुपपद्येत । तथेदमपि शास्त्रमर्थवद्भवति ' एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ' [ प्र० ४ । ९ ] इति ॥ ३३ ॥

**विहारोपदेशात् ॥ ३४ ॥**

इतश्च जीवः कर्ता । कुतः । विहारोपदेशात् । जीवप्रक्रियायां यथाकामं परिवर्तेत इति विहारोपदेशात् ॥ ३४ ॥

**उपादानात् ॥ ३५ ॥**

इतश्च जीवः कर्ता । यस्माज्जीवप्रक्रियायामेव करणानामुपादानश्रवणात् तदेषां प्राणानां विज्ञानेन विज्ञानमादाय ' ( बृ० २ । १ । १७ ) इति ' प्राणान्गृहीत्वा ' ( बृ० २ । १ । १८ ) इति च ॥ ३५ ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥**

इतश्च जीवस्य कर्तृत्वम् । कुतः । ' विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ' ( तै० २ । ५ । १ ) इति । क्रियायां यागादिक्रियायाम् । इदमुपलक्षणम् । लौकिक्यामपि क्रियायां कर्तृत्वव्यपदेशात् । तदुक्तं भाष्यकृद्भिः—यदस्य लौकिकीषु च क्रियासु वैदिकीषु च कर्तृत्वं व्यपदिशतीति । यदि विज्ञानमिति जीवनिर्देशो न स्यात् करणनिर्देशो भवेत् तदा निर्देशविपर्ययः स्यात् । विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् । कर्तृविभक्तिश्च श्रूयत इति जीवस्य कर्तृत्वम् ॥ ३६ ॥

ननु यदि जीवः स्वतन्त्रः कर्ता स्यात्तर्हि नियमेन स्वहितमेव संपादयेन्नाहितमित्यत आह—

**उपलब्धिवदनियमः ॥ ३७ ॥**

यथोपलब्धिं प्रति स्वतन्त्रोऽपि देशकालादिसहकारिविशेषवशादनियमेनेष्टमनिष्टं वा लभते तथा सहकारिवशादनियमेनेष्टमनिष्टं वा करिष्यतीत्यदोषः ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च बुद्धिव्यतिरिक्तो जीवः कर्ता । कुतः । शक्तिविपर्ययात् । अयमर्थः—यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात् । ततः शक्तिविपर्ययः स्यात् । बुद्धेः करणशक्तिर्हीयेत कर्तृत्वशक्तिश्चाऽऽपद्येत । बुद्धेश्च कर्तृशक्तौ सत्यां तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् । अहकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनादहं गच्छाम्यहं भुञ्जेऽहं पिबामीत्यादौ । बुद्धेश्च कर्तृत्वे कर्तुः करणसापेक्षत्वात्करणान्तरमभ्युपेयम् । ततश्च बुद्धिरिति कर्तेति नाममात्रे विवादः स्यात् । न वस्तुभेदः कश्चित् । करणव्यतिरिक्तस्य कर्तृत्वाङ्गीकारात् । तस्मात्कर्ता जीवो न बुद्धिः ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥ ( १४ )

यदि जीवस्याकर्तृत्वं स्यात्तदा ध्यानधारणादावौपनिषदात्मप्रतिपत्तिप्रयोजनेऽप्यकर्तृत्वं स्यात् । ततश्च समाध्यभावे मोक्षोऽपि न स्यादित्यर्थः । तस्माज्जीवः कर्तेति सिद्धम् ॥ ३९ ॥ ( १४ )

## तथा च तक्षोभयथा ॥ ४० ॥ ( १५ )

जीवस्य यदुक्तं कर्तृत्वं तत्किं स्वाभाविकमाहोस्विदौपाधिकमिति विशये स्वाभाविकमिति तावत्प्राप्तम् । पूर्वाधिकरणोक्तैरेव हेतुभिः साधितत्वादिति । अत्रोच्यते—जीवस्य स्वाभाविकं कर्तृत्वं न संभवति । अनिर्मोक्षप्रसङ्गात् । स्वाभाविकधर्माणां सति धर्मिण्युच्छेदासंभवात् । अन्यथा सत्यग्नावौष्ण्योच्छेदः स्यात् । तदुक्तं भाष्यकृद्भिः—कर्तृत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवत्यग्नेरिवौष्ण्यादिति । उक्त च सुरेश्वराचार्यैः—

‘ आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्ततौष्ण्यवद्रवेः ’ इति ॥

तस्मादुपाधिप्रयुक्तमेवाऽऽत्मनः कर्तृत्वं न स्वाभाविकम् । तथा च श्रुतिः—‘ध्यायतीव लेलायतीव ’ [ बृ० ४ । ३ । ७ ] इति, ‘ आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ’ [ क० ३ । ४ ] इति च । ‘ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ’ [ बृ० ४ । ५ । १५ ] इत्यादिश्रुतयोऽविद्यावस्थायां तस्यैवाऽऽत्मनः कर्तृत्वभोक्तृत्वे दर्शयन्ति । विद्यावस्थायां ते निवारयन्ति ‘ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ’ [ बृ० ४ । ५ । १५ । इत्यादिकाश्च श्रुतयः । तदेतदाहाऽऽचार्यः—‘यथा च तक्षोभयथा ’ इति । यथा लोके तक्षा वर्धकिर्वास्यादिकरणयुक्तः कर्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणो निर्व्यापारः सुखी भवति तद्वत् । तक्षदृष्टान्तो न सर्वांशे । नहि दृष्टान्ते सर्वसाम्यमिति न्यायात् । विस्तरस्तु भाष्येऽनुसंधेयः ॥ ४० ॥ ( १५ )

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

यदुक्तमविद्याकल्पितं जीवस्य कर्तृत्वं तत्किमीश्वरनिरपेक्षस्य भवति तत्सापेक्षस्य वेति संशय ईश्वरनिरपेक्षस्येति प्राप्तम् । लोके कृषीवलादीनां रागद्वेषावेव प्रवर्तकौ दृष्टौ तदनुसाराद्धर्माधर्मयोः कर्तुर्जीवस्यापि तावेव प्रवर्तकावभ्युपेयौ । ईश्वरस्य प्रवर्तकत्वे वैषम्यनैर्घृण्ये ईश्वरस्य प्रसज्येयातां जीवस्याकृताभ्यागमश्च प्रसज्येत । किंच ' स्वतन्त्रः कर्ता [ पा० सू० १ । ४ । ५४ ] इति स्मृतिविरोधश्चेति । तस्मान्नेश्वरः प्रवर्तक इति प्राप्ते ब्रूमः । तुशब्दः पूर्वपक्षनिरासाय । जीवस्य कर्तृत्वभोक्तृत्वादिक परात्परमेश्वराद्भवितुमर्हति । कुतः । तच्छ्रुतेः । ' एष ह्येव साधु कर्म कारयति ' कौ० ३ । ८ ] इत्यादिश्रुतेरित्यर्थः ॥ ४१ ॥

नन्वेवमीश्वरस्य प्रवर्तकत्वे वैषम्यनैर्घृण्यप्रसङ्गो जीवस्याकृताभ्यागमप्रसङ्गश्च स्यादित्यत आह—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा-
## वैयर्थ्यादिभ्यः ॥ ४२ ॥ ( १६ )

तुशब्दश्चोद्यनिरासार्थः । कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः प्रवर्तयति । अतो नोक्तदोषाः प्रसज्यन्ते । एवं हि ' स्वाध्यायोऽध्येतव्यः ' । ' स्वर्गकामो यजेत ' [ आ० श्रौत० १० । २ । १ ] ' ब्राह्मणो न हन्तव्यः ' इत्येवमादेर्विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् । किंचाऽऽदिपदेन देशकालादिवैयर्थ्यं कृतहानाकृताभ्यागमश्च स्यात् । एतन्निरपेक्षश्चेदीश्वरो जीवं प्रवर्तयति तदा वैषम्यनैर्घृण्ये प्रसज्येयाताम् । तस्मात्कृतप्रयत्नापेक्ष ईश्वरः प्रवर्तयति । वैषम्यनैर्घृण्ये इत्यत्र वैषम्यनैर्घृण्यपरिहारमात्रं कृतम् । अत्र तु तस्य प्रवर्तकत्वं प्रतिपादितम् ॥ ४२ ॥ ( १६ )

## अंशो नानाव्यपदेशादन्यथा चापि दाश-
## कितवादित्वमधीयत एके ॥ ४३ ॥

जीवस्य कर्तृत्वमीश्वराधीनमिति प्रतिपादितम् । तत्रेशित्रीशितव्यभावश्च भेदे सति भवति । स भेदः किं स्वामिभृत्ययोरिवाथवाऽग्निविस्फुलिङ्गयोरिव किं स्वाभाविक आहोस्विदौपाधिक इति विचिकित्सायां स्वामिभृत्ययोरेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव सबन्ध इति प्राप्नोति । अत आहांश इति । जीव ईश्वरस्यांशो भवितुमर्हति । यथाऽग्नेर्वि स्फुलिङ्गोऽश इवांशः । उपाधिं विना निरवयवस्याऽऽत्मनो मुख्यांशासंभवात् । मुख्यांशः कुतो न संभवति तत्राऽऽह—नानाव्यपदेशात् । ' सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ' । [ छा० ८ । ७ । १ ] ' यो विज्ञाने तिष्ठन् ' [ बृ० ३ । ७ । २२ ] इत्यादौ जीवेशयोर्भेदव्यपदेशादित्यर्थः । नन्वेवमत्यन्तभेद एवास्तु किमर्थमंशकल्पना तत्राऽऽह—

अन्यथा चापीति । नच नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः । किं तर्हि प्रकारान्तरेणाप्यभेदव्यपदेशो भवति । तथा ह्येके शाखिनो दाशकितवादिभावमधीयते 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना । आथर्वणिका ब्रह्मसूक्त आमनन्ति—दाशाः कैवर्ताः कितवा द्यूतकृतो दासाः प्रसिद्धाः । ते सर्वे ब्रह्मैवेति । ते हीनोदाहरणेन सर्वेषां ब्रह्मभावमामनन्ति । अनेन हीनोदाहरणेन सर्वेषां ब्रह्मभावमामनन्ति । अतो भेदाभेदाम्नानादंशत्वावगमः । 'नान्योऽतोऽस्ति द्रष्टा' [ बृ० ३ । ७ । २३ ] इत्यादिश्रुत्यन्तरमप्यभेदे प्रमाणम् ॥ ४३ ॥

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमेवार्थं गमयति—

'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः ।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' ॥ [ छा० ३।१२।६ ] इति।

अस्मान्मन्त्रवर्णादपि जीवस्यांशत्वनिश्चयः । 'न हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्यः' [ छा० ८ । १५ ] इत्यादौ भूतशब्दस्य चेतने प्रयोगात् । अंशः पादो भाग इत्यनर्थान्तरम् । अस्मादप्यंशत्वावगमः ॥ ४४ ॥

## अपि च स्मर्यते ॥ ४५ ॥

'ममैवांशो जीवलोके जीवभूतः सनातनः' [ १५—७ ] इति भगवद्गीतास्वपि जीवस्येश्वरांशत्वं स्मर्यते । तस्माज्जीवेश्वरयोरभेदः स्वाभाविको भेदस्त्वौपाधिक इति तात्पर्यम् ॥ ४५ ॥

नन्वत्यन्ताभेदे जीवदुःखेनेश्वरस्यापि दुःखित्वं स्यात् । यथा लोके हस्तपादाद्यन्यतमाङ्गगतेन दुखेनांशिनो देवदत्तस्य दुःखित्वं तद्वत् । ततश्च सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादित्याशङ्क्याऽऽह—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवोऽहमुपाध्यवच्छिन्नस्तदुत्पन्नं संसारदुःखमनुभवति नैवमीश्वरोऽनुभवति । यथा देहगतं छेदभेदादिनिमित्तं दुःखं तदभिमानिभ्रान्त्याऽनुभवति तथा कलत्रपुत्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्याऽनुभवति । मिथ्याभिमाननिमित्तक एव दुःखानुभवः । नैवं परमात्मा दुःखादिभाक् । अविद्यकदेहाद्यभिमानाभावात् । तत्र दृष्टान्तः—प्रकाशादिवदिति । यथा सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानः प्रकाशोऽङ्गुल्याद्युपाधिसंबन्धादृजुवक्रादिभावं प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते । यथाऽऽकाशो घटादिषु

गच्छत्सु गच्छन्निव भासमानोऽपि परमार्थतो न गच्छति । यथा वा जलादिगतप्रतिबिम्बे कम्पमानेऽपि सूर्यबिम्बं न कम्पते तद्वत् । तथा चाविद्यानिमित्तकजीवभावव्युदासेन ब्रह्मभावमेव प्रतिपादयन्ति वेदान्तास्तत्त्वमस्यहंब्रह्मास्मीत्येवमादयः । तस्मान्नास्ति जीवसंबन्धिदुःखेन परमात्मनो दुःखित्वप्रसङ्गः ॥ ४६ ॥

**स्मरन्ति च ॥ ४७ ॥**

स्मरन्ति व्यासादयो यथा—

' तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनः ' ॥

[ महाभा० १२ । ३५३ । १४ । १६ ] इति ।

चशब्दात् ' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ' [ श्वे० ४ । ६ ] ' एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ' [ क० ५ । ११ ] इत्यादिश्रुतिसंग्रहः ॥ ४७ ॥

ननु ' तत्सृष्ट्वा तदेवानुप्राविशत् ' [ तै० २ । ६ । १ ] इति पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थितश्चेत्तर्हि विधिप्रतिषेधावीश्वरे प्रसज्येयातामिति शङ्कामपनुदति—

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

अनुज्ञा विधिः । परिहारो निषेधः । ' ऋतौ भार्यामुपेयात् ' । ' परदारान्न गच्छेत् ' इत्यादी अनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसंबन्धात्स्याताम् । देहैः संबन्धो देहसंबन्धः । देहसंबन्धश्चाहमित्यभिमानस्तस्यैव संसारनिदानत्वात् । ज्योतिरादिवत् । यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिहीयते । नेतरः । एकस्यापि सवितुः प्रकाशो ह्यशुचिभूमिष्ठः परिह्रियते नेतरः शुचिभूमिष्ठः । तद्वत् । तस्माज्जीवस्य देहसंबन्धाद्विधिनिषेधप्रसङ्गो नैवेश्वरस्य तत्संबन्धाभावादिति ॥ ४८ ॥

**असंततेश्चाव्यतिकरः ॥ ४९ ॥**

संततिः संबन्धः । व्यतिकरः संकरः । देहसंबन्धाभावादेव फलसंबन्धोऽपीश्वरस्य नास्तीत्यर्थः । उपाधेः प्रतिबिम्बपक्षपातित्वाज्जीवस्यैव फलसंबन्धः स तु नेश्वरे संकीर्यत इति सूत्रार्थः ॥ ४९ ॥

ननु कर्मफलं तु कर्त्रैक्यात्संकीर्यतामित्याशङ्कायामाह—

**आभास एव च ॥ ५० ॥**

परमात्मन आभास एवैष जीवः । जले सूर्यप्रतिबिम्बवत् । यथैकस्मिन्प्रतिबिम्बे कम्पमाने सति प्रतिबिम्बान्तरं न कम्पते, एवमेकस्मिञ्जीवे कर्मफलभाजि न जीवान्तर तत्कर्मफलभाग्भवति । तत्तदन्तःकरणोपाधिभेदात् ॥ ५० ॥

एवं स्वमते कर्मफलासांकर्यमुक्त्वा परमते सांकर्यमाह—

**अदृष्टानियमात् ॥ ५१ ॥**

सांख्यानां समयेऽदृष्टं नाऽऽत्मसमवेतं किं तर्हि प्रधानवर्ति । प्रधानस्य तु सर्वसाधारणत्वात्प्रत्यात्मं सुखदुःखोपभोगस्य नियामकं नोपपद्यते । ततश्च बहुषु सर्वगतेष्वात्मसु सुखादिसांकर्यप्रसङ्गः स्यात् । काणादानामपि समये सर्वगतानामात्मना साधारणेनाऽऽत्ममनःसंयोगेन निर्वर्तितस्यादृष्टस्याप्यस्यैवाऽऽत्मन इदमदृष्टमितिनियमहेत्वभावादेष एव दोषः प्रसज्येत ॥ ५१ ॥

ननु प्रत्यात्ममहमिदं प्राप्नवानिदं परिहराणि प्रयत्नमित्थं करवाणीत्येवंविधा अभिसंधयो भिन्नास्तत्तदात्ममनःसंयोगं नियंस्यन्ति ततोऽदृष्टभेदात्सुखदुःखभेदो भविष्यतीत्याशङ्क्याऽऽह—

**अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥**

अभिसंध्यादीनामपि साधारणेनैवाऽऽत्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेर्नोक्तदोषपरिहारः संभवति ॥ ५२ ॥

**प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥ ( १७ )**

ननु विभुत्वेऽप्यात्मनः शरीरावच्छिन्नप्रदेश एवाऽऽत्ममनःसंयोगो नान्यत्रेति अदृष्टादिव्यवस्थोपपत्स्यत इति चेन्न । अन्तर्भावात् । विभुत्वाविशेषात्सर्व एवाऽऽत्मानः सर्वशरीरेष्वन्तर्भवन्तीति न प्रदेशकृतो विशेष इत्यर्थः । तस्मादात्मैक्यपक्ष एव सर्वदोषाभाव इति सिद्धम् । अत्र कश्चिदाह—' कर्ता शास्त्रार्थवत्त्वात् ' इत्यत आरभ्याऽऽ पादपरिसमाप्तेर्जीवः कर्ता भवति परं तु सा कर्तृत्वशक्तिः पराधीनैव ।

' कर्तृत्वं कारयत्वं च स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥ '

इति पैङ्गिश्रुतेः । तथा ' अंशो नानाव्यपदेशात् ' इत्यादिसूत्राणामपि फलितोऽर्थ एवम् । तत्संबन्धित्वमेवात्रांशत्वम् । अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते म्रियते च नाना ह्येनं

व्यपदिशन्ति पितेति पुत्रेति भ्रातेति सखेति च ' इति पाराशर्यायणश्रुतेः । असंततेश्चाव्यतिकर इत्यस्य सूत्रस्यायमर्थः—जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपो भूत्वा वर्तते । तद्विम्बरूपमस्य मुक्त्यर्थं सत्कारविषयो भवति । स च परमेश्वरः स्वसामर्थ्येनानन्तजीवबिम्बरूपो जायते । तथा च चतुर्वेदशिखायाम्—' तस्य ह वा एतस्य पञ्च रूपाणि शत रूपाणि तानि सर्वाण्यनन्तानि सर्वाण्यसंमितानि । अथावराः सर्वे एवापूर्णाः सर्व एव बध्यन्तेऽथ मुच्यन्ते च केचन ' इति । तदसारम् । ' एको हि जीव एक ईश्वरोऽनेके जीवा अनेकेऽपीश्वरा उपाधिवैचित्र्याद्वस्तुत एकमेवाद्वितीयं ब्रह्म ' इति पौत्रायणश्रुतेः ।

' एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।

एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' [ब्र० बि० १२] इत्यादिप्रसिद्धश्रुतिभ्यश्च । विस्तरस्तु तत्त्वकौस्तुभे द्रष्टव्यः ॥ ५३ ॥ ( १७ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितकृतौ ब्रह्मसूत्रवृत्तौ
द्वितीयाध्याये तृतीयः पादः ॥ ३ ॥

---

अथ चतुर्थः पादः ।

---

वियदादिविषये श्रुतिविरोधस्तृतीयपादेन परिहृतः । इदानीं चतुर्थेन पादेनेन्द्रियविषये श्रुतिविरोधः परिह्रियते—

**तथा प्राणाः ॥ १ ॥**

यथावच्छान्दोग्यादिषु श्रुतिषु ' तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] ' तस्माद्वा एतस्मादात्मन आकाशः संभूतः ' [ तै० २ । १ । १ ] इत्याकाशादीनामुत्पत्तिः श्रूयते न तथा प्राणानां क्वचिच्चानुत्पत्तिरेवैषां श्रूयते—' असद्वा इदमग्र आसीत् । तदाहुः । किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् । के ते ऋषय इति । प्राणा वा ऋषयः' [शत० ६।१।१।१] इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात् । अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—' यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि च भूतानि व्युच्चरन्ति ' [ बृ० २ । १ । २० ] इति । 'एतस्माज्जा-

---

१ क. °सीत् । ऋ° । २ क. °दासत् । के° ।

यते प्राणो मनः सर्वेन्द्रियाणि च ' [ मु० २ । १ । ३ ] इत्यादौ । तत्र निर्णयमाह— तथा प्राणाः । प्राणा इन्द्रियाणि तथोत्पद्यन्ते । यथा वियदादय उत्पद्यन्ते तथेत्यर्थः । व्यवहितस्यापि वियदादेस्तथेति तच्छब्देन परामर्शो नानुपपन्नः । तदुक्तं भाष्ये—प्राणोत्पत्तिवादिवाक्ये—

' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी सर्वस्य धारिणी ' [ मु० २ । १ । ३ ॥ ]

इत्येवमादीनि यथा खाद्युत्पत्तिस्तथा प्राणाद्युत्पत्तिः । उत्पत्तिश्रुत्यविशेषादिति ॥ १ ॥

ननु केषुचित् प्रदेशेषु प्राणानामुत्पत्तिर्न श्रूयत इति तदुत्पत्तिश्रुतिर्गौणी स्यान्नेत्याह—

## गौण्यसंभवात् ॥ २ ॥

गौण्या असंभवो गौण्यसंभवस्तस्मात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया विरोधान्न प्राणानामुत्पत्तिश्रुतिर्गौणी व्यर्था । यत्तु प्रागुत्पत्तेः प्राणसद्भावश्रुतिः ' ऋषयो वाव तेऽग्रेऽसदासन् ' इति साऽवान्तरसृष्टिविषयेति द्रष्टव्यम् ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

इतश्च प्राणजन्मश्रुतिर्न गौणी । कुतः । ' एतस्माज्जायते प्राणः' [ मु० २।१।३ ] इत्यत्र तत्प्राक्श्रुतेः । तदिति लुप्तषष्ठीकम् । तस्य जायत इतिपदस्य प्राणेषु प्राक्श्रुतेः । तदेव प्राक्श्रुतं जायत इति पदमुत्तरेष्वाकाशादिष्वनुवर्तते । तत्राऽऽकाशादिषु जायत इति मुख्यं जन्म प्राणानां प्रथमोद्दिष्टानां गौणमिति वैरूप्यं स्यात् । न ह्येकस्मिन्प्रकरण एकस्मिन्वाक्ये चैकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यं वैरूप्यप्रसङ्गादिति हि भाष्यम् । अन्यत्रापि ' तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] 'स प्राणमसृजत प्राणाच्छ्रद्धाम् ' [ प्र० ६ । ४ ] इत्यादौ तथात्वेन विकारजातस्यानुत्पत्तिः प्रसज्येत । तस्मात्प्राणोत्पत्तिश्रुतिर्मुख्यैव न गौणी ।

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ ( १ )

इतश्च प्राणानामुत्पत्तिरभ्युपेया । कुतः । वाचस्तत्पूर्वकत्वात् । वाच इत्युपलक्षणं वाक्प्राणमनसां तेजोबन्नपूर्वकत्वाम्नानादपि प्राणानामुत्पत्तिरवगम्यते तस्मादित्यर्थः । छान्दोग्ये—'तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] इत्यस्मिन्नेव प्रकरणे ' अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वाक् '[छा० ६ । ५ । ४] इति विकारार्थमयटा तेजोबन्नविकारत्वावगतेः । न च ' अन्नमयं हि सौम्य मनः ' इत्यनया श्रुत्या नान्नमनसो-

रप्राणयोस्तेजोवाचोश्चोपादानोपादेयत्वमभिहितं किं तर्हि मनआदीन्प्रत्यन्नादीनामुपष्टम्भव त्वमात्रमिति वाच्यम् । मयटा विकारत्वावगतेः । नहि विकारो नाम कश्चिन्नित्योऽस्ति तस्मान्मनआदीनां विकाररूपत्वादुत्पत्तिरिति सिद्धम् ॥ ४ ॥ ( १ )

### सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

प्राणानामुत्पत्तिविषयः श्रुतिविरोधः परिहृतः । इदानीं संख्याविषयो विरोधः परिह्रि यते । तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति । संप्रति कतीतरे प्राणा इति चिन्त्यते । त क्वचित्सप्त प्राणा आम्नायन्ते—' सप्त प्राणाः प्रभवन्ति तस्मात् ' [ मु० २ । १ । ८ इति । क्वचिदष्टौ प्राणा ग्रहत्वेनाऽऽम्नायन्ते—' तेऽष्टौ ग्रहा अष्टावतिग्रहाः ' [ बृ ३ । २ । १ ] इति । ग्रहाः प्राणाः । क्वचिन्नव ' सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ [ तै० सं० ५।३।२।५ ] इति । क्वचिद्दश ' नव वै पुरुषे प्राणा नाभिर्दशमी ' [ तै सं० ५ । ३ । २ । ३ ] इति । क्वचिदेकादश ' दश वै पुरुषे प्राणा आत्मैकादशः [ बृ० ३ । ९ । ४] इति । एवं क्वचिद्द्वादश ' सर्वेषां स्पर्शानां त्वगेकायनम् ' [ बृ २ । ४ । ११ ] इति । क्वचित्त्रयोदश ' चक्षुश्च द्रष्टव्यं च ' [ प्र० ४ । ८ इत्यत्र । एवं प्राणसंख्यां प्रति विप्रतिपन्नासु श्रुतिषु किं तावत्प्राप्तम् । ' सप्तैव प्राणाः इति । कुतः । सप्त गतेः । ' सप्त प्राणाः प्रभवन्ति तस्मात् ' [ मु० २ । १ । ८ इत्यादिश्रुतिषु सप्तत्वावगतेरित्यर्थः । ' सप्त वै शीर्षण्याः प्राणाः ' इति विशेषितत्वाच्च विरुद्धानेकसंख्याश्रवणे प्रथमोपस्थितत्वात्स्तोककल्पनानुरोधाच्च सप्तसंख्यैव न्याय्या परिग्रह तुम् । संख्यान्तरं वृत्त्यभिप्रायम् ॥ ५ ॥

इति प्राप्तेऽभिधीयते—

### हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ ( २ )

तुशब्दः पूर्वपक्षनिरासार्थः । सप्तैव प्राणा इति नियन्तुं न शक्यते । यतो हस्तादयस्त्व सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते । ' हस्तो वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतः ' [ बृ ३ । २ । ८ ] ग्रहत्वं च बन्धनभावो गृह्यते बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धेनेति तथा च स्मृतिः—

' पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते ।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ' ॥ [ ब्र० पु० ] इति

बद्धस्य वै बन्ध इत्यनेन प्रतिदेहमेवं बद्धो भवतीति सूचितम् । 'हस्ताभ्यां कर्म करोति इत्येवमादिकासु श्रुतिषु सप्तत्वातिरेके स्थिते सति न्यूनसंख्याया अधिकसंख्यायामन्तभ वात् । नैवं मन्तव्यं श्रुतसंख्यासु प्राथम्यात्स्तोककल्पनानुरोधाच्च सप्तैव प्राणाः स्युरिति किं तु कार्यवशादेकादशैव प्राणाः स्युः । तथा चोदाहृता श्रुतिः—' दशेमे पुरुषे प्रा

आत्मैकादशः ' [ बृ० ३ । ९ । ४ ] इति । आत्मशब्देन चात्रान्तःकरणं परिगृह्यते करणाधिकारात् । नन्वेकादशत्वादभ्यधिके द्वादशत्वत्रयोदशत्वे उदाहृते कथमेकादशेति चेत् । सत्यम् । नह्येकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति । यदर्थमधिकं करणं कल्प्येत । शब्दस्पर्शरूपरसगन्धविषया बुद्धिः । तत्साधनानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्चबुद्धीन्द्रियाणि च वचनादानगत्युत्सर्गानन्दाः पञ्चकर्मेन्द्रियभेदाः । तदर्थानि पञ्च कर्मेन्द्रियाणि । तथा च श्रुतिः—' हस्तौ चाऽऽदातव्यं चोपस्थश्चाऽऽनन्दयितव्यम् ' [ प्र० ४ । ८ ] इत्यादिः । सर्वार्थविषयमेकमन्तःकरणं तदेव मनोबुद्ध्यहंकारचित्तवृत्तिकं क्वचिद्भिन्नवद्व्यपदिश्यते । एवमेकादश प्राणाः । अपि च ' सप्त वै शीर्षण्याः प्राणाः ' इत्यत्रापि चत्वार एव प्राणा अभिहिताः स्युः । एते स्थानभेदात्सप्त गण्यन्ते । द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वागिति । न च चतुर्णामेव वृत्तिभेदा इतरे प्राणा इति वक्तुं शक्यम् । हस्तादिवृत्तीनामत्यन्तविजातीयानां सत्त्वात् । तथा नव वै पुरुषे प्राणा नाभिर्दशमीत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते न प्राणतत्त्वाभिप्रायेणेति ज्ञेयम् । क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते । एकादशव्यापाराणां दर्शनश्रवणाघ्राणास्वादनस्पर्शनवदनादानगमनानन्दविसर्गध्यानानामुपलम्भात्तत्साधनत्वेनेन्द्रियाण्येकादशेत्यभ्युपगन्तव्यम् । तस्मादेकादशैव प्राणा इति सिद्धम् ॥ ६ ॥ ( २ )

## अणवश्च ॥ ७ ॥ ( ३ )

इदानीमुक्तानां प्राणानां स्वरूपनिर्णयायेदमधिकरणम् । तत्र तावत्सांख्यो मन्यते—सर्वगतानीन्द्रियाणि प्रासादशिखरारूढस्य पुरुषस्योदयाद्रिशिखरमारूढस्य मार्तण्डस्य झटिति चक्षुषा मण्डलदर्शनात् । एव घ्राणश्रोत्रे अपि दूरादेव गन्धशब्दान्गृह्णीतः । एवं सत्यपि तत्तच्छरीरावच्छिन्नप्रदेशेषु तत्तज्जीवकर्मफलभोगाय वृत्तिलाभो भवतीति । अत्रोच्यते—इन्द्रियाणां सर्वगतत्वमयुक्तम् । कल्पनागौरवात् । देहावच्छिन्नैर्वृत्तिमद्भिरिन्द्रियैरेवाशेषव्यवहारसिद्धौ किमनया सर्वगतत्वकल्पनया । किंच श्रुतिरुत्क्रान्तिगत्यागतीर्जीवस्य प्रतिपादयति ताश्च सर्वगतस्य जीवस्य न मुख्याः संभवन्ति । अतो ह्यमुख्यत्वसिद्ध्यर्थमिन्द्रियोपाधिः स्वीकृतः । यदि सोऽप्युपाधिः सर्वगतः स्यात् । कुतस्तर्ह्युत्क्रान्त्यादयोऽमुख्याः संभवेयुः । तस्मादसर्वगतान्येवेन्द्रियाणि । मध्यमपरिमाणेष्वेवैतेष्वदृश्यत्वविवक्षया सूत्रकारेणाणुशब्दः प्रयुक्तः । तदुक्तं भाष्यकारैः—अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वम् । कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गादिति । तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इति सिद्धम् ॥ ७ ॥ ( ३ )

## श्रेष्ठश्च ॥ ८ ॥ ( ४ )

मुखबिले संचरन्नुच्छ्वासकारी वायुर्मुख्यः प्राणः । स चेतरप्राणवद्ब्रह्मविकार इत्यतिदिशति । मुख्यप्राणो जायते न वेति विशये मुख्यप्राण इन्द्रियवन्न जायते । कुतः ।

नासदासीदिति ब्रह्मसूक्ते–' आनीदवातं स्वधया तदेकम् ' [ ऋ० सं० मं० १० अ० ११ सू० १२९ ] इति सृष्टेः प्रागानीदिति प्राणव्यापारश्रवणादिति प्राप्ते ब्रूमः । आनीच्छब्दो हि न प्राक्सृष्टेः प्राणसद्भावं सूचयति । अवातमिति तन्निषेधात् । तर्ह्यानीदित्यस्य का गतिः । आनीदिति केवलब्रह्मसत्तापरं न तु प्राणस्यानुत्पत्तिपरमित्यवगच्छ ' सदेव सौम्येदमग्र आसीत् ' [ छा० ६ । २ । १ ] इत्यादिभिः सृष्टिप्रागवस्थाप्रतिपादकश्रुत्यन्तरैः समानार्थत्वात् । ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ' [ मुण्ड० २ । १ । ३ ] इति श्रुत्या स्पष्टं प्राणोत्पत्तेराम्नानात् । ' अप्राणो ह्यमनाः शुभ्रः ' [ मुण्ड० २ । १ । २ ] इत्यादिश्रुत्या जगदुपादानस्य ब्रह्मणः प्राणादिसमस्तविशेषविरहस्य दर्शितत्वाच्च । तस्मादिन्द्रियवत्प्राणो जायते । श्रेष्ठ इति शब्दो मुख्यप्राणवाची । ' प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ' [छा० ५ । १।१ ] इति श्रुतेः । निषेककालादारभ्य तस्य वृत्तिलाभाज्ज्येष्ठत्वम् । नचेत्तस्य तथा वृत्तिलाभः स्यात्तर्हि योनौ निषिक्तं शुक्रं न प्ररोहेत् । चक्षुरादीनां तु संस्थानविशेषोत्पत्त्यनन्तरं वृत्तिलाभात्कनीयस्त्वम् । प्राणस्य श्रेष्ठत्वं च गुणाधिक्यात् । ' न वै शक्ष्यामस्त्वदृते जीवितुम् ' [ बृ० ६ । १ । १३ ] इति श्रुतेः ॥ ८ ॥ [ ४ ]

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

स पुनर्मुख्यः प्राणः किं स्वरूप इतीदानीं विचार्यते । बाह्यवायुरेव वेणुरन्ध्रवन्मुखच्छिद्रे प्रविश्यावस्थितो नाम्ना प्राण इति व्यपदिश्यते । न तु प्राणो नाम किंचित्तत्त्वान्तरम् । कुतः । ' यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः ' इति श्रुतेः । अथवा पञ्जरस्था बहवः पक्षिणो यथा स्वयं चलन्तः पञ्जरमपि चालयन्ति । तथैकादशाक्षाणि स्वस्वव्यापारेण देहं चेष्टयन्ते । तत्र देहचालनाख्यो योऽयं सर्वेन्द्रियसाधारणो व्यापारः स प्राणो भविष्यति । तथा च सांख्यैरुक्तम्—'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ' [ सां० का० २९ ] इति । तस्मान्न तत्त्वान्तरं प्राण इति प्राप्ते ब्रूमः । न वायुः प्राणो नापि क्रियाकरणव्यापारः । कुतः । पृथगुपदेशात् ।

' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापश्च पृथ्वी सर्वस्य धारिणी ' [ मुण्ड० २ । १ । ३ ] इत्यादौ वायुकरणाभ्यां प्राणस्य पृथगुपदेशात् । कथंतर्हीयं श्रुतिः ' यः प्राणः स वायुः' इति । उच्यते—वायुरेवाध्यात्ममापन्नः पञ्चवृत्तिविशेषात्मनाऽवतिष्ठमानो हि प्राण इति भण्यते न तत्त्वान्तरं नापि वायुमात्रमतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते इति भाष्यकृत आहुः । विवरणोपादास्तु ' प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति' इति श्रुत्यन्तरे चतुष्पाद्ब्रह्मोपासनप्रसङ्गेनाऽऽध्यात्मिकप्राणस्याऽऽधिदैविकवायोश्चानुग्राह्यानुग्राहकरूपेण विभेदः स्पष्टमेव निर्दिष्टः । अतो ' यः प्राणः स वायुः ' इत्येकत्वश्रुतिः कार्यकारणयोरभे-

दवृत्त्या नेतव्या । तस्मात्तत्त्वान्तरं प्राणा इत्याहुः । यत्तु सांख्यैरुक्तं तदसत् । इन्द्रियाणां समान्यवृत्त्यसंभवात् । पक्षिणां तु चलनान्येकविधानि पञ्जरचालनस्यानुकूलानि भवन्ति । न चेन्द्रियाणां दर्शनश्रवणमननादिव्यापारा एकविधाः । अतो न देहचालनानुकूलास्तस्मात्सांख्यमतमनादेयम् ॥ ९ ॥

अथेदानीं प्राणस्य जीववत्स्वातन्त्र्यप्रसङ्गं वारयति—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्वातन्त्र्यनिरासार्थः । यथा चक्षुरादीनि जीवस्योपकरणानि तद्वन्मुख्योऽपि प्राणो राजमन्त्रिवज्जीवस्योपकरणभूतो न स्वतन्त्रः । कुतः । तत्सहशिष्ट्यादिभ्यः । तैश्चक्षुरादिभिः सह प्राणः शिष्यते । प्राणसंवादादिषु समानधर्माणां च सह शासनं युक्तम् । बृहद्रथंतरादिवत् । आदिपदेन संहतत्वाचेतनत्वादीनामस्वातन्त्र्यहेतूनां संग्रहः ॥ १० ॥

ननु चक्षुरादिवत्प्राणस्य जीवं प्रति करणभावेऽभ्युपगम्यमाने तेषां रूपादिविषयवत् प्राणस्यापि विषयोऽभ्युपेयः स्यात् । स तु न दृश्यते । पूर्वं कार्यवशादेकादशैव करणानीति प्रतिपादितम् । तत्कथं विषयाभावात्प्राणस्यापि कारणत्वमत आह—

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

मुख्यप्राणस्य चक्षुरादिवत्करणत्वं नाभ्युपगम्यते किं तर्हि राजमन्त्रिवज्जीवस्योपकरणत्वमभ्युपेयते । तथाचाकरणत्वाच्चक्षुरादितुल्यकार्याभावेऽपि न दोषः । नचैतावता कार्याभावः । सर्वेन्द्रियधारणत्वाद्यसाधारणकार्यवत्त्वस्य सत्त्वात् । तथा हि दर्शयन्ति श्रुतयः— ‘ अथ ह प्राणा अहंश्रेयसे[१] व्यूदिरे[२] ’ [ छा० ५ । १ । ६ ] इत्युपक्रम्य ‘ यस्मिन्व उत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः ’ इति चोपन्यस्य ‘ तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि ’ [ प्र० २ । ३ ] इति । ‘ यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेवैतच्छुष्यति ’ [ बृ० १ । ३ । १९ ] ‘ तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति ’ [ छा० १ । २ ९ ] इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति । ‘ कस्मिन्खल्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत[३] ’ [ प्र० ६ । ३ । ४ ] इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ ( ५ )

इतश्चास्ति मुख्यप्राणस्य कार्यविशेषः । यस्मादयं पञ्चवृत्तिः श्रुतिषु व्यपदिश्यते । तत्र दृष्टान्तः—मनोवदिति । यथा मनसः श्रोत्रादिनिमित्ताः शब्दादिविषयाः पञ्च वृत्तयः

१ क. अह९श्रे० । २ क. ‘सेविवादि’ । ३ क. ‘स्मिन्नुत्क्रा’ ।

सिद्धाः । न तु ' कामः संकल्पः ' ] बृ० १ । ५ । ३ ] इत्याद्याः परिगृह्यन्ते पञ्च-
ख्यातिरेकात् । यथा पञ्चवृत्तिकं मन एवं प्राणोऽपानो व्यान उदानः समानश्चेति पञ्च-
त्तिकः प्राणः । प्राग्वृत्तिरुच्छ्वासादिकर्मा प्राणः । अत्रागवृत्तिर्निश्वासादिकर्माऽपानः । व्यान-
तयोः संधिवीर्यवत्कर्महेतुः । उदान ऊर्ध्वगतिरुत्क्रान्त्यादिहेतुः । समानः समं सर्वेष्वङ्गेषु
सं नयतीत्येवं पञ्चवृत्तिः प्राणः । जीवोपकरणत्वमपि प्राणस्य मनोवदिति योजनीयम्
१२ ॥ ( ५ )

## अणुश्च ॥ १३ ॥ ( ६ )

मुख्यप्राणोऽयं विभुः सूक्ष्मो वेति विशये विभुरिति तावत्प्राप्तम् । कुतः । सर्वव्यापि-
श्रुतेः । श्रुतिश्च—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽ-
न सर्वेण ' [ बृ० १ । ३ । २२ ] इति । तस्माद्व्यापी प्राण इति प्राप्ते ब्रूमः-
धिदैविकस्य हिरण्यगर्भप्राणस्य समष्टिरूपेण व्यष्टिरूपेण चावस्थानाद्विभुत्वमस्तु । 'वायु-
। व्यष्टिर्वायुरेव समष्टिः' [बृ०३ । ३ । २ ] इति श्रुतेः । तदेव विभुत्वं ' समः प्लुषिणा'
बृ० १ । ३ । २२ ] इत्यादिश्रुतावुपासनार्थं प्रपञ्चितम् । आध्यात्मिकस्तु प्राण
न्द्रियवददृश्यः परिच्छिन्नश्च । आध्यात्मिकस्य व्यापित्व उत्क्रान्तिगत्यागतयो नोपपद्येरन् ।
त्चोत्क्रान्तौ पार्श्वस्थैरनुपलभ्यमानत्वात्सूक्ष्मः । तस्मात्प्राणः परिच्छिन्नः ॥ १३ ॥ ( ६ )

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

वागादीनीन्द्रियाणि स्वस्वविषये किं स्वातन्त्र्येण प्रवर्तन्त आहोस्वित्स्वाधिष्ठातृदेवता-
तन्त्राणीति विशये स्वकार्यशक्तियोगात्स्वातन्त्र्येणैव प्रवर्तन्ते । तत्तद्देवताधिष्ठितानां
णानां प्रवृत्तावभ्युपगम्यमानायां तत्तद्देवताजन्यस्य भोगस्य तत्तद्देवतानामधिष्ठात्रीणां
गप्राप्तौ जीवस्य भोक्तृत्वं न स्यात् । इष्टापत्तौ भोगाभावाच्छरीरमुच्छिद्येतेति प्राप्ते ब्रूमः ।
ोतिराद्यधिष्ठानं त्विति । तुशब्दः शङ्कानिरासार्थः । अधिष्ठीयत इत्यधिष्ठानं कर्मणि
ट् । ज्योतिरग्निः । अग्न्याद्यधिष्ठात्रीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वस्वकार्ये
र्तेत इति प्रतिज्ञा । कुतः । तदामननात् । तस्य ज्योतिराद्यधिष्ठितत्वस्याऽऽमननात् ।
अग्निर्वाग्भूत्वा मुख प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत् ' [ ऐ०२ । ४ ]
यादौ वागादीनामग्न्याद्यनुगृहीतत्वं श्रूयते । स्मृतावपि—

वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ' ॥

इत्यादिकायां स्मर्यते ।

अतो देवपरतन्त्रा चेन्द्रियप्रवृत्तिः । तस्मादधिष्ठातृदेवताधीनैवेन्द्रियाणां प्रवृत्तिः ॥ १४ ॥

ननु अग्न्यादिदेवतानामधिष्ठात्रीणामिन्द्रियप्रवर्तकत्वे तासामेव भोक्तृत्वप्रसङ्गो न शारीरस्येति शङ्कायां प्राप्तायामुत्तरमाह—

**प्राणवता शब्दात् ॥ १५ ॥**

प्राणशब्देनेन्द्रियाण्युच्यन्ते । स्वस्वामिसंबन्धे च मतुप् । प्राण उपलक्षणार्थः । प्राणवता कार्यकारणसंघातस्वामिना शारीरेणैव प्राणानां संबन्धः श्रुतेरवगम्यते शब्दात् । तथाहि श्रुतिः—' अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम् ' [ छा० ८ । १२ । २४ ] इत्येवमादिका शारीरेणैव प्राणानां संबन्धं श्रावयति । देवताधिष्ठितं घ्राणं गन्धज्ञानमात्रार्थम् । शारीरस्य तु तन्निमित्तो भोग इत्यर्थः । अधिष्ठातॄणामेव भोक्तृत्वे विरुद्धविक्रियत्वं प्रसज्जेत । अतः शारीर एक एव भोक्ता ॥ १५ ॥

**तस्य च नित्यत्वात् ॥ १६ ॥ ( ७ )**

तस्य शारीरस्यास्मिञ्शरीरे नित्यत्वान्नित्यसंनिहितत्वाच्च भोक्तृत्वं न देवतानाम् । तासां तत्र पुण्यपापलेपाभावात् । ' न ह वै देवान्पापं गच्छति ' [ बृ० १ । ५ । २० ] इति श्रुतेः । ता हि देवताः परस्मिन्नैश्वर्यपदेऽवतिष्ठमानाः क्षुद्रे मनुष्यादिदेहे भोगं न प्रतिलब्धुमर्हन्ति । देवतादेहेषु परमभोगस्य सिद्धत्वात् । तस्मात्सतीष्वप्यधिष्ठात्रीषु देवतासु न जीवस्य भोक्तृत्वमपगच्छति । करणपक्षस्यैव ता न भोक्तृपक्षस्य । तस्माज्जीव एव भोक्ता देवतास्तु करणाधिष्ठात्र्य एवेति सिद्धम् ॥ १६ ॥ ( ७ )

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥**

मुख्य एकः प्राणोऽन्ये चैकादश प्राणा इति प्रागुक्तम् । तत्रेत्थं संशयः—किं मुख्यस्यैव प्राणस्यापानादिवद्वागादयो वृत्तिभेदाः किं वा तत्त्वान्तराणीति । मुख्यस्यैवेतरे वृत्तिभेदा इति तावत्प्राप्तम् । वागादीन्द्रियाणि मुख्यप्राणस्य वृत्तयो भवितुमर्हन्ति । कुतः । तेषां प्राणरूपत्वश्रवणात् । तथाहि श्रुतिः—' हन्तास्यैव सर्वे रूपमसामेति । त एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति' । [बृ०१।५।२१] एवं प्राप्ते ब्रूमः । श्रेष्ठान्मुख्यप्राणादन्यत्र मुख्यप्राणं वर्जयित्वाऽवशिष्टा एकादश प्राणा इन्द्रियाण्युच्यन्ते । कुतः । तद्व्यपदेशात् । श्रुतौ तेषामिन्द्रियत्वाभिधानादित्यर्थः । ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' [ मु० २ । १ । ३ ] इति श्रुतौ प्राणस्येन्द्रियाणां च पृथङ्निर्देशात् प्राणादिन्द्रियाणां तत्त्वान्तरत्वम् । प्राणशब्द इन्द्रियेषु भाक्तः—' तमुत्क्रामन्तं० सर्वे प्राणा अनूत्क्रामन्ति [ बृ० ४ । ४ । २ ] इत्यादौ । ननूदाहृतश्रुतौ मनसोऽपि पृथङ्निर्देशादिन्द्रियेभ्यस्तस्यापि तत्त्वान्तरत्वमस्त्विति चेन्न । ' मनःषष्ठानीन्द्रियाणि ' [ भ० गी०

९ । ७ ] इत्यादिस्मृतिषु मनस इन्द्रियत्वप्रसिद्धेः । ब्राह्मणपरिव्राजकन्यायेन तस्येन्द्रिय-
ष्ठत्वख्यापनाय पृथङ्निर्देशो न तत्त्वान्तरत्वसिद्धयर्थः । प्राणे तु श्रुतिस्मृत्योः क्वापीन्द्रि-
त्वव्यपदेशाभावात्तत्त्वान्तरत्वमेवेति ॥ १७ ॥

## भेदश्रुतेः ॥ १८ ॥

भेदेन च वागादिभ्यः प्राणः श्रूयते 'ते ह वाचमूचुः' [ बृ० १ । ३ । २ ]
त्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुक्त्वास्य वागादिप्रकरणमुपसंहृत्य 'अथ हेममासन्यं
णमूचुः' [ बृ० १ । ३ । ७ ] इत्यसुरविध्वसिनो मुख्यस्य प्राणस्य पृथगुप-
मात् ॥ १८ ॥

## वैलक्षण्याच्च ॥ १९ ॥ ( ८ )

वैलक्षण्यं तु श्रुतिषूपपादित सुप्तेषु वागादिषु मुख्य एको जागर्ति स एवैको मृत्युनाऽ-
प्त आप्ता इतरे । तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपातनहेतुत्व नेन्द्रियाणामेवंजातीको भूयाल्लँक्षणभेदः । यदुक्त 'त एतस्यैव सर्वे रूपमभवन्' [ बृ० १ । ५ ।
१ ] इति श्रुतेः प्राण एवेन्द्रियाणीति । तदयुक्तम् । तत्रापि पौर्वापर्यालोचनाद्भेदप्र-
तेः । तथाहि—'वदिष्याम्येवाहमिति वाग्दध्रे' [ बृ० १ । ५ । २१ ] इति वागा-
नीन्द्रियाण्यनुक्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे' 'तस्माच्छ्राम्यत्येव वाक्' इति
श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय 'अथेममेव नाऽऽप्नोद्योऽय मध्यमः
णो यः सचरंश्च न व्यथते' [ बृ० १ । ५ । २१ ] इति पृथक्प्राण श्रमरूपेण मृत्यु-
ऽनभिभूतमनुत्क्रामति 'अय वै नः श्रेष्ठः' [ बृ० १ । ५ । २१ ] इति च श्रेष्ठता-
स्यावधारयति । तद्रूपभवन तु तदधीनचेष्टत्वमे न तत्स्वरूपापत्तिरिति मन्तव्यम् ।
स्मात्तत्त्वान्तराणि प्राणादिन्द्रियाणीति सिद्धम् ॥ १९ ॥ ( ८ )

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

'सदेव सौम्येदमग्र आसीत्' [ छा० ६ । २ । १ इति सतो ब्रह्मणस्तेजोबन्नानां
ष्टिमुक्त्वाऽथ 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य
मरूपे व्याकरवाणीति तासा त्रिवृत त्रिवृतमेकैकां करवाणीति' [ छा० ६ । ३ ।
] विषयः । तत्र सशयः—नामरूपव्याकरणं किं जीवकर्तृकमीश्वरकर्तृकं वेति । ईश्व-
ण पञ्चभूतेषु सृष्टेषु भौतिकयोः श्रूयमाणदृश्यमानयोर्महीधरादिनामरूपयोर्जीव एव स्रष्टा
वितुमर्हति । कुतः, अनेन जीवेनाऽऽत्मनेति विशेषणादिति प्राप्तेऽभिधीयते । तुः शङ्का-
रासार्थः । जीवेनानुप्रविश्येति प्रवेशेनैव जीवोऽन्वेति संनिहितत्वात् । जीवेन व्याकरवा-
णीत्यव्यवहितान्वयः स्यात् । नहि जीवस्य नानाविधनामरूपनिर्माणशक्तिरस्ति । ईश्वरस्य

ऽस्तु शक्तियुक्तत्वात् । ‘ पराऽस्य शक्तिर्विविधैव श्रूयते ’ [ श्वे० ६ । ८ । ] इति श्रुतेः। किं च व्याकरवाणीत्युत्तमपुरुषोऽपीश्वरपक्षे समञ्जसः । संज्ञाया नाम्नो मूर्ते रूपस्य च क्लृप्तिर्व्याकरणं त्रिवृत्कुर्वतः परमेश्वरादेव भवितुमर्हति । कुतः । उपदेशात् । ‘ आकाशो ह वै नामरूपयोर्निर्वहिता ’ [ छा० ८ । १४ । १ ] इत्यादिश्रुतिष्वाम्नानात् । त्रिवृत्करणेन पञ्चीकरणमुपलक्षणीयमिति स्मृतिकारा आहुः । तस्मादीश्वरकर्तृकमेव नामरूपव्याकरणं न जीवकर्तृकमिति सिद्धम् ॥ २० ॥

**मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥**

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादि कार्यं यथाशब्द निष्पद्यते । तथाहि श्रुतिः—‘अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ’ [ छा० ६ । ५ । १ ] इति । एवमितरयोरप्तेजसोर्यथाशब्दं कार्यं ज्ञेयम् । मूत्रं लोहितं प्राणश्चापां कार्यम् । अस्थि मज्जा वाक् तैजस इति । अत्रान्नापतेजांसि मनःप्राणवाचामुपष्टम्भकान्येव नोपादानानीति स्मृतिकारा आहुः ॥ २१ ॥

ननु त्रयाणामपि तेजोबन्नाना त्रिवृत्कृतत्वाविशेषे किंकृतस्तर्ह्ययं विशेषव्यपदेशो भवतीद तेज इमा आप इय पृथ्वीति कथमिदमन्नस्याशितस्य कार्यं मासादि । इदमपां मूत्रादि। इद तेजसोऽस्थ्यादीति तत्राऽऽह—

**वैशेष्यात्तद्वादस्तद्वादः ॥ २२ ॥ ( ९ )**

तुशब्दश्चोद्यनिरासाय । विशेषस्य भावो वैशेष्य भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे पृथिव्यादिभूयस्त्वात्तद्वादः पार्थिवादिव्यपदेश इत्यर्थः । तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥ २२ ॥ ( ९ )

**इति श्रीलक्ष्मीनरहरिसूरिसूनुना हरिदीक्षितेन विरचितायां ब्रह्मसूत्रवृत्तौ द्वितीयोऽध्यायः ।**

---

अथ तृतीयोऽध्यायः ।

---

यस्मिन्यन्मायया दृश्यमेतद्यदनुविद्यया ।
कल्पितं सत्यवद्भाति तस्मै नृहरये नमः ॥

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

द्वितीयेऽध्याये वेदान्तैः प्रतिपादिते ब्रह्मदर्शने श्रुतिस्मृतिन्यायविरोधोऽनूद्य परिहृतः परपक्षाणां चानपेक्ष्यत्वमुपपादितम् । अथेदानीं सम्यग्दर्शनाय साधनविचारोऽस्मिन्नध्याये

क्रियते प्रसङ्गागतं च किमप्यन्यन्निरूप्यते गुणोपसंहारादि । तत्र तावत्प्रथमे पादे पञ्चाग्नि-विद्यामाश्रित्य वैराग्यहेतोर्जीवस्य देहान्तरगतिर्विचार्यते । 'तस्माज्जुगुप्सेत' [ छा० ५ । १० ] इति पञ्चाग्निविद्यान्ते श्रवणात् । तत्र देहाद्देहान्तरं गच्छञ्जीवः किं शरीरारम्भकैर्भू-तसूक्ष्मैरवेष्टितो गच्छति वेष्टितो वा । किं तावत्प्राप्तम् । भूतसूक्ष्मैरसंवेष्टित इति । कुतः । भूतसूक्ष्माणां सर्वत्र सुलभत्वेन सह नयनस्य निष्प्रयोजनत्वात् । तस्मादसंपरिष्वक्तो यातीत्येवं प्राप्तेऽभिधीयते । तदन्तरप्रतिपत्तौ देहान्तरप्राप्तौ देहबीजभूतैर्भूतसूक्ष्मैः संपरिष्वक्तो वेष्टितो रंहति गच्छति । भूतमात्राणां सर्वत्र सुलभत्वेऽपि देहबीजभूतानां तासां न सौल-भ्यम् । कुतः । प्रश्ननिरूपणाभ्याम् । पञ्चमी द्विवचनम् । प्रश्नस्तावदित्थं—'वेत्थ यथा पञ्च-म्यामाहुतावापः पुरुषवचसो भवन्ति' [ छा० ५ । ३ । ३ । ] इति । निरूपणं प्रतिवच-नम् । द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाऽऽहुतीर्दर्शयित्वा 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । अस्यार्थः—द्युलोकपर्जन्यपृथिवीपुरुषयो-षितः पञ्च पदार्था उपासनायामग्नित्वेन परिकल्पितास्तेष्वग्निषु स्वर्गं गच्छन् पुनरागच्छंश्च जीव आहुतित्वेनोक्तः । इष्टापूर्तकारी जीवः स्वर्गमारुह्योपभोगेन कर्मणि क्षीणे सति पतित्वा वृष्टिरूपेण भूमिं प्राप्यान्नद्वारेण पुरुषं प्राप्य रेतोद्वारेण योषिति प्रविश्य शरीरं गृह्णाति । ततः पुंशब्दोपलक्षितानि देहबीजानि पञ्च भूतान्याप इत्युच्यन्ते । ता आपो द्युलोकादि-भ्योऽवतरन्त्यः पञ्चमे स्थाने शरीरत्वं प्राप्य पुरुषशब्दवाच्या भवन्तीति । तस्मादद्भिः संवेष्टितो जीवो रंहतीति गम्यते ॥ १ ॥

ननूदाहृतश्रुतावब्योग एव गम्यते न भूतान्तरयोगस्तत्कथं प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीत्यत आह—

### त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तुः शङ्कानिरासार्थः । अपां त्रिवृत्करणश्रुतेस्त्र्यात्मकत्वात्तेजोऽन्नात्मकत्वात्तास्वा-रम्भिकास्वभ्युपगतासु तेजोऽन्ने अप्यवश्यमभ्युपगन्तव्ये भवतः । तदुत्पन्नं शरीरमपि त्र्यात्म-कमेव । न केवलाभिरद्भिरारब्धुं शक्यते । नन्वेवं सति 'आपः पुरुषवचसो भवन्ति' इति केवलमपामेव कथं ग्रहणं तत्राऽऽह——भूयस्त्वादिति । इतरापेक्षयाऽपां बाहुल्यादि-त्यर्थः । दृश्यते च शुक्रशोणितलक्षणे देहबीजेऽपि द्रवद्रव्यबाहुल्यं देहे लोहितादिबाहुल्यं च । कर्माणि च देहारम्भकेऽग्निहोत्रादौ सोमाज्यपयआदिद्रवद्रव्यबाहुल्यम् । अत एवाऽऽपः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इत्युक्तम् । तस्मादपां बाहुल्यादप्शब्देन सर्वेषां देहबीजानामुपादानं युक्तम् ॥ २ ॥

### प्राणगतेश्च ॥ ३ ॥

किं च प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति

प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' [ बृ० ४ । ४ । २ ] इति । प्राणानां निराश्रयाणां गमनासंभवात्तदाश्रयत्वेन भूतसूक्ष्मगमनमावश्यकमित्यर्थः ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

इन्द्रियाणि देहान्तरप्रतिपत्तौ जीवेन सह गच्छन्ति न वेति विशये न गच्छन्तीति तावत्प्राप्तम् । कुतः । अग्न्यादिगतिश्रुतेः । तथा हि श्रुतिर्मरणकाले वागादयः प्राणा अग्न्यादीन्गच्छन्तीति दर्शयति ' यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः [ बृ० ३ । २ । १३ ] इति । इति चेन्न । कुतः । भाक्तत्वात् । वागादीनामग्न्यादिगमनश्रुतेर्गौणत्वात् । प्राणगमनव्यतिरेकेण जीवस्य देहान्तरे भोगासंभवात् ' प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' इति श्रुत्यन्तरसिद्धत्वाच्च । वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते । ' ओषधीर्लोमानि वनस्पतीन्केशाः ' [ बृ० ३ । २ । १३ ] इति तत्रतत्राऽऽम्नायते । नच लोमानि केशाश्च यथाक्रममोषधीर्वनस्पतींश्च गच्छन्तीति संभवति तद्वत् ।

' मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥

गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ' [ भ० गी० १५ । ७–८ ] इति स्मृतिरत्रानुसंधेया । तस्मादिन्द्रियाणि जीवेन सह गच्छन्तीति सिद्धम् ॥ ४ ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

ननु द्युपर्जन्यपृथिवीपुरुषयोषित इति पञ्चाग्नयो पञ्चानामाहुतीनां श्रद्धासोमवृष्ट्यन्नरेतोलक्षणानामाधारत्वेनाधीताः । तत्र प्रथमेऽग्नावपामश्रवणादनुपपन्नमेतत् ' पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' इति । तथाहि—' असौ वाव लोको गौतमाग्निः ' [ छा० ५ । ४ । १ ] ' तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति ' [ छा० ५ । ४ । २ ] इति श्रुतौ श्रद्धा हौम्यद्रव्यत्वेनाधीता न तत्राऽऽपो हौम्यद्रव्यत्वेन श्रुताः । श्रद्धा च नाम प्रत्ययविशेषः । तत्कथमाहुतीनामब्बाहुल्यमुपपद्येत । प्रथमेऽग्नौ श्रुता श्रद्धां परित्यज्याश्रुता आपः परिकल्प्यन्त इति । नैष दोषः । हि यस्मात्प्रथमेऽप्यग्नौ ता एवाऽऽपः श्रद्धाशब्देनाभिप्रेयन्ते । कुतः । उपपत्तेः । एवं प्रश्नप्रतिवचनयोरनाकुलमेकवाक्यत्वमुपपद्यते । इतरथाऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता च न स्यात् । आपश्च श्रद्धाशब्दवाच्या भवन्ति । ' श्रद्धा वा आपः ' [ तै० सं० १ । ६ । ८ । १ ] इति श्रुतेः । श्रद्धापूर्वककर्मसमवायादप्सु श्रद्धाशब्द उपपद्यते । मञ्चशब्द इव पुरुषेषु । तस्माच्छ्रद्धाशब्देनाऽऽप एवाभिप्रेता इति सिद्धम् ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥**

स्यादेतत् । प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषशब्दवाच्यत्वं प्राप्नुयुः । यदि तावज्जीवेन संपरिष्वक्ता रंहेयुः । तच्च नास्ति । कुतः । अश्रुतत्वात् । अस्मिन्वाक्येऽपामिव जीवानामश्रुतत्वादिति । नैषदोषः । कुतः । इष्टादिकारिणां प्रतीतेः । ' अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति ' [ छा०५।१०।३ ] इत्युपक्रम्येष्टादिकारिणां धूमादिना पितृयाणमार्गेण चन्द्रप्राप्तिं कथयति श्रुतिः—'आकाशाच्चन्द्रमसमेष सोमो राजा' [छा० ५।१०।४] इति । त एवेहापि प्रतीयन्ते । ' तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति [ छा० ५ । ४ । २ ] इति श्रुतिसाम्यात् । तेषां चाग्निहोत्रदर्शपूर्णमासादिसाधनभूता दधिपयःप्रभृतिष्वापः सन्ति । द्रवद्रव्यत्वात् । ता आहवनीये हुताः सूक्ष्मा आहुत्योऽपूर्वरूपाः सत्यस्तानिष्टादिकारिण आश्रयन्ते । तेषां च शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति ' असौ स्वर्गाय लोकाय स्वाहा ' इति । तत आहुतिरूपा आप इष्टादिकारिणो जीवान्परिवेष्टयामु लोकं फलभोगाय नयन्ति । ता एव श्रद्धां जुह्वतीत्यभिप्रेताः । तस्मादाहुतिमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलभोगायेति श्लिष्यते शेष इत्यर्थः ॥ ६ ॥

ननु फलभोगाय द्युलोकगमनमसगतम् । ' एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ' [ छा० ५ । १० । ४ ] इति ' ते चन्द्रं प्राप्यान्नं भवन्ति ' [ बृ० ६ । २ । १६ ] इति समानविषयश्रुत्यन्तरादन्नत्वश्रवणात् , देवैर्भक्षितानां फलभोगासंभवादित्याशङ्कयाऽऽह—

**भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥ (१)**

वाशब्दश्चोद्यनिरासार्थः । इष्टादिकारिणां यदुक्तमन्नत्वं तद्भाक्तं गोणम् । अन्यथा 'स्वर्गकामो यजेत' इत्यादिश्रुतिरुपरुध्येत । इष्टादिकारिणां स्वर्गभोगहानिश्च स्यात् । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ' [भ०गी०९।२१] इत्यादिस्मृतिविरोधश्च स्यात् । अन्नशब्दश्चोपभोगहेतुत्वसामान्यादनन्नेषूपचर्यमाणो दृश्यते । यथा विशोऽन्नं राज्ञा पशवोऽन्नं विशामिति । तस्मादिष्टस्त्रीपुत्रभृत्यादिभिः स्वस्य गुणभावं गतैरिह यत्सुखमनु[भू]यते तेन या स्वस्य प्रीतिरुपजायते सा तस्यान्नम् । तथा स्वर्गे इष्टादिकारिभिर्यत्सुखमुपभुज्यते तदेव देवानामन्नमित्युच्यते न मोदकादिवच्चर्वण निगरण वाऽत्र विवक्षितम् । तथाच श्रुतिः— 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृत दृष्ट्वा तृप्यन्ति' [ छा० ३ । ६ । १ ] इति देवानां चर्वणादिव्यवहारं वारयति । किंचानात्मवित्त्वादपीष्टादिकारिणां देवोपभोग्यत्वमुपपद्यते । तथाहि श्रुतिर्दर्शयति—' अथ योऽन्यां देवतामुपास्तेऽन्योऽसावहमन्योऽस्मीति न स वेद यथा पशुरेवं स देवानाम् ' [ बृ० १ । ४ । १० ] इति । पशुवदिहामुत्र च

देवानुकूलाचरणेन प्रीतिसाधनत्वाद्भोग्यत्वं भोग्यत्वाच्चान्नत्वोपचारः । तस्माद्रंहति संपरि ष्वक्त इति सिद्धम् ॥ ७ ॥ (१)

## कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

स्वर्गमुपभुज्य ततोऽवरोहन्पुरुषो निरनुशय इहाऽऽयाति किंवा सानुशय इति संशयः। जीवमनुशेत इत्यनुशयः कर्म तद्वाननुशयवान्। अनुशयरहित एवावरोहति जीव इति तावत्प्राप्तम्। कुतः। 'यावत्संपातमुषित्वाऽथैतमेवाध्वान पुनर्निवर्तन्ते' [ छा० ५। १०। ५ ] इति श्रुतेः। नच स्वर्गादवरोहतोऽनुशयः संभवति। अनुशयफलस्य सर्वस्य स्वर्ग एवोपभुक्तत्वात्। संपतत्यनेन कर्मणा स्वर्गमिति संपात इति स्वर्गभोगसाधन-भूतं कर्म संपातमनतिक्रम्य यावत्सपातम्। नि.शेषकर्मफलं भोक्तु तत्रोषित्वेत्युक्तश्रुतेरर्थः। तस्मात्कर्मशेषरहितोऽवरोहतीति प्राप्तेऽभिधीयते स्वर्गार्थमनुष्ठितस्य कर्मणः साकल्येनोप-भोगेऽप्यभुक्तानि संचितानि पुण्यपापानि बहून्यस्य विद्यन्ते। अन्यथा सद्यः समुत्पन्नस्य धर्माधर्मरहितस्य बालकस्य सुखदुःखोपभोगो न स्यात्। अतः कृतात्यये स्वर्गार्थे कृतस्य कर्मणः फलभोगेनात्यये क्षये सत्यनुशयवाञ्जीवोऽवरोहति। कुतः। दृष्टस्मृतिभ्याम्। दृष्टं प्रत्यक्षम्। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचकर्मफलभूत उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति। श्रुतिश्च—'य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा शूद्रयोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकर-योनिं वा चण्डालयोनिं वा' [ छा० ५। १०। ७ ] इति। चरणशब्देनानुशयः सूच्यते। अभ्याशो ह यदित्यव्ययसमुदायस्य क्षिप्रत्वमर्थः। रमणीयचरणाः सुकृतकर्माणः कपूयचरणाः पापकर्माणः। सानुशयावरोहे स्मृतिरपि—वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रत्येक-कर्मफलमनुभूय ततः शेषेण विशिष्टदेशकालरूपायुःश्रुतवृत्तसुखमेधसो जन्म प्रतिपद्यन्त इति। तथाच भाष्यम्—यथा स्नेहभाण्डं रिच्यमान न सर्वात्मना रिच्यते। भाण्डानुसार्येव कश्चित्स्नेहविशेषोऽवतिष्ठते तथाऽनुशयोऽपीति। तस्मादनुशयशेषं पुरस्कृत्य संचितपुण्य-पापानुसारी स्वर्गादवरोहतीति फलितार्थः। अवरोहणं च यथेतम्। गमनसमये येन पथा गतं तद्यथेतम्। अनेव च। अवरोहण तद्विपर्ययेणेत्यर्थः। विस्तरस्तु भाष्यादव-गन्तव्य. ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

ननूदाहृतश्रुतौ चरणाज्जन्मापत्तिः प्रतीयते न तु कर्मणः। चरणकर्मणोर्भेदश्रवणात्। तथा च श्रुतिः 'यथाकारी यथाचारी तथा भवति' [ बृ० ४।४।५ ]। 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि'

[ तै० १ । ११ । २ ] इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत् । नैष दोषः । यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥९॥

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

ननु चरणस्याऽऽचारस्य न कर्मोपलक्षकत्वम् । मुख्यस्य चरणस्यैव साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति । अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम् । अन्यथाऽऽनर्थक्यमेव शीलस्य प्रसज्येतेति चेन्न । कुतः । तदपेक्षत्वात् । इष्टादिकर्मणां चरणसापेक्षत्वात् । न ह्याचारहीनः कर्मण्यधिकारी भवति ।

'आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं प्रजहत्यन्तकाले नीडं शकुन्ता इव जातपक्षाः' ॥
'शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ।'

इत्यादिस्मृतेश्च । तस्माच्चरणस्य स्वतन्त्रत्वाभावात्कर्मोपलक्षणत्वं युक्तमिति कार्ष्णाजिनेर्मतम् ॥ १० ॥

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ (२)**

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते । चरणमनुष्ठानं कर्मेत्यनर्थान्तरम् । इष्टादिकारिणि धर्मं चरतीति लोके प्रयोगदर्शनात् । आचारोऽपि धर्मविशेष एव । चरणकर्मगोर्भेदव्यपदेशस्तु ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्माद्रमणीयचरणाः सुकृतिनः कपूयचरणा दुष्कृतिन इति निर्णयः ॥ ११ ॥ ( २ )

**अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥**

इष्टादिकारिणां चन्द्रलोकप्राप्तिरभिहिता । ये त्वितरेऽनिष्टादिकारिणस्तेषां चन्द्रलोकप्राप्तिरस्ति न वेति संशयेऽस्तीति तावदाह । कुतः । चो हेतौ । यतोऽनिष्टादिकारिणामपि चन्द्रलोकप्राप्तिः श्रूयते । तथा च कापीतकिन आमनन्ति—'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' [ कौ० १ । २ ] इति । 'पञ्चम्यामाहुतौ' इत्याहुतिसंख्यानियमात्सर्वेषां चन्द्रलोकप्राप्तिरवश्यमभ्युपेयेति शङ्कासूत्राभिप्रायः ॥ १२ ॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । इतरेषां चन्द्रलोके गमनं नास्ति । भोगायैव हि तत्र गमनं न निष्प्रयोजनम् । इष्टादिकारिणामेव हि तत्र भोगो नानिष्टादिकारिणाम् । क्व तर्हि तेषां भोगस्तत्राऽऽह—इतरेषामनिष्टादिकारिणां संयमने यमलोके गत्वा पापकर्मानुरूपं दुःखमनुभूय पुनरवरोहः । एवंभूतौ तेषामारोहावरोहौ । कुतः । तद्गतिदर्शनात् । तथाहि नाचिकेतसं प्रति यमवचनरूपा श्रुतिः—

'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' ॥ [ का० २।६ ]

'वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्यत' [ ऋ० सं० १० । १४ । १ ] इति च श्रुत्यन्तरम् । न सांपराय इत्यस्यायमर्थः—सम्यगवश्यंभावेन परः परस्ताद्देहपातादयते गम्यत इति संपरायः परलोकः । तत्साधनं कर्म सांपरायः । स बालमविवेकिनं न प्रतिभाति । कीदृशं बालम् । वित्तनिमित्तेन मोहेन मूढम् । अत एव प्रमाद्यन्तम् । न केवलमज्ञः किं तु विपरीतबुद्धिरपि । यतोऽयमेव लोको नास्ति कुतः परलोक इति मानी मननशीलः । अतस्तदनुरूपमाचरन्पुनःपुनर्मे मम वशमापद्यते प्राप्नोतीति ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

अपि च मनुव्यासादयः शिष्टाः संयमने पुरे यमाधीनं कपूयकर्मविपाकं स्मरन्ति ॥ १४ ॥

## अपि च सप्त ॥ १५ ॥

स्मरन्तीत्यनुषज्जते । अपि च सप्त नरका रौरवमहारौरववह्निवैतरणीकुम्भीपाकतामिस्रान्धतामिस्राख्याः पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः । ताननिष्टादिकारिणः प्राप्नुवन्ति कुतस्ते चन्द्रलोकं प्राप्नुयुरित्यभिप्रायः । यत्तु कश्चिदाह रौरवादिभ्यः पञ्चभ्यः पापिन उत्तिष्ठन्ति तामिस्रान्धतामिस्राभ्यां नैवोत्तिष्ठन्तीति । तदसत् । तदुक्तकौण्ठरव्यश्रुतेः खपुष्पायमाणत्वात् ॥ १५ ॥

ननु विरुद्धमिदं पापकर्माणो यमायत्ता यातना अनुभवन्तीति । यतस्तेषु रौरवादिषु चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते । तत्कथं यम एवाधिष्ठातेति तत्राऽऽह—

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

चश्चोद्यनिरासे । तत्रापि रौरवादिष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वाभ्युपगमात् । यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारो न स्वतन्त्रा इति स्मरणान्न विरोधः ॥ १६ ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

इतोऽपि नानिष्टादिकारिणा चन्द्रलोकप्राप्तिः । तथा हि—पञ्चाग्निविद्यायां 'वेत्थ यथाऽसौ लोको न संपूर्यते' ( छा० ५ । ३ । ३ ) इत्यस्य प्रतिवचनावसरे श्रूयते—'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्ये-

तत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते ' [ छा० ५ । १० । ८ ] इति । तत्रैतयोः पथोरित्यस्यार्थकथनं विद्याकर्मणोरित्यनेन । एतयोः पथोरिति विद्याकर्मणोरिति विवक्षितमित्यर्थः । कुतः । प्रकृतत्वात् ' तद्य इत्थं विदुः ' [ छा० ५ । १० । १ ] इति या विद्या तया प्रतिपत्तव्यो देवयानः पन्थाः । ' इष्टापूर्ते दत्तम् ' [ छा० ५ । १० । ३ ] इति कर्म तेन प्रतिपत्तव्यः पितृयाणः पन्थाः कथितः । तत्रैतयोर्न कतरेण श्रुतम् । अयमर्थः—ये विद्यया साधनेन न देवयानेऽधिकृता नापि कर्मणा पितृयाने तेषामेव क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति । विद्याकर्ममार्गद्वयव्यतिरेकेण क्षुद्रजन्तुमार्गकथनादपि नानिष्टादिकारिणां चन्द्रलोकप्राप्तिरित्यर्थः । तुशब्देन ' चन्द्रमसमेव ते सर्वे गच्छन्ति ' इतिवाक्योत्थशङ्कानिरासः । सर्वशब्द इष्टादिकारिपर एवेत्यभिप्रायः ॥ १७ ॥

ननु ' पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' छा० ५ । ३ । ३ ] इत्याहुतिसंख्यानियमादेहावाप्तये सर्वेषां चन्द्रलोकगमनमावश्यकमत आह—

**न तृतीये तथोपलब्धेः ॥ १८ ॥**

तृतीये स्थाने नाऽऽहुतिसंख्यानियमोऽस्ति । कुतः । तथोपलब्धेः । ' जायस्व म्रियस्व ' [ छा० ५ । १० । ८ ] इत्यनेनाऽऽहुतिसंख्यानियमं विना देहजननोपलब्धेरित्यर्थः । अपि च ' पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' इति मनुष्यशरीरहेतुत्वेनाऽऽहुतिसंख्या संकीर्त्यते न कीटपतङ्गादिशरीरहेतुत्वेन । अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते । वाक्यभेददोषात् । तत्र येषामारोहावरोहौ संभवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति । अन्येषां तु विनैवाऽऽहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरभ्यत इति भाष्यम् ॥ १८ ॥

**स्मर्यतेऽपि च लोके ॥ १९ ॥**

अपि च स्मर्यते । अपि च लोके पुराणादौ स्मर्यते द्रोणधृष्टद्युम्नप्रभृतीनां चायोनिजत्वम् । तत्र च न संख्यानियमः । द्रोणादीनां योषिदधिकरणकाहुत्यभावात् । धृष्टद्युम्नादीनां तु योषित्पुरुषविषयाहुतिद्वयाभावात् । एवमनिष्टादिकारिणामप्याहुतिनियमाभावो ज्ञेयः । आहुतिनियमाभाव एवायं दृष्टान्तः ॥ १९ ॥

**दर्शनाच्च ॥ २० ॥**

अपि च जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे चतुर्विधे भूतग्रामे मैथुनधर्ममन्तरेण स्वेदजोद्भिजयोरुत्पत्तिदर्शनान्न । संख्यानियमः । इष्टादिकारिणामेव संख्यानियमो नान्यत्रेति भावः ॥ २० ॥

नन्वण्डजं जीवजमुद्भिज्जं चेति त्रैविध्यमेव भूतग्रामस्य श्रूयते । जीवजं जरायुजम् । कथ चातुर्विध्यमत आह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ ( ३ )

' आण्डजं जीवजमुद्भिज्जं च ' [ छा० ६ । ३ । १ ] इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः । संशोकजशब्दः स्वेदजजन्तुवाची । स्वेदजोद्भिज्जयोरुभयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात् । स्वेदजस्योद्भिज्जत्वेऽपि जङ्गमत्वेन पृथक्कृत्य स्थावरमुद्भिज्जशब्देनाभिधाय चातुर्विध्यनिर्देशस्याविरोध इति भावः ॥ २१ ॥ ( ३ )

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ ( ४ )

इष्टादिकारिणश्चन्द्रलोकमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् । तदवरोहप्रकारोऽधुना चिन्त्यते । तत्रेयमवरोहश्रुतिः—' अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति ' [ छा० ५ । १० । ७ ] इति । यथेतं यथा गतं तथेत्यर्थः । अत्र संशयः—किमवरोहन्त आकाशादिस्वरूपं प्रतिपद्यन्ते किं वाऽऽकाशादिसाम्यमिति । तत्र किं तावत्प्राप्तम् । आकाशादिस्वरूपमेव प्रतिपद्यन्त इति । कुतः । वायुर्भवतीत्यादौ भवतिशब्दात्तत्स्वरूपं गम्यते । एवमाकाशमित्यत्रापि । श्रुतिलक्षणयोः श्रुतिर्न्याय्या न लक्षणा । तस्मादाकाशादिस्वरूपं प्रतिपद्यन्त इति प्राप्ते ब्रूमः । आकाशादिसाम्यं प्रतिपद्यन्त इति साभाव्यापत्तिः । समानो भावो येषां ते सभावास्तेषां भावः साभाव्यं साम्यं तस्याऽऽपत्तिः प्राप्तिः सादृश्यापत्तिरित्यर्थः । कुतः । उपपत्तेः । अन्यस्यान्यसादृश्यमुपपद्यते यथा गोसादृश्यं गवयस्य न तु तादात्म्यमित्यर्थः । अत आकाशादितुल्यतापत्तिरेवात्राऽऽकाशादिभाव इत्युपचर्यत इति भाष्यम् ॥ २२ ॥ ( ४ )

## नातिचिरेण विशेषात् ॥ २३ ॥ ( ५ )

प्राग्व्रीह्यादिप्रतिपत्तेराकाशादिप्राप्तौ भवति संशयः—किं दीर्घकालं पूर्वसादृश्येनावस्थायोत्तरसादृश्यं गच्छन्त्युताल्पकालमिति । अविशेषादनियमप्राप्तावुच्यते—अल्पकालमेवाऽऽकाशादिसादृश्येनावस्थानम् । कुतः । विशेषात् ' त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ' इति व्रीह्यादिभावमभिधायानन्तरम् ' अतो वै खलु दुर्निष्प्रपतरम् ' [ छा० ५ । १० । ६ ] इति । तत्रैकस्य तकारस्य लोपश्छान्दसः । दुर्निष्प्रपततरमिति रूपम् । अस्माद्व्रीह्यादिभावाद्विलम्बेन निःसरणं भवतीत्यर्थः । दुर्निष्प्रपतरमिति न दुःखनिष्प्रपतनमुच्यते किं तु कालविलम्बमात्रम् । तदानीं शरीरानिष्पत्तेर्न दुःखस्य सुखस्य वा संभवोऽस्ति । तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥ २३ ॥ ( ५ )

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

आकाशादाविव व्रीह्यादौ न संश्लेषमात्रं किं तु व्रीह्यादिरूपेण मुख्यजन्म विवक्षितम् । जायन्त इति श्रवणात् । न च स्वर्गे सुकृतमनुभूयावरोहतः पापफलरूपस्य स्थावरजन्मनोऽसंभवः । तद्धेतोः पशुहिंसादेर्विद्यमानत्वात् । तस्मान्मुख्यं जन्मेति प्राप्ते ब्रूमः । अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संश्लेषमात्रमनुशायिनः प्रतिपद्यन्ते यथा पूर्वत्राऽऽकाशादौ संश्लेषमात्रं तद्वत् । कुतः । पूर्ववदभिलापात् । यथाऽऽकाशादिषु वृष्ट्यन्तेषु न कंचित्कर्मव्यवहार परामृशत्येवं व्रीह्यादिजन्मन्यपि । तस्मान्न विद्यतेऽत्रानुशायिनां सुखदुःखभोक्तृत्वम् । यत्र सुखदुःखभोक्तृत्वमस्ति तत्र कर्मव्यवहार श्रुतिः परामृशति रमणीयचरणाः कपूयचरणा इति । अत्र तदकीर्तनान्न व्रीह्यादिकमनुशायिनां भोगसाधनमिति । तस्मात्पुण्यकृतां चन्द्रलोकादवरोहतां पापफलं व्रीह्यादिरूपेण जन्म न युक्तम् ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

ननु पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म । तस्य तादृशमेव व्रीह्यादिजन्मरूपमनिष्टफलं संभवतीत्यतो मुख्यमेव व्रीह्यादिजन्मास्तु किमर्थं गौणी कल्पनेति चेन्न । कुतः । शब्दात् । 'अग्नीषोमीयं पशुमालभेत' इत्यादिहिंसाविधायकशब्दात् । ननु 'न हिंस्यात्सर्वा भूतानि' इति श्रुतेर्यागीयपशुहिंसाऽधर्मसाधनं हिंसात्वात्क्रतुबाह्यहिंसावदिति प्रयोगाच्चाधर्मसाधनं कर्मेति चेत् । अत्रोच्यते—'न हिंस्यात्' इत्युत्सर्ग एव सः । 'अग्नीषोमीयं पशुमालभेत' इति तदपवादोऽयमुत्सर्गापवादयोश्च व्यवस्थितविषयत्वम् । उक्तानुमाने निषिद्धत्वमुपाधिः । तस्माद्विशुद्धमेव वैध कर्म शिष्टैरनुष्ठीयमानत्वान्न तद्योग्य व्रीह्यादिजन्मेति भावः ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते । यस्माद्व्रीह्यादिभावानन्तरं रेतःसिग्भाव आम्नायते 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूयमेव भवति' [ छा० ५ । १० । ६ ] इति । न चात्र मुख्यो रेतःसिग्भावः संभवति । चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति । तद्भूयं तत्समानाकारतामनुशयी भवति प्रतिपद्यत इत्यर्थः । यथाऽस्मिन्वाक्येऽनुशायिनां व्रीह्यादिभावानन्तरं रेतःसिग्योग एव रेतःसिक्त्वं नतु मुख्यमसंभवात् । एवं व्रीह्यादिभावोऽपि तत्संयोग एवेत्यर्थः । तदुक्तं भाष्ये—रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्य इति ॥ २६ ॥

## योनेः शरीरम् ॥ २७ ॥ ( ६ )

ननु रमणीया योनिमित्यादावप्यनुशयिनां न मुख्यं जन्म किं तु व्रीह्यादाविवामुख्यं जन्मेत्याशङ्कयाऽऽह योनेः शरीरमिति । रेतःसिग्भावानन्तरं योनौ निषिक्ते रेतसि

[यो]निः सकाशाद्यच्छरीरमुत्पद्यते तदेवानुशायिनां भोगसाधनत्वान्मुख्यं जन्म नेतरत् । [त]स्माद्व्रीह्यादिषु सश्लेषमात्रमनुशायिनां जन्म न मुख्यमिति सिद्धम् ॥ २७ ॥ (६)

## इति तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

### अथ तृतीयाध्यायस्य द्वितीयः पादः ।

---

### संध्ये सृष्टिराह हि ॥ १ ॥

पूर्वपादे पञ्चाग्निविद्यामधिकृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चित इदानीं तस्यैव जीव[स्य]ावस्थाभेदः प्रपञ्च्यते । एतेन संसारगतिप्रभेदप्रपञ्चनेन नानाविधजन्मप्राप्तेश्चातिदुःखहेतु[त्व]ाद्वैराग्येण भाव्यमित्युक्तं भवति । विरक्तस्य तत्त्वंपदार्थविवेकायायं पाद आरभ्यते । तत्र न [स्थ]ानतोऽपि [ ब्र०सू०३।२।११ ] इत्यतः प्राक्त्वंपदार्थस्य विवेकः । ततःप्रभृति तत्पदा[र्थ]स्य । तत्र प्रथमाधिकरणे स्वप्नसृष्टेर्मिथ्यात्वं प्रतिपाद्यते । आरम्भणाधिकरणे प्रपञ्चमात्रस्य [मि]थ्यात्वप्रतिपादनेऽपि स्वप्नस्य शुक्तिरजतादितुल्यत्वोपपादनादपुनरुक्तिः । तत्राऽऽदौ शङ्का[सू]त्रद्वयम् । संध्ये सृष्टिः पारमार्थिकी । संध्यमिति स्वप्नस्थानम् । जाग्रत्सुषुप्त्योः संधौ [भ]वतीति व्युत्पत्तेः । ' संध्यं तृतीयं स्वप्नस्थानम् ' [ बृ० ४ । ३ । ९ ] इति श्रुतौ [द]र्शनाच्च । कुतः । यतः प्रमाणभूता श्रुतिरेवमाह—' स यत्र स्वपिति ' [ बृ० ४ । ३ । [९] ] इति स्वप्नं प्रकृत्य ' अथ रथान्रथयोगान्पथः सृजते ' [ बृ० ४ । ३ । १० ] [इत्याह]ते ॥ १ ॥

### निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपिचैके शाखिनोऽस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानं पठन्ति—' य एष [सु]प्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ' [ क० पा० ८ इति । तत्र काम्यन्त [इ]ति व्युत्पत्त्या कामाः पुत्रादयोऽभिप्रेताः । तस्मान्निर्मातृश्रवणादपि सत्यत्वम् । प्राज्ञं चात्र [नि]र्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं प्रकरणम्—' अन्यत्र धर्मादन्यत्रा[ध]र्मात् ' [ क० २ । १४ ] इति । तद्विषय एव वाक्यशेषोऽपि—

' तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ' ॥ [ क० ५ । ८ ]इति ।

प्रयोगश्च—विमता स्वप्नसृष्टिः सत्या परमात्मकर्तृकत्वाज्जाग्रत्सृष्टिवदिति । तस्मात्प्राज्ञ[क]र्तृकत्वाज्जाग्रत्सृष्टिवत्स्वप्नसृष्टिः सत्या ॥ २ ॥

इति प्राप्ते उत्तरं पठति—

### मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दः पूर्वपक्षं प्रतिक्षिपति । न स्वप्नसृष्टिः सत्या किं तु मायामात्रं मिथ्यैव ।

कुतः । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । कृत्स्नमेव कार्त्स्न्यं स्वार्थे ष्यञ् । किं पुनरत्र कार्त्स्न्यमभिप्रेतम् । देशकालादिनिमित्तसंपत्तिरबाधश्च । कार्त्स्न्येन देशकालादिवस्तुधर्मेणा-संबद्धत्वादित्यर्थः । न हि रथादेः शरीरान्तर्वर्तिहृदयदेशः संचारयोग्यः संभवति । न च जीवः शरीरान्निर्गत्य बहिरेव रथादिना संचरतीति वाच्यम् । क्षणमात्रेण शतयोजनपर्यन्त-गमनागमनयोरसंभावित्वात् । तदुक्तं भाष्ये—नहि सुप्तस्य जन्तोः क्षणमात्रेण योजनश-तान्तरितं देशं पर्येतुं [ विपर्येतुं ] च तत्र सामर्थ्यं संभाव्यत इति । तथा च श्रुतिः—स यत्रैतत्स्वप्नया चरति ' [ बृ० २ । १ । १८ ] इत्युपक्रम्य ' स्वे शरीरे यथाकामं परिवर्तते ' [ बृ० २ । १ । १८ ] इति । स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति श्रुतिः—' न तत्र रथा रथयोगा न पन्थानः ' [ बृ० ४ । ३ । १० ] इत्यादि । किंच स्वप्नो-पलब्धानां पदार्थानां स्वप्न एव बाधो दृश्यते । कदाचित्तरुत्वेन दृष्टस्तदैव गिरित्वेन दृश्यत इति । प्रयोगश्च—स्वप्नदृष्टिर्मिथ्याऽविद्याकार्यत्वाच्छुक्तिरजतवदिति । तस्मान्मायामात्रं स्वप्न-दर्शनम् ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

ननु स्वप्नस्य मिथ्यात्वे तत्सूचितस्य लाभादेः सत्यत्वं न स्यादिति शङ्कानिरासायेदं सूत्रम् । सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः । सूचक इत्यनेन सूच्यत्वं स्वप्नस्य निरस्तम् । तथा हि सूचकत्व श्रूयते—

' यदा कर्मसु काम्येषु स्त्रिय स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ' ॥ [ छा० ५ । २ ९ ] इति ।

तथा 'यदा पुरुषं कृष्ण कृष्णदन्तं पश्यति स एनं हन्ति' [ ऐ०आ० ३।२।४।१७ ] इत्येवमादि । तद्विदश्च स्वप्नाध्यायविदश्चाऽऽचक्षते । कुञ्जरारोहणादीनि धन्यानि गर्दभयानादी-न्यधन्यानीति । स्वप्नलब्धफलमन्त्रादावपि तज्जातीयसूचकत्वमेव न सूच्यत्वमिति न विरोधः । रथादिस्रष्टृत्वश्रुतिर्निमित्तत्वमात्रपरा न जाग्रत्तुल्यस्रष्टृत्वपरेति मन्तव्यम् । तदुक्तं भाष्ये—मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं सूचकस्य स्त्रीदर्शनादर्भवत्येव वैतथ्यं बाध्य-मानत्वादिति । यदुक्तं प्राज्ञकर्तृकत्वाज्जाग्रत्सृष्टिवत्स्वप्नसृष्टिः सत्येति । तदप्यसत् । श्रुत्यन्तरे ' स्वय विहत्य स्वय निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति ' [ बृ० ४ । ३ । ९ ] इति जीवव्यापारकीर्तनात् । इहापि ' य एष सुप्तेषु जागर्ति ' [ क० ५ । ८ ] इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्यते । तस्य तु वाक्यशेषेण ' तदेव शुक्र तद्ब्रह्म ' इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते तत्त्वमस्यादिवदिति न ब्रह्मप्र-करणं विरुध्यते । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वं सिद्धमिति ॥ ४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

ननु परस्यैवाऽऽत्मनोंऽशो जीवोऽग्नेरिव विस्फुलिङ्गः । तत्रैवं सति यथाऽग्निविस्फुलिङ्गयोः समाने दहनशक्ती भवत एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती समाने । ततश्च जीवस्यैश्वर्ययोगात्सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति शङ्कायामभिधीयते । तुशब्देन शङ्काव्युदासः । सत्यपि जीवेश्वरयोरंशांशिभावेऽपि जीवस्याविद्यावृतत्वान्नेश्वरसमानधर्मत्वं किं तर्हि तद्विपरीतधर्मत्वम् । संसारदशायां जीवस्येश्वरसमानधर्मत्वं नास्ति । विद्यमानमपि सामर्थ्यं तिरोहितम् । अविद्यातत्कार्याभ्यां व्यवधानात् । नन्वेवं कदाऽपि तदीश्वरसमानधर्मत्वं नाऽऽविर्भवेत् । तत्राऽऽह—पराभिध्यानादिति । परस्य परात्मनोऽभिध्यानादाविर्भवति । तत्कुतः, तत ईश्वरादस्य जीवस्य बन्धविपर्ययौ बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानाद्बन्धः । तत्स्वरूपपरिज्ञानान्मोक्षः । तथा च श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः' [ श्वे० १ । ११ ] इत्येवमाद्या ॥ ५ ॥

तिरोहितमित्युक्तं किं तत्तिरोधायकमित्याशङ्क्य तदाह—

## देहयोगाद्वा सोऽपि ॥ ६ ॥

जीवस्येश्वरसाम्यं संसारदशायां तिरोहितमित्युक्तम् । सोऽपि तु ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति । यथा भस्मच्छन्नस्याग्नेस्तिरोभावस्तद्वत् । वाशब्दो जीवेश्वरयोर्भेदशङ्कानिरासार्थः । नन्वन्य एव जीव ईश्वरादस्तु । तिरस्कृतज्ञानैश्वर्यत्वात्किं देहयोगकल्पनयेति चेत् । नेत्युच्यते । नह्यन्यत्वं जीवस्येश्वरादुपपद्यते तत्त्वमस्याद्यभेदप्रतिपादिश्रुतिभ्यः । अत ईश्वरादभिन्नोऽपि जीवः संसारदशाया तिरोहितज्ञानैश्वर्यो भवति । अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते । यदि सांकल्पिकी सृष्टिः स्यात्तर्हि नैवानिष्टं कश्चित्स्वप्नं पश्येत् । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ ६ ॥ ( १ )

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

जीवस्य स्वप्नावस्था चिन्तिता । इदानीं सुषुप्त्यवस्था चिन्त्यते । तत्रैताः सुषुप्तिविषयाः श्रुतयो भवन्ति । क्वचिच्छ्रूयते—'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति' [ छा० ८ । ६ । ३ ] इति । अन्यत्र तु नाडीरनुक्रम्य श्रूयते—'ताभिः प्रत्यवसृप्य पुरीतति शेते' [ बृ० २ । १ । १९ ] इति । तथाऽन्यत्र नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' [ कौ० ४ । १९ ] इति । क्वचिच्च 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' [ बृ० २ । १ । १९ ] इति । तथाऽन्यत्र 'सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति' [ छा० ६ । ८ । १ ] इति । तान्येतानि सुषुप्तिस्थानानि नाड्यादीनि परस्परनिरपेक्षतया भिन्नानि किं वा परस्परापेक्षयैकं सुषु-

सिस्थानमिति संशयः । विकल्पितानि भवितुमर्हन्तीति तावत्प्राप्तम् । एकप्रयोजनत्वात् । यथा 'व्रीहिभिर्यवैर्वा यजेत' इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन विकल्प आश्रितस्तथाऽत्रापि सुषुप्त्याख्यं प्रयोजनमेकं तस्मात्कदाचित्पुरीतति कदाचिदन्यासु नाडीषु कदाचिद्ब्रह्मणीति विकल्पे प्राप्ते ब्रूमः । एकप्रयोजनत्वमसिद्धम् । पृथगुपयोगस्य सुवचत्वात् । तथा हि—नाड्यस्तावच्चक्षुरादीन्द्रियेषु संचरतो जीवस्य हृदयनिष्ठ ब्रह्म गन्तुं मार्गभूता भविष्यन्ति । 'आसु तदा नाडीषु सु ( सृ ) प्तो भवति' [ छा० ८ । ६ । ३ ] इति । नाडीनां स्तुत्यर्थं सु( सृ )प्तिकीर्तनम् । अत एव 'ताभिः प्रत्यवसृप्य पुरीतति शेते [ बृ० २ । १ । १९ ] इत्यत्र तृतीयया साधनत्वं नाडीनां श्रुतम् । 'तासु तदा भवति' [ कौ० ४ । १९ ] इत्येतदपि यो गङ्गया सागर गच्छति गत एव स गङ्गायां भवतीतिवदविरुद्धम् । 'नाडीषु सु( सृ )प्तो भवति' इत्युक्त्वा 'तं न कश्चन पाप्मा स्पृशति' [ छा० ८ । ६ । ३ ] इति ब्रुवती श्रुतिर्जीवस्य ब्रह्मसंपन्नत्वमेवावगमयति । पाप्मस्पर्शाभावे हेतुमाह तत्रैव श्रुतिः—'तेजसा हि तदा संपन्नो भवति' [छा०८।६।३] इति । तेजोऽत्र ब्रह्म । पुरीतदिति हृदयपरिवेष्टनमुच्यते । ब्रह्म तु पर्यङ्कवदाधारः । सूत्रार्थस्त्वेवम् । तदभावः स्वप्नाभावः सुषुप्तिरित्यर्थः । नाडीष्वात्मनि च चकारात्पुरीतति च समुच्चयेन भवति । कुतः । तच्छ्रुतेः । उदाहृतानां नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वश्रवणात् । न च सुषुप्त्याख्यप्रयोजनस्यैकत्वाद्विकल्पोऽस्त्विति वाच्यम् । एकप्रयोजनत्वासिद्धेः । नाडीना मार्गत्वात् । पुरीततश्च प्राकारवद्धृदयपरिवेष्टनत्वात् । तथाच नाडीद्वारा पुरीतति प्रविश्य ब्रह्मणि शेत इति भिन्नकार्यत्वात्समुच्चयोपपत्तिः । यः पूर्वं विकल्प उक्तः सोऽष्टदोषग्रस्तत्वादनुपपन्न. । तथा हि—यदा जीवो नाडीषु शेते तदा पुरीतद्ब्रह्मवाक्ययोः प्राप्त प्रामाण्य परित्यक्त स्यात् । अप्राप्त च प्रामाण्य स्वी क्रियेत । अथ यदा पुनः पुरीतद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वत्यक्तप्रामाण्यं स्वी क्रियेत । पूर्वस्वीकृतं चाप्रामाण्य परित्यज्येतेति प्राप्तपरित्यागोऽप्राप्तस्वीकारस्त्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टय पुरीतद्ब्रह्मकोटौ । तथा नाडीवाक्यकोटावपि दोषचतुष्टये योजिते सत्यष्टौ दोषाः सपद्यन्ते । तस्मात्समुच्चय एव ग्राह्यो न तु विकल्पः । ननु ब्रह्मसंपन्नस्य कथ पुनः ससार इति चेत् । उच्यते—यथा सोदककुम्भस्तडागजले प्रक्षिप्तो मग्नः सन्पृथङ्न भाति तथाऽन्तःकरणोपाधिको जीवो मायोपहिते ब्रह्मणि संपन्नो भवतीत्यविरोधः ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥ ८ ॥ ( २ )

यतः कारणादात्मैव सुषुप्तिस्थानमतः कारणादस्मादात्मनः सकाशात्प्रबोधो भवति । तथाच स्वप्नाधिकारे श्रूयते । 'कुत एतदागात्' [ बृ० २ । १ । १६ ] इत्यस्य

प्रतिवचनावसरे ' यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः ' [ बृ० २ । १ । १० ] इत्यादिना । 'सत आगम्य न विदुः सत आगच्छामहे' [ छा० [६ । १० । २ ] इति च । यदि नाड्यादीनामपि सुषुप्तिस्थानत्वं तदा ततोऽपि प्रबोधः श्रूयते । तस्मादप्यात्मन्येव सुषुप्तिः ॥ ८ ॥ ( २ )

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ ( ३ )

यः सुषुप्तौ सति संपद्यमानोऽभूत्स एव प्रतिबुध्यतेऽथवाऽन्य इत्यस्मिन्नधिकरणे चिन्त्यते । यथा समुद्रे प्रक्षिप्तो जलबिन्दुः स एव नियमेन पुनरुद्धर्तुमशक्यस्तथा सुषुप्तौ जीव. स एव प्रतिबुध्यत इति नियन्तुमशक्यत्वाद्य कोऽपि प्रतिबुध्यत इति प्राप्ते ब्रूमः । तुर्नार्थे । यः सुप्तः स एव प्रबुध्यते नान्यः । कुतः । कर्मादिभ्यः । अत्र हेतुत्रयं विभजनीयम् । कर्मानुस्मृतेः । तथा हि पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन्दृश्यते । नचान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायामुत्सहते प्रवर्तितुम् । अतिप्रसङ्गात् । अन्यत्वपक्षे पूर्वेद्युरारब्धस्य कर्मणः स्मृतिर्न स्यात् । अन्यनिष्ठानुभवसंस्कारस्यान्यस्मृतिं प्रत्यहेतुत्वात् । शब्दाच्च तस्यैवोत्थानमवगम्यते । स च शब्दः ' सर्वाः प्रजा अहरहर्ग-[1]च्छन्त्य एतं[2] ब्रह्मलोकं न विन्दन्ति ' [ छा० ८ । ३ । २ ] इति । ' त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ' [ छा० ६ । ९ । ३ ] इति । व्याघ्रादयो जे जीवा· सुप्तेः पूर्वं यच्छरीरं प्राप्य वर्तन्ते त एव जीवाः सुप्तेरुपरि प्रबुध्यमानास्तदेव शरीरं प्राप्नुवन्तीत्यर्थः । न तत्राऽऽत्मान्तरोत्थाने सामञ्जस्यमीयुः । विधेश्च । ज्योतिष्टोमादिविधिरनर्थकः स्यात् । सुप्तमात्रस्यैव मुक्तत्वात् । नच सुषुप्तौ ब्रह्म प्राप्तस्य जीवस्य मुक्तवत्पुनरुत्थानानुपपत्ति· । अवच्छेदकस्योपाधेः सत्त्वेन तदुद्भवेन जीवोद्भवसंभवात् । तस्माद्यः सुप्तः स एव प्रतिबुध्यते ॥ ९ ॥ ( ३ )

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥ [ ४ ]

मुग्धो नाम मूर्छित इति प्रसिद्धिः । स तु किमवस्थ इति । तत्र विचार्यते शारीरस्य तिस्रस्तावदवस्थाः प्रसिद्धाः । जागरितं स्वप्नः सुषुप्तमिति । चतुर्थी शरीरादपसृप्तिः । न तु पञ्चमी काचिदवस्था श्रुतिस्मृतिप्रसिद्धाऽस्ति तस्मान्मूर्छावस्था जाग्रदाद्यवस्थात्रयान्तर्गता भिन्ना वेति संशये भिन्नेति तावत्प्राप्तम् । कुतः । श्रुतावावस्थात्रयव्यतिरिक्ताया अवस्थाया अप्रसिद्धेः । एवं प्राप्तेऽभिधीयते । न तावन्मूर्छा जाग्रदवस्थायामन्तर्भवितुमर्हति । विशेष-

---

१ क. °हर्ब्रह्मलोकं ग° । २ क °तं न° ।

ज्ञानाभावात्। नहि मूर्छित इन्द्रियैर्विषयानीक्षते। जाग्रतः पुरुषस्य देहो ध्रियते। मुग्धस्य देहो धरण्यां पतति। तस्मान्मूर्छा न जाग्रत्। नापि स्वप्नेऽन्तर्भावः। स्वाप्निकविषयदर्शनाभावात्। नापि सुषुप्तावन्तर्भावः। सुषुप्त्यवस्थालक्षणाभावात्। सुषुप्तौ मुखप्रसादनियतकालोच्छ्वासनिःश्वासनिमीलितनेत्रत्वादीनि लक्षणानि भवन्ति। मूर्छिते तु विकृतमुखानियतोच्छ्वासनिःश्वासविस्फुरितनेत्रसकम्पत्वादीनि भवन्त्यतो न सुषुप्तावन्तर्भावः। मूर्छितो नापि मृतः। प्राणोष्मणोर्भावात्पुनरुत्थानाच्च। नहि मृतः पुनरुत्तिष्ठति। तस्मात्परिशेषादवस्थान्तरमेव मूर्छा। तदुक्तं भाष्ये—न ब्रूमो मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति। किं तर्ह्यर्धेन सुषुप्तस्य पक्षस्य भवति मुग्धत्वमर्धेनावस्थान्तरपक्षस्येति ब्रूम इति। अवस्थान्तरमत्र मरणमेव। यतो मूर्छा मरणस्य द्वारं भवति। यत्तूक्तमवस्था पञ्चमी नास्तीति। नैष दोषः। अर्धसंपत्त्यभ्युपगमात्। नेयमवस्था पञ्चमीति गण्यते। कादाचित्कीयं न सर्वप्राणिसाधारणी मूर्छाऽतोऽवस्थेति न प्रसिद्धा ॥ १० ॥ ( ४ )

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥**

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संपद्यते तस्य ब्रह्मणः स्वरूपं श्रुतिवशेन विचार्यते। सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः ‘सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः’ [ छा० ३। १४। २ ] इत्येवमाद्याः सविशेषलिङ्गाः। ‘अस्थूलमनण्वह्रस्वमरूपमस्पर्शम्’ [ बृ० ३। ८। ८ ] इत्येवमाद्या निर्विशेषलिङ्गाः। किमासु श्रुतिषूभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गमिति। यदाऽन्यतरलिङ्गं तदा किं सविशेषमुत निर्विशेषमिति विशये उभयलिङ्गमिति तावत्प्राप्तम्। कुतः। उभयलिङ्गश्रुतिभ्यः। एवं प्राप्तेऽभिधीयते। ब्रह्म निर्विशेषमेव। स्थानत उपाधितोऽपि परस्य ब्रह्मण उभयलिङ्गत्वं नोपपद्यते। पारमार्थिकस्यैकस्य वस्तुनो विरुद्धोभयरूपत्वासंभवात्। न ह्युपाधियोगाद्वस्तुनः स्वभावोऽपगच्छति। नहि स्वच्छः स्फटिकोऽलक्तकाद्युपाधितोऽस्वच्छो भवति। अस्वच्छताभिनिवेशस्य भ्रममात्रत्वात्। प्रकृते निर्विशेषमेव ब्रह्म शास्त्रतः प्रतिपत्तव्यम्। मानान्तरासिद्धत्वात्। जगत्कर्तृत्वादिविशेषोपेतं ब्रह्म क्षित्यादिकं सकर्तृकं कार्यत्वादित्यनुमानेनापि ज्ञातुं शक्यम्। ब्रह्मणः सविशेषत्वमुपासनार्थमारोपितम्। हि यस्मात्सर्वत्र वेदान्तेषु ‘अशब्दमस्पर्शमरूपमव्ययम्’ [ क० ३। १५ नृ० ता० ९ मु० २। ७२ ] इत्येवमादिषु निर्गुणस्वरूपमेव ब्रह्म प्रतिपाद्यते ॥ ११ ॥

**न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥**

ननु यदुक्तं निर्विकल्पकमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वाऽप्युभयलिङ्गत्वमस्तीति तन्नोपपद्यते। कुतः। भेदात्। चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म वैश्वानरशब्दोदितं ब्रह्मेत्यादिभेदश्रवणात्सविशेषत्वं ब्रह्मणः स्यादन्यथा निर्विषयमभेद-

शास्त्रं स्यादिति चेन्नेति ब्रूमः । कुतः । प्रत्येकमतद्वचनात् । प्रत्युपाधि [ भेदं ] शास्त्रमभेदमेव ब्रह्मणः श्रावयति । 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' [ बृ० २ । ५ । १ ] इत्याद्येकरूपत्वश्रवणान्न भिन्नाकारत्वं ब्रह्मणः ॥ १२ ॥

## अपि चैवमेके ॥ १३ ॥

अपिचैके शाखिन एवं भेददर्शननिन्दापूर्वकमभेदमामनन्ति—'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [ क० ४ । ११ ] इति । 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' [ श्वे० १ । १२ ] इति चान्ये शाखिनः समस्तस्य भोक्तृभोग्यनियम्यनियन्त्रादिलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥ १३ ॥

ननु साकारनिराकारप्रतिपादकश्रुतिसाम्ये कथं निर्विशेषत्वावधारणमित्यत उत्तरं पठति—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूपाद्याकाररहितमेव ब्रह्म प्रतिपत्तव्यं न रूपादिमत् । कुतः । तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घम्—' [ बृ० ३ । ८ । ८ ] 'अशब्दमस्पर्शमरूपमव्ययम्' । [ क० ३ । १५ ] 'आकाशो वै नाम नामरूपयोर्निर्वहिता ।' 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' [ मु० २ । १ । २ ] । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म' । [ बृ० २ । ५ । १९ ] इत्यादीनि वाक्यानि निर्विशेषब्रह्मप्रतिपादकानि न सविशेषब्रह्मप्रतिपादकानि । यानि त्वाकारवद्ब्रह्मप्रतिपादकानि वाक्यानि तान्युपासनाविधिपराणि । तत्राविरुद्धेषु न बाधः । विरुद्धेषु तु धर्मेषु निर्गुणश्रुतिप्राबल्यादारोपेणोपासनाविधिपरत्वमाश्रीयते ॥ १४ ॥

का तर्हि साकारब्रह्मविषयाणां श्रुतीनां गतिरित्यत आह——

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा सूर्यादिप्रकाशोऽङ्गुल्याद्युपाधिसंबन्धादङ्गुल्यादिगतर्जुवक्रादिभावमापद्यत एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तत्तदाकारभावमिवाऽऽपद्यते । एवमवैयर्थ्यमपि साकारब्रह्मविषयाणां वाक्यानां भवति । नन्वेवमपि यत्पुरस्तादुक्तं नोपाधियोगादपि उभयलिङ्गत्वं ब्रह्मणोऽस्तीति तद्विरुध्येतेति चेन्न । उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः । उपाधीनां मायिकत्वान्मायायाश्च मिथ्यात्वात् । तस्माद्ब्रह्मणि साकारत्वं कल्पितम् ॥ १५ ॥

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं ब्रह्म—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' [ बृ०

४ । ५ । १३ ] इति । यथा सैन्धवघनस्य स्वरूपं सर्वं लवणरसात्मकमेव न रसान्तरं तत्रास्त्येवमात्माऽपि सबाह्याभ्यन्तरं चैतन्यैकरसस्वरूप एव न रूपान्तरव्यामिश्रः ॥ १६ ॥

**दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥**

परप्रतिषेधेनैव ब्रह्म निर्विशेषं दर्शयति च श्रुतिः—' अथात आदेशो नेति नेति ' [ बृ० २ । ३ । ६ ] ' अन्यदेव तद्विदितादथो अविदितादधि ' [ के० ३ ] इति । ' यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ' [ तै० २ । ४ । १] इत्येवमाद्या । स्मृतिष्वपि रूपान्तरनिषेधेनैव ब्रह्मोपदिश्यते—

' ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते ' [ भ० गी० १३ । १२ ]

इत्येवमाद्यासु ॥ १७ ॥

**अत एवचोपमा सूर्यकादिवत् ॥ १८ ॥**

यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतोऽभिन्न उपदिश्यते । अत एवास्य श्रुतिषु जलसूर्यकादिवदित्युपमा श्रूयते—

' यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ' ॥
एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ' ॥ [ ब्र० बिं० १२ ]

इत्येवमादिषु ॥ १८ ॥

अत्र शङ्कते—

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

तथात्वं जलसूर्यादितुल्यत्वं ब्रह्मणो नोपपद्यते । कुतः । अम्बुवदग्रहणात् । अम्बुनीवाम्बुवत् । यथा मूर्तो देशान्तरस्थः सूर्यादिः । तस्मात्पृथग्भूतं विप्रकृष्टदेशस्थ मूर्तं च जलं तत्र सूर्यादेः प्रतिबिम्बो युक्तः । नत्वेवमात्मा मूर्तः । नचास्मात्पृथग्भूता विप्रकृष्टदेशस्थाश्चोपाधयः । आत्मनः सर्वगतत्वात्सर्वानन्यत्वाच्च न प्रतिबिम्बितुमर्हतीति दृष्टान्तासिद्धिः ॥ १९ ॥

एवं शङ्कायां प्राप्तायां परिहारमाह—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥**

यदुक्त दृष्टान्तो नोपपद्यत इति तदयुक्तम् । विवक्षितांशे दृष्टान्तसंभवात् । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यं केनचिद्दर्शयितुं शक्यम् । सर्वसाम्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । किं पुनरत्र सादृश्यं तत्राऽऽह—वृद्धिह्रासभाक्त्वमिति । जलगतं

हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यत एवं जलधर्मानुयायि भवति । न तु परमार्थतः सूर्यस्य बिम्बरूपस्य तदस्ति । एव निर्विशेषस्य व्यापकस्यापि ब्रह्मणो देहाद्युपाध्यन्तर्भावादुपाधिधर्मान्वृद्धिह्रासादीन्प्रतिबिम्बो जीवो भजते । एवमुक्तप्रकारेणोभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध इति शेषः ॥ २० ॥

ननु परस्य न देहादिप्रवेशो येन तदुपाधिवृद्ध्यादिकमत आह—

## दर्शनाच्च ॥ २१ ॥ ( ५ )

दर्शयति च श्रुतिः—' अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य ' [ छा० ६ । ३ । २ ] इत्यादिश्रुतिषु प्रवेशदर्शनादित्यर्थः । तस्माद्युक्तमेतदत एवोपमा सूर्यकादिवदिति ॥२१॥ (५)

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

' द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च ' [ बृ० २ । ३ । १ ] इत्यस्मिन्ब्राह्मणे महता प्रबन्धेन पृथिव्यप्तेजोलक्षणं मूर्तं रूपं प्रपञ्च्यान्ते ब्रह्मोपदेष्टुमिदमुक्तम् ' अथात आदेशो नेति नेति ' [ बृ० २ । ३ । ६ ] इति । अस्यायमर्थः—अथ रूपद्वय-कथनानन्तरं रूपिणो ब्रह्मणो व्यक्तत्वात् ' नेति नेति ' इत्येवं ब्रह्मोपदेश इति। तत्र पूर्वपक्षी मन्यते । जगत एकस्यैव निषेधने द्वितीयो नेति शब्दो निरर्थकः स्यात् । अतो द्वितीयेन ब्रह्मापि निषिध्यते प्रकृतत्वाविशेषाद्रूपद्वयब्रह्मणोर्द्वयोरपि निषेध्यत्वादिति प्राप्ते ब्रूमः । न ब्रह्मणो निषेधः क्रियते सर्वनिषेधे शून्यवादप्र-सङ्गात् । न चेष्टापत्तिः । निरधिष्ठानभ्रमासंभवात् । तस्माद्रूपद्वयनिषेधोऽयम् । तदाह प्रकृतैतावत्वं हि प्रतिषेधतीति । प्रकृत यदेतावत्परिच्छिन्नम् । भावप्रत्ययो न विवक्षितः । मूर्तं चामूर्तं च । आद्य भूतत्रय मूर्तम् । अन्यं द्वयममूर्तम् । तदुभयमितिशब्देन सनिहि-तावलम्बिना निर्दिश्य नकारो निषेधति । नकारद्वय रूपद्वयनिषेधाय । तदुक्त भाष्यकारैः किंचिद्धय (द्धि) [परमार्थमालम्ब्या]परमार्थं प्रतिषिध्यते । यथा रज्ज्वादिषु सर्पादयः । तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्पते कृत्स्नप्रतिषेधे तु कोऽन्यो भाव' परिशिष्येतेति । किंच तत्रैव भाष्य उक्तम् । नापि ब्रह्मप्रतिषेध उपपद्यते । ' ब्रह्म ते ब्रवाणि ' [ बृ० २ । १ । १ ] इत्युपक्रमविरोधात् । ' असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् ' [ तै० २ । ६ । १ ] इत्यादिनिन्दाविरोधात् । ' अस्तीत्येवोपलब्धव्यः [ क० ६ । १३ ] इत्यवधारणविरोधात् । सर्ववेदान्तकोपप्रसङ्गाच्चेति । द्वौ च तौ प्रतिषेधौ यथासङ्ख्यन्यायेन द्वे अपि रूपे मूर्तामूर्ते ब्रह्माणि मायया कल्पिते प्रतिषेधतः । किंच ' अथात आदेशः [ बृ० २ । ३ । ६ ] इति महता संरम्भेण ब्रह्मोपदेष्टुं प्रतिज्ञाय तदेव ब्रह्म निषेधन्ती श्रुतिः कथं न व्याहन्येत । ब्रह्मनिषेधे वाक्यशेषश्च ' सत्यस्य सत्यम् ' [ बृ० २ । ३ । ६ ] इत्येवंरूपः पारमार्थिकसत्यपरो न सगच्छेत । तस्माद्ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इति सिद्धम् ॥ २२ ॥

**तदव्यक्तमाह हि ॥ २३ ॥**

यत्तत्प्रतिषिद्धाद्रूपद्वयादन्यत्परं ब्रह्मास्तिचेत्कस्मान्न गृह्यत इति शङ्कायामाह—तदव्य-क्तमिति । अव्यक्तमनिन्द्रियग्राह्यम् । सर्वदृश्यसाक्षित्वात् । तदुक्तमाचार्यभगवत्पादैः—

' रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्च मानसम् ।

दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ' ॥ इति ।

आह हि श्रुतिरेवमाह—' न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ' [ मु० ३ । १८ ] इत्याद्या । अन्यैर्देवैरिन्द्रियान्तरैः । तपसा कृच्छ्रादिना । कर्मणाऽग्निहोत्रादिनेति तदर्थः । स्मृतिरपि—' अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' [ भ० गी० २ । २५ ] इत्याद्या ॥ २३ ॥

**अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥**

अपिचैनमात्मानं निष्प्रपञ्चमव्यक्तं संराधने ध्यानकाले योगिनः पश्यन्ति । कथमेतदव-गम्यते—संराधने पश्यन्तीति । प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । तथाहि श्रुतिः—

' पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।

कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ' [ क० ४।१ ] इति ।

अस्यायमर्थः—स्वयंभूरीश्वरः । स्वं श्रोत्र तदुपलक्षिता सर्वेन्द्रियाणि खानि । पराञ्चि बहिर्विषयाणि । व्यतृणद्धिंसितवान् । यथाऽऽत्मानं द्रष्टुं न शक्नुवन्ति तथा कृतवानित्यर्थः । तस्माद्धेतोः पराङ् पश्यति सर्वलोकः । नान्तरात्मन् । अन्तरात्मनि विषये न पश्यति । अन्तरात्मानं न पश्यतीत्यर्थः । कश्चिद्धीरो विवेकी प्रत्यगात्मानमैक्षत् । आवृत्तचक्षुरुपरते-न्द्रियः । किमर्थम् । अमृतत्वमिच्छन्निति । स्मृतिरपि—

' यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।

ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥

[ म० भा० १२ । ४७ । ५४ ॥ इत्याद्या ॥ २४ ॥

नन्वाराध्याराधकभावेऽभ्युपगम्यमाने सति भेदः स्यादत आह—

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥**

यथा सवितृप्रकाशस्यावैशेष्यमभेदः । तथा जीवपरमात्मनोरपि । प्रकाशस्य भेदप्र-सक्तिं दर्शयति—प्रकाशश्च कर्मणीति । कर्म कार्यम् । सामान्येनैकवचनम् । कर्मणि कार्येष्वित्यर्थः । अङ्गुल्याद्युपाधिषु प्रकाशस्तत्तदवच्छिन्नतया भेदेन भासमानोऽपि वस्तुतो यथा न भिद्यते तथाऽविद्यया भिन्नतया भासमानयोरपि जीवपरमात्मनोरभेद एव पारमार्थिको मन्तव्यः । कुतः । अभ्यासात् । वेदान्तेषु पौनःपुन्येन जीवपरमात्मनोरै-क्यप्रतिपादनादित्यर्थः ।

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

यतो जीवस्य परमात्माभेदो हि वास्तवः, भेदस्त्वाविद्यकः, अतः कारणादनन्तेन परमात्मना गच्छत्येकतामविद्यानिवृत्तौ । तथा हि लिङ्गं श्रुतिरित्यर्थः । 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] 'ब्रह्मैव सन्ब्रह्माप्येति' [ बृ० ४ । ४ । ६ ] इत्यादि ॥ २६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे शङ्कामुत्थापयति सूत्रद्वयेन । तथा हि जीवपरमात्मनोर्भेद एव क्वचिद्वेदान्त उक्तः । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' [ मु० ३ । १ । ८ । ] इति ध्यातृध्येयभावेन द्रष्टृद्रष्टव्यभावेन [ च ] 'परात्परं पुरुषमुपैति दिव्यम्' [ मु० ३ । २ । ८ ] इतिगन्तृगन्तव्यभावेन 'यः सर्वाणि भूतान्यन्तरो यमयति' [ बृ० ३ । ७ । १५ ] इति नियन्तृनियन्तव्यभावेन च भेदव्यपदेशात् । क्वचित्तु तयोरेवाभेदो व्यपदिश्यते । 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] 'अहं ब्रह्मास्मि' [ बृ० १ । ४ । १० ] ब्रह्मैव सन् ब्रह्माप्येति' [ बृ० ४ । ४ । ६ ] इत्यादौ । तत्रैवं सति यद्यभेद एवैकान्ततो गृह्येत तदा भेदव्यपदेशो निराश्रयः स्यात् । अत एवोभयव्यपदेशादहिकुण्डलवत् । अत्र तत्त्वम् । यथाऽहिरित्यभेदः कुण्डलाभोगप्रांशुवक्रत्वादिसंस्थानविशेषैर्भेद एवं जीवपरमात्मनोरपि भेदाभेदाविति ॥ २७ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथवा यथा प्रकाशस्तदाश्रयश्च सविता तौ नात्यन्तभिन्नौ । उभयोरपि तेजस्त्वाविशेषात् । अथ च भेदव्यपदेशभाजौ भवतः । तद्वदिहापीति । यत्तु कश्चिदाहास्मिन्पादे भगवति भक्तिः कर्तव्येति प्रतिपाद्यत इति प्रतिज्ञाय भक्तिश्च माहात्म्यज्ञानपूर्वकः स्नेह इति तल्लक्षणमुक्त्वा तत्र भगवन्माहात्म्यप्रतिपादकान्हेतून्प्रदर्श्य भगवद्भक्तिः कार्या न वेति संशये नेति प्राप्तम् । निर्गुणे भक्त्ययोगात् । आनन्दादीनां स्वरूपत्वाभ्युपगमात् । न ह्यभेदे गुणगुणिभावः संभवति । एवं प्राप्ते सिद्धान्तमाह—उभयव्यपदेशात्त्वहिकुण्डलवत् । कर्तव्यैव भगवद्भक्तिः । श्रुतिषु गुणत्वेन गुणित्वेन चेत्युभयथाऽपि व्यपदेशात् । अभेदेऽपि विशेषबलाद्गुणगुणिभाव उपपद्यते । अहिकुण्डलवत् । यथाऽहिः कुण्डल चेत्यभेदेऽपि भेदस्तद्वदिति । तदसत् । विशेषस्यापि भगवदभिन्नत्वात् । तेनैव जीवेश्वरयोरपि भेदाच्च । अस्मत्सिद्धान्ते विशेषो मायेत्यनर्थान्तरम् । 'मायैव विशेषो नाम तेन भेदः कल्प्यत इति तुरश्रुतेः ॥ २८ ॥

एवं शङ्कायां प्राप्तायां समाधत्ते सूत्रकारः—

## पूर्ववद्वा ।

पूर्वं यथोपन्यस्तं 'प्रकाशादिवच्चावैशेष्यम्' [ ब्र० सू० ३ । २ । २५ ] इति ।

तत्र यथाऽऽविद्यको भेदो न पारमार्थिक इत्युक्तं तथैवात्राङ्गीकर्तव्यम् । भेदाभेदयोरेकत्र विरोधात् । यदि पुनः पारमार्थिक एव बन्धः स्यात्तदा निराकर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्जेत । अभेदमेव हि श्रुतयः प्रतिपादयन्ति न भेदम् । तस्य प्रत्यक्षसिद्धत्वात् । तस्मात् ' प्रकाशवच्चावैशेष्यम् ' इत्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥ ( ६ )

इतश्चैष एव सिद्धान्तः । यस्मात्कारणात्परमात्मनोऽन्यं चेतनं श्रुतयः प्रतिषेधन्ति । ' नान्योऽतोऽस्ति द्रष्टा ' [ बृ० ३ । ७ । २३ ] ' अथात आदेशो नेति नेति ' [ बृ० २ । ३ । ६ ] ' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ' । [बृ० २ । ५ । १९] इत्येवमाद्याः । तस्माद्ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्तः । यत्तु कश्चिदाह—'पूर्ववद्वा' । यथा कालस्य पूर्वेणाभेदेऽपि पूर्वः काल इति विशेषणविशेष्यभावो विशेषबलात्तथा गुणात्मकस्यापि ब्रह्मणो विशेषादेव गुणि ब्रह्मेति विशेषणविशेष्यभाव इत्यर्थ । ननु किमनेन विशेषानुसरणक्लेशेन गुणगुणिनोर्भेद एव स्वी क्रियतामत आह–'प्रतिषेधाच्च ' । ' एकमेवाद्वितीय ब्रह्म ' [ छा० ६ । २ । १ ] ' नेह नानाऽस्ति किंचन ' [ बृ० ४ । ४ । १९ ] इति भेदस्य प्रतिषेधादित्यर्थः । अतो गुणिनि हरौ भक्तिसंभवाद्युक्त तन्माहात्म्यवर्णनमिति । तदसत् । विशेषस्यापि स्वरूपमात्रतया तद्वत्त्वादित्यस्याप्यपार्थकत्वात् । एकप्रातिपदिकार्थस्य तेनाप्यङ्गीकारात् । किंचायं सगुणवादो निर्गुणत्व एव पर्यवस्यतीति नास्माकं दूष्यः प्रत्युतास्माकं व्यावहारिका गुणाः सन्ति तन्मते तेऽपि न सन्तीति विपरीतोऽयं सगुणवादः । विस्तरस्तु तत्त्वकौस्तुभे द्रष्टव्यः ॥ ३० ॥ ( ६ )

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

यदेतद्ब्रह्म ' नेति नेति ' इति दृश्यप्रतिषेधेन निर्धारितम् । अस्मात्परमन्यत्तत्त्वमस्ति षा न वेति श्रुतीना विप्रतिपत्तेर्भवति संशय । तत्र किं ताव प्राप्तम् । तस्मादपि ब्रह्मणोऽन्यद्वस्त्वस्तीति । कुतः । सेतून्मानसंबन्धभेदलक्षणानां चतुर्णां हेतूनां व्यपदेशात् । ' अथ य आत्मा स सेतुर्विधृतिः ' [ छा० ८ । ४ । १ ] इति सेतुत्वं व्यपदिश्यते । तत्र यथा लोके सेतोः सावधिकत्वात्सेतुं तीर्त्वा जाङ्गलं प्रतिपद्यते । तथा ब्रह्मणोऽपि सेतुत्वेन जगद्विधारकत्वाद्ब्रह्म तीर्त्वा गन्तव्येनान्येन केनाचिदवश्यं भवितव्यम् । उन्मानव्यपदेशश्च श्रूयते–' चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म ' इति । तच्चोन्मानं सद्वितीय एव गवादौ दृष्टचरं नाद्वितीये कुत्रचित् । तथा संबन्धव्यपदेशोऽपि श्रूयते—' सता सौम्य तदा संपन्नो भवति ' [ छा० ६ । ८ । १ ] इति । स च संबन्धः सद्रूपाद्ब्रह्मणोऽन्यस्य जीवस्य विद्यमानतयाऽवकल्पते । तथा ' आत्मा वा अरे द्रष्टव्यः ' इति भेदव्यपदेशोऽपि ॥ ३१ ॥

एवमेतेभ्यो हेतुभ्यो ब्रह्मणोऽन्यद्वस्त्वस्तीत्येवं प्राप्ते सूत्रकार आह—

**सामान्यात्तु ॥ ३२ ॥**

तुशब्दः पक्षव्यावृत्त्यर्थः । ' सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म ' [ छा० ६ । २ । १ ] इत्यवधारणात् । एकविज्ञानेन सर्वज्ञानप्रतिज्ञानाच्च न ब्रह्मव्यतिरिक्तं किमपि वस्त्वस्ति । नच सेतुव्यपदेशो वस्त्वन्तरसूचक इति वाच्यम् । विधारकत्वसामान्यात्सेतुशब्दप्रयोगात् । अत्र सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते । जगन्मर्यादानां विधारकत्वं सेतुत्वसामान्यात् । सजातीयादित्रिविधपरिच्छेदशून्यत्वान्न ब्रह्मणोऽन्यद्वस्त्वन्तरमस्ति । यत्तु कश्चिदाह—भगवन्निष्ठमानन्दादिगुणजातं लौकिकानन्दादेः सकाशात्परं विलक्षणम् । कुतः । लौकिकानन्दादावसंभावितस्य सेतुत्वादेर्वैलक्षण्यस्य व्यपदेशादिति । तदसत् । ' एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ' [ बृ० ४ । ३ । ३२ ] इत्यादिश्रुतिविरोधात् ।

सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ।
उपाधिभेदैर्भिद्यन्ते तारतम्यं च यन्त्यपि ' ॥

इतिव्योमसंहिताविरोधाच्च ॥ ३२ ॥

**बुद्ध्यर्थः पादवत् ॥ ३३ ॥**

यदप्युक्तमुन्मानव्यपदेशादस्ति ब्रह्मणः परमिति । तत्राभिधीयते । उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्तुसाधकः । किं तर्हि । बुद्ध्यर्थः । उपासनार्थ इत्यर्थः । तत्र दृष्टान्तः—पादवदिति । यथाकार्षापणे व्यवहारसौकर्याय पादविभागः कल्प्यते । सर्वदा सर्वैः सकलेन कार्षापणेन व्यवहर्तुमशक्यत्वात् । एवं निर्विशेषे ब्रह्मणि सर्वेषा बुद्धिसमाधानासंभवान्मन्दबुद्ध्यनुग्रहाय सगुणोपासनोक्तेत्यर्थः ॥ ३३ ॥

अवशिष्टव्यपदेशद्वयस्योत्तरमाह—

**स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥**

संबन्धव्यपदेशाद्भेदव्यपदेशाच्च ब्रह्मणः परं वस्त्वस्तीति यदुक्तं तदप्यनुपपन्नम् । स्थानविशेषादुपाधिविशेषाद्व्यपदेशद्वयोपपत्तेः । तथा हि—बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषज्ञानस्योपाध्युपशमे य उपशमः स एव परमात्मना संबन्ध इत्युपाध्यपेक्षयोपचर्यते न परिमितत्वापेक्षया । तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैवोपचर्यते न स्वरूपभेदापेक्षया । प्रकाशवदिति दृष्टान्तः । यथैकस्य प्रकाशस्य सावित्रस्य चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्यपेक्षयैवैतौ भेदव्यपदेशौ भवतस्तद्वदिति भाष्यम् । संबन्धव्य-

पदेशश्चोपाधिनाशमपेक्ष्य घटभङ्गे घटाकाश एव महाकाशवदुपचर्यते भेदव्यपदेशश्चोपाध्युद्भवमपेक्ष्य घटाकाशमहाकाशवदुपचर्यत इत्यभिप्रायः ॥ ३४ ॥

**उपपत्तेश्च ॥ ३५ ॥**

संबन्धभेदव्यपदेशावुक्तप्रकारेणैवोपपद्येते । ' स्वमपीतो भवति ' [ छा० ६ । ८ । १ ] इति स्वरूपसबन्धमामनन्ति । नच चैतन्दस्याप्ययः संभवतीत्युपाधिकृतस्वरूपतिरोधानात्स्वाप्यय उपपन्नतरः । ' अयमात्मा ब्रह्म ' [ बृ० ४ । ४ । ५ ] इत्याद्यभेदश्रुतिविरोधाच्च भेदोऽप्यौपाधिक एवोपपन्नतरः ॥ ३५ ॥

एवं ब्रह्मव्यतिरिक्तवस्तुसाधकहेतूनन्यथासिद्धत्वेनोन्मथ्य स्वपक्षसाधकं हेत्वन्तरमाह—

**तथाऽन्यप्रतिषेधात् ॥ ३६ ॥**

' यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ' । [श्वे० ३ । ९] ' पुरुष एवेद सर्वं ' [ श्वे० १५ ] ' सर्वं खल्विद ब्रह्म ' [ छा० ३ । १४ । १ ] ' नेह नानाऽस्ति किंचन ' [ बृ० ४ । ४ । १९ ] इत्यादिनाऽन्यवस्तुप्रतिषेधादपि न परमात्मनोऽन्योऽन्तरात्माऽस्तीत्यवधार्यते । तस्माद्ब्रह्मणः सकाशादन्यच्चेतन वस्तु नास्तीति सिद्धम् । यत्तु कश्चिदाह—ननु ब्रह्म नाव्यक्तम् । ध्यानकाले चित्ते प्रतीयमानत्वात् । न च ध्यानकाले प्रतीत न ब्रह्म । ध्यातृबहुत्वेन बहुत्वापत्तेरिति वाच्यम् । स्वरूपभेदाभेदाभावेऽपि ब्रह्मरूपाणां नानात्वाभ्युपगमेनेष्टापत्तेः । अन्यथा ध्यानवैयर्थ्याच्च । न हि यस्य कस्यचिद्ध्यानाद्ब्रह्म फल ददातीति युक्तम् । अतिप्रसङ्गात् । एव प्राप्ते सिद्धान्तमाह—तथाऽन्यप्रतिषेधात् । ध्यानकाले प्रतीतत्वेन ब्रह्म व्यक्तमिति न मन्तव्यम् । ध्यानकाले प्रतीतस्याब्रह्मत्वात् । यथा खलु जीवानन्दादीनामल्पत्वात्पूर्णस्य ब्रह्मानन्दादेस्ततो भेदस्तथोपासनाकाले प्रतीतस्य व्यक्तत्वादव्यक्तस्य ब्रह्मणस्ततो भेद एव ।

' यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् '
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ' [ केनो० १ । ५ ]

इति श्रुत्योपास्यस्य ब्रह्मत्वप्रतिषेधाच्च । उक्त च ब्रह्मतर्के—

' पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
तदुपासन च भवति प्रतिमोपासनं यथा ' इति ॥

तदसत् । तथा हि । यद्युपास्य न ब्रह्म तर्ह्युपासनाविध्यन्तर्गता ब्रह्मशब्दा अब्रह्मपरा एव स्युः । ब्रह्मण उपासनाविधिविषयत्वेऽनुपास्यत्वायोगात् । न हि संभवत्युपासनाविधिषूपास्यसमर्पकैः पदैर्ब्रह्मोपास्यतया समर्प्यते उपास्य च न भवतीति मुक्तानामपि चिद्रूपे-

णापि मनसाऽनुपास्यत्वप्रसङ्गाच्च । ब्रह्मतर्कवचनस्य कल्पितत्वादकल्पितत्वेऽप्यज्ञभेदिजन-मोहनार्थत्वाच्चेति दिक् ॥ ३६ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ ( ७ )**

अनेन सेतून्मानादिव्यपदेशनिराकरणेनान्यप्रतिषेधनेन च सर्वगतत्वमात्मनः सिद्धं भवति । अन्यथा तन्न सिध्येत् । सर्वगतत्वं चास्याऽऽयामशब्दादिभ्योऽवगम्यते । आयामशब्दो व्याप्तिवचनः शब्दः । 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' [छा० ८ । १ । ३ ] 'आकाशवत्सर्वगतश्च नित्यः' । 'ज्यायान्दिवो ज्यायानाकाशात्' श० प० १० । ६ । २ । ३ ] इत्यादिशब्देभ्यः । यद्यपि तदनन्यत्वमित्यत्र सर्वप्रपञ्चस्य मिथ्यात्वमुक्तं तथाऽपि सेत्वादिव्यपदेशनिमित्ताशङ्कानिरासायेदमधिकरणम् ॥ ३७ ॥ (७)

**फलमत उपपत्तेः ॥ ३८ ॥**

तस्यैव ब्रह्मण इदानीं व्यवहारदशायां फलदातृत्वं प्रतिपद्यते । यदेतत्प्रतिप्राणीष्टानिष्टव्यामिश्रलक्षणं त्रिविधं कर्मफलं किं कर्मणः कारणभूताद्भवति किं वेश्वराद्भवतीति संशये सिद्धान्तेनोत्तरमुपक्रमते । ईश्वरादेव तत्फलं भवितुमर्हति । कुतः । उपपत्तेः । सर्वज्ञस्य सर्वशक्तेरीश्वरस्यैव कर्मिणां तत्तत्कर्मानुरूपफलदानसामर्थ्यमुपपद्यते । कर्मण आशुतरविनाशिनः कालान्तरभाविफलदाने हि नैव सामर्थ्यमुपपद्यते न ह्यभावाद्भावोत्पत्तिः संभवति । अथोच्येतापूर्वात्फलमुत्पत्स्यत इति । तदपि नोपपद्यते । अपूर्वस्याचेतनस्य चेतनेनाप्रवर्तितस्य फलदानसामर्थ्याभावात् । तस्मादीश्वर एव तत्तत्कर्मानुरूपं जीवानां फलं ददातीति सिद्धम् ॥ ३८ ॥

**श्रुतत्वाच्च ॥ ३९ ॥**

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः किं तर्हि श्रुतत्वात् । तथा हि श्रुतिः— 'स वा एष महानज आत्माऽन्नादो वसुदानः' [ बृ० ४ । ४ । २४ ] इत्येवमादिका ॥ ३९ ॥

**धर्मं जैमिनिरत एव ॥ ४० ॥**

मतान्तरमाह—जैमिनिस्त्वाचार्यो धर्मं फलदातारं मन्यते । कुतः । अत एव । उपपत्तेः श्रुतत्वाच्च । 'स्वर्गकामो यजेत' इति विधिश्रुतेर्यागस्य स्वर्गरूपफलं प्रति साधनत्वं श्रुतम् । अन्यथा ह्यननुष्ठातृको याग आपद्येत । तथात्व उपदेशवैयर्थ्यं स्यात् । तस्माद्धर्म एवापूर्वद्वारा कर्मफलमनुष्ठातुर्ददाति किमर्थं तत्रेश्वरापेक्षेति ॥

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ।**

तुशब्दः पूर्वपक्षनिरासार्थः । बादरायण आचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलं जायत इत्ययं पक्षो न साधुः । कुतः । हेतुव्यपदेशात् ।

धर्माधर्मयोरपि कारयितृत्वेनेश्वर एव हेतुरिति व्यपदेशात् । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति यमधो निनीषते' [ ३ । ८] इति श्रूयते । स्मर्यते चायमर्थो भगवद्गीतासु—

'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान्' ॥ [ भ० ७ । २१ ]

सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते । तदेवेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजति । कृतप्रयत्नापेक्षत्वान्नेश्वरे वैषम्यादिप्रसङ्गः । तस्मादीश्वर एव फलदातेति सिद्धम् । अस्मिन्पादेऽष्टावधिकरणानि । तत्र स्वप्नसृष्टिमिथ्यात्वेन कर्तृत्वादेराध्यासिकत्वादसङ्गित्वं जीवस्योक्तम् । सुषुप्तौ ब्रह्मैक्येन तदेवासङ्गित्वं दृढीकृतम् । तस्यैव पुनः प्रबोधेनानित्यत्वशङ्कानिरासः । मूर्छादौ सर्वव्यवहारलोपेऽपि जीवनाशशङ्कानिरासः । इत्यधिकरणचतुष्टयेन त्वंपदार्थः शोधितः । अनन्तराधिकरणचतुष्टयेन तत्पदार्थः शोधितः । तत्र प्रथमेन ब्रह्मणो नीरूपत्वं द्वितीयेन निषेधाविषयत्वं तृतीयेनाद्वितीयत्वं चतुर्थेन व्यवहारदशायां फलदातृत्वं शाखाचन्द्रन्यायेनोपलक्षणत्वाय प्रतिपादितम् । इत्येवं तत्त्वंपदार्थौ शोधिताविलयवधेयम् ॥ ४१ ॥ ( ८ )

## इति श्रीलक्ष्मीनरहरिसूनुहरिदीक्षितकृतौ ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

अथ तृतीयः पादः ।

---

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

एवं द्वितीयपादे तत्त्वंपदार्थशोधनपूर्वकमद्वितीयब्रह्मतत्त्वं व्याख्यातम् । इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते । ननु निर्विशेषमेकमेवाद्वितीयं ब्रह्मैकरसं सैन्धवघनवदवधारितं तत्र कुतो विज्ञानभेदाचिन्तावसर इति चेत् । उच्यते । सगुणब्रह्मविषया विज्ञानभेदाभेदचिन्तेति न दोषः । सगुणोपासनायाश्चित्तस्थिरीकरणद्वारा निर्गुणविद्यायामुपयोगात्तत्प्रसङ्गाद्विद्यान्तराणामपि भेदाभेदविचारोऽत्र क्रियते । अत्र हि कर्मवदुपासनानां दृष्टफलान्यदृष्टफलानि चोच्यन्ते । क्रममुक्तिफलानि च कानिचित्सम्यग्दर्शनोत्पत्तिद्वारेण । तेष्वेषा चिन्ता संभवति । किं प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति संशयः । भिद्यन्त इति तावत्प्राप्तम् । नामभेदाद्रूपभेदाच्च । नामभेदस्तावत्तैत्तिरीयकं बाज-

सनेयकं कौथुममित्यादिः । तथा रूपभेदोऽपि केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति । अपरे पुनः पञ्चैव पठन्ति । तथा प्राणसंवादादिषु केचिदूनान्वागादीनामनन्ति केचिदधिकान् । तथा धर्मविशेषोऽपि कर्मभेदप्रतिपादकः । यथाऽऽथर्वणिका आमनन्ति—'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रत विधिवद्यैस्तु चीर्णम्' इति । शिरोव्रतं नाम वेदव्रतविशेषः । तस्मात्प्रतिवेदान्त नामादिभेदाद्विज्ञानानि भिद्यन्त इति प्राप्ते ब्रूमः—सर्ववेदान्तप्रत्ययम् । सामान्याभिप्रायमेकवचनम् । सर्वेषु वेदान्तेषु प्रत्ययानि विज्ञानानि न भिन्नानि । कुतः । चोदनाद्यविशेषात् । यथा 'अग्निहोत्रं जुहोति' इति चोदनैक्याच्छाखाभेदेऽपि कर्मैक्यम् । एवं शाखाभेदेऽपि विध्यभेदा उपासनानि न भिद्यन्ते । तथा च च्छान्दोग्ये—'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' [ छा० ५ । १ । १ ] इति यादृशः प्राणविद्याविधिस्तादृश एव बृहदारण्यकेऽप्याम्नायते । तथा पञ्चाग्निविद्यायां द्युपर्जन्यादियत्स्वरूपमग्निपञ्चकं तदुभयोरपि च्छान्दोग्यबृहदारण्यकयोः समानम् । आदिशब्देन फलाविशेष उक्तः । 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' [ बृ० ६ । १ । १ ] इति प्राणोपास्तिजन्यस्य समानफलस्य श्रवणात् । यस्तु कौथुमादिनामभद उदाहृतः सोऽप्यध्ययनविषय एव न तूपास्तिविषयः । अध्ययनधर्मत्वावगमात् । तस्मान्न शाखाभेदादुपासनं भिद्यते ॥ १ ॥

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

ननु बृहदारण्यके पञ्चाग्निविद्याया अग्निरधिक आम्नायते—'तस्याग्निरेवाग्निर्भवति' [ बृ० ६ । २ । १४ ] इत्यादिना । छन्दोगास्तु तं नाऽऽमनन्ति पञ्चसंख्ययैव च त उपसंहरन्ति । 'अथ ह य एतानेव पञ्चाग्नीन्वेद' [ छा० ५ । १० । १० इति । येषां च वाजसनेयिनां स गुणोऽस्ति येषां च च्छन्दोगानां नास्ति कथमुभयेषामेका विद्योपपद्येत । तस्माद्विद्याभेद इति चेन्न । यत एकस्यामपि विद्यायां गुणभेद उपपन्नः । षोडशिग्रहणाग्रहणवत् । यथा 'अतिरात्रे षोडशिनं गृह्णाति ।' 'नातिरात्रे षोडशिनं गृह्णाति' इति षोडशिग्रहणाग्रहणाभ्यां नातिरात्रभेदस्तथाऽत्रापि न विद्याभेदः । वस्तुतो वाजसनेयिभिराम्नातस्य षष्ठस्याग्नेश्छान्दोग्य उपसंहारसभवान्न विद्याभेदः ॥ २ ॥

ननु शिरोव्रतस्याऽऽथर्वणिकैराम्नानादन्यत्रानाम्नानाद्भवति विद्याभेद इत्यत आह—

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायस्यैव शिरोव्रतलक्षणो धर्मो न विद्यायाः । कथमिदमवगम्यते । यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थ आथर्वणिका आमनन्ति । 'नैतदचीर्णव्रतोऽधीते' [ मु० ३ । २ । ११ ] इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दा-

च्चाध्ययनधर्म एवैष इति निर्धार्यते । ननु ‘ तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ’ [ मु० ३ । २ । १० ] इति ब्रह्मविद्याश्रवणादेकैव सर्वत्र ब्रह्मविद्येति सर्वशाखास्वयं धर्मः प्राप्नुयादिति चेन्न । तत्राप्येतामिति प्रकृतविद्यापरामर्शात् । प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येव धर्मः । सववच्च तन्नियम इति दृष्टान्तनिर्देशः । यथा सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादाथर्वणोदितैकाग्न्यभिसंबन्धाच्चाऽऽथर्वणिकानामेव नियम्यन्ते तथाऽयमपि धर्मः स्वाध्यायविशेषसबन्धात्तत्रैव नियम्यते । तस्मान्न विद्याभेदः ॥ ३ ॥

## दर्शयति च ॥ ४ ॥ ( १ )

श्रुतिरपि विद्यैक्यं दर्शयति–‘सर्वे वेदा यत्पदमामनन्ति [ कं० २ । १५ ] इति । तथा ह्येतमेव बहवृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः ’ [ ऐ० आ० ३ । २ । ३ १२ ] इति । अत्र हि विद्यैक्य निर्गुणपरब्रह्मपरमेव तथाऽपि तत्साहचर्यात्सगुणब्रह्मविद्यैक्यं प्रायदर्शनन्यायेन गम्यते ॥ ४ ॥ ( १ )

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ ( २ )

सर्ववेदान्तप्रत्ययमित्यनेन पूर्वाधिकरणेन वेद्यैकत्वाद्विद्यैकत्वं निर्धारितम् । इदं तस्य प्रयोजनसूत्रम् । वाजसनेयके प्राणविद्यायामधिको गुणो रेतआख्य आम्नातः । ‘ रेतो होच्चक्राम ’ [ बृ० ६ । १ । १२ ] इति । छान्दोग्ये नाऽऽम्नातः । स किं छान्दोग्योक्तप्राणविद्यायामुपसहर्तव्यो न वेति संशये तत्राश्रुतत्वान्नोपसंहर्तव्यः । विद्योपकारस्तत्र श्रुतैरेव वागादिभिर्गुणैर्भविष्यतीति प्राप्ते ब्रूमः । एतच्छाखायामश्रवणेऽपि शाखान्तरे श्रुतत्वादुपसंहर्तव्य एव । कुतः । अर्थाभेदात् । विज्ञानैकत्वात् । विधिशेषवत् । यथाऽग्निहोत्रादिशेषस्याङ्गस्य शाखान्तरपठितस्य शाखान्तर उपसहारस्तद्वत् । न च शाखान्तरोक्तगुणैरेव विद्योपकारसिद्धौ गुणोपसंहारो निरर्थक इति वाच्यम् । कर्मभूयस्त्वात्फलभूयस्त्वन्यायेन स्वशाखोक्तगुणवत्परशाखोक्तगुणानामप्युपकारित्वात् । तस्माद्गुणोपसहारः कर्तव्यः ॥ ५ ॥ ( २ )

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

शङ्कासूत्रमिदम् । वाजसनेयके श्रूयते—‘ ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययाम ’ [ बृ० १ । ३ । १ ] इति । ‘ ते ह वाचमूचुस्त्वं न उद्गाय ’ [ बृ० १ । ३ । २ ] इत्युपक्रम्य वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते–‘ अथ हेममासन्य प्राणमूचुस्त्व न उद्गायेति तथेति तेभ्य एष प्राण उदगायत् ’ [ बृ० १ । ३ । ७ ] इति । छान्दोग्येऽपि—‘ तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः ’ [ छा० १ । २ । १ ] इत्युपक्रम्येतरान्प्राणानसुरविध्वस्तत्वेन

निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते—‘ अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे ’ [ छा० १ । २ । ७ ] इति । उभयत्रापि प्राणप्रशंसया प्राणविद्या विधीयते । तत्र संशयः । किमत्र विद्याभेदः स्यादथ वा विद्यैकत्वमिति । किं तावत्प्राप्तम् । पूर्वेण न्यायेन विद्यैकत्वमिति । ननु न विद्यैकत्वं युक्तम् । किं तर्ह्यन्यथात्वं विद्याभेदो युक्त इत्यर्थः । कुतः । शब्दात् । अन्यथोपक्रमन्ते वाजसनेयिनोऽन्यथा हि छन्दोगाः । ‘ त्वं न उद्गाय ’ [ बृ० १ । ३ । १ ] इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति । छन्दोगास्तूद्गीथमित्युद्गीथत्वेन प्राणं पठन्ति । एवं च शब्दभेदादर्थभेदप्रतीतेः कथं विद्यैकत्वमितिचेन्न । कुतः । अविशेषात् । अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात् । तथा हि—देवासुरसङ्ग्रामोपक्रमोऽसुरपराजय उद्गीथोपन्यासो वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रयस्तद्वीर्याच्चासुरविध्वंस इत्यादयो बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते ॥६॥

एवं बहुतरसाम्याद्विद्यैकत्वमिति प्राप्ते ब्रूमः—

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

विद्याभेद एवात्र न्याय्यः । कुतः । प्रकरणभेदात् । प्रक्रमभेदादित्यर्थः । तथा हीह प्रक्रमभेदो दृश्यते । छान्दोग्ये—‘ओमित्येतदक्षरमुद्गीथमुपासीत ’ [ छा० १ । १ । १ ] इत्युद्गीथावयवस्योकारस्योपास्यत्व प्रक्रम्याथ ‘ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ’ [ छा० १ । १ । १० ] इति । पुनरपि तमेवोद्गीथावयवमोकारमनुवर्त्य देवासुराख्यायिकाद्वारेण तम् ‘ उपासांचक्रिरे ’ [ छा० १ । २ । २ ] इत्याह । तत्र यद्युद्गीथशब्देन सकला सामभक्तिर्विवक्ष्येत तत्कर्ता चोद्गातर्त्विक्प्राणो विवक्ष्येत तदोपक्रमविरोधो लक्षणा च स्यात् । तस्मादत्रोद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते । वाजसनेयके तूद्गीथशब्देनावयवग्रहणकारणाभावादुद्गीथशब्देन सकला सामभक्तिरुच्यते तदुद्गातृत्वे च प्राणस्योपासनमित्युपक्रमभेदः । उपक्रमानुसारी चोपसंहार इत्युपास्यभेदाद्विद्याभेदः । परोवरीयस्त्वादिवत् । यथा परमात्मोपासनत्वसाम्येऽपि ‘ आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ’ [ छा० १ । ९ । १ ] ‘ स एष परोवरीयानुद्गीथ. स एषोऽनन्त. ’ [ छा० १ । ९ । २ ] इति परोवरीयस्त्वविशिष्टमुद्गीथोपासनमक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिविशिष्टोद्गीथोपासनाद्भिन्नं तद्वत् । परस्माद्वरीयान्परोवरीयानित्यत्र सुडागमश्छान्दसः । यत्तु सङ्ग्रामादिसाम्यमुक्तं तदप्रयोजकम् । अर्थवादत्वात् । यदपि प्राणस्यासुरविद्धत्वाभावेन श्रेष्ठत्वं तद्यद्युपास्य तथाऽप्युक्तस्य वेद्यभेदस्यानिराकरणाद्भिन्नैवोद्गीथविद्या ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ (३)

ननूद्गीथविद्येत्युभयत्र संज्ञैकत्वाद्विद्यैकत्वं न्याय्यमिति चेत् । तुर्नार्थे । तदुक्तम् । ‘ न वा प्रकरणभेदात् ’ [ ब्र० सू० ३ । ३ । ७ ] इत्यस्मिन्सूत्रे भेदकारणमुक्तमित्यर्थः ।

संज्ञाया व्यभिचारमाह—अस्तीति । अत्र भाष्यम्—अस्ति चैतत्संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेपूद्गीथविद्येति त(य)था प्रसिद्धभेदानामप्यग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपठितानां काठकसंज्ञैकत्वं दृश्यते तथेहाप्युद्गीथसंज्ञैकत्वं न तु विद्यैकत्वम् । यत्र तु नास्ति कश्चिदेवंजातीयको भेदहेतुस्तत्र भवतु संज्ञैकत्वाद्विद्यैकत्वं यथा संवर्गविद्यादिषु ॥ ८ ॥ ( ३ )

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥ ( ४ )

'ओमित्येतदक्षरमुद्गीथमुपासीत' [छा०१ १।१] इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्येन विद्याभेदो निरूपितः । इदानीमुद्गीथस्याक्षरविशेषणसमर्थनायेदमधिकरणम् । तत्राक्षरमुद्गीथमिति सामानाधिकरण्ये भवति चतुर्धा संशयः । तथा हि 'नाम ब्रह्मेत्युपासीत (स्ते)' [छा०७।१।५] इत्यत्र नाम्नि ब्रह्मदृष्ट्यध्यासाय सामानाधिकरण्यं श्रुतम् । तथा बाधादिष्वप्युदाह्रियते यश्चोरः स स्थाणुरिति चोरस्य बाधः । यो जीवस्तद्ब्रह्मेत्येकत्वम् । यन्नीलं तदुत्पलमिति विशेषणविशेष्यत्वम् । एवं चतुर्णां पक्षाणां मध्येऽयमेवात्र न्याय्य इति निश्चयकारणाभावान्नास्त्यध्यवसाय इति प्राप्तावीदमुच्यते—'व्याप्तेश्च समञ्जसम्' इति । चशब्दोऽयं पक्षत्रयव्यावर्तकः । तदिह विशेषणपक्ष एवात्रोपादीयते । ओंकारो ऋग्यजुःसामसु त्रिषु पठ्यते । तत्र कस्योपास्यत्वमित्यपेक्षायामुद्गीथभागगतस्य न त्वितरस्येति सामवेदगतस्य विशेषणीयत्वात् । अध्यासबाधैक्यपक्षेषु फलमपि कल्पनीयं प्रसज्येत । स्वतन्त्रोपासनत्वेन फलस्याऽऽकाङ्क्षितत्वात् । विशेषणपक्षे तु वक्ष्यमाणगुणोपासनाय प्रतीकत्वेनोंकार उद्गीथशब्देन विशेष्यते न तु स्वतन्त्रमुपासनम् । ततो न पृथक्फलं कल्पनीयम् । अध्यासो न सभवति नाम्नि ब्रह्मदृष्टिवदुद्गीथाक्षरयोरन्यतरस्मिन्नन्यतरबुद्ध्यध्यासे लक्षणाप्रसङ्गात्फलकल्पनाप्रसङ्गाच्च । नाप्यपवादः । स्थाणुत्वबुद्ध्या चोरनिवृत्तिबुद्धिवदुद्गीथबुद्ध्योंकारबुद्धेरनिवर्तनात्पुरुषार्थाभावाच्च । नाप्येकार्थत्वपक्षः प्रयोजनाभावात् । अनतिरिक्तार्थत्वेऽन्यतरवैयर्थ्यात् । एकेनैव विवक्षितार्थसमर्पणात् । नन्वस्मिन्पक्षे समाना लक्षणा । उद्गीथशब्दस्यावयवलक्षणार्थत्वात् । सत्यम् । लक्षणायामपि तु संनिकर्षविप्रकर्षौ भवतः । अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा । विशेषणपक्षे त्ववयविवाचिना शब्देनावयवः समर्प्यत इति संनिकृष्टा । अतश्च व्याप्तेर्हेतोरोमित्येतदक्षरमित्येतस्योद्गीथमित्येतद्विशेषणमिति समञ्जसमेतान्निरवद्यमित्यर्थः ॥ ९ ॥ ( ४ )

## सर्वाभेदादन्यत्रेमे ॥ १० ॥ ( ५ )

प्राणविद्यायां छन्दोगाः काण्वाश्च प्राणसंवादे श्रेष्ठगुणान्वितस्य प्राणस्योपासनमुक्त्वा वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः । तांश्च गुणान्प्राणे पुनः प्रत्यर्पयन्ति । अन्ये कौषीतकिप्रभृतयो वसिष्ठत्वादिगुणान्नाऽऽमनन्ति । तत्र संशयः । किमेते

वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्रोपसंहर्तव्या उत नेति । नोपसंहर्तव्या इति तावत्प्राप्तम् । कुतः । 'य एवं वेद' इत्येवशब्देन तत्तच्छाखोक्तगुणानामेव परामर्शादिति प्राप्ते ब्रूमः । उक्तगुणवदनुक्ता अपि गुणा एवंशब्दपरामर्शयोग्याः । कुतः । गुणिनः प्राणस्यैकत्वेन तद्द्वारा गुणानां बुद्धिस्थत्वात् । यथा देवदत्तो मथुरायामध्यापयन्दृष्टः पुनर्माहिष्मत्यामनध्यापयन्नप्यध्यापकत्वेनैव प्रत्यभिज्ञायते तथा छान्दोग्यादौ वसिष्ठत्वादिगुणयुक्ततयोपलब्धः प्राणः कौषीतक्यादौ केवल उपलभ्यमानोऽपि तद्गुणविशिष्टतयैव बुद्धिस्थो भवेत् । तदुक्तं भाष्ये—एकस्यामपि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति । गुणवतो भेदाभावादिति । तस्मादेकप्रधानसंबद्धा धर्मा एकत्र पठ्यमाना अन्यत्रोपसंहर्तव्याः ॥ १० ॥ ( ५ )

## आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु विज्ञानघन[त्व]मानन्दस्वरूपत्वं सर्वगतत्वं सर्वात्मत्वमेवमाद्या ब्रह्मणो धर्माः पठ्यन्ते । तत्र संशयः—यत्र यावन्तो धर्माः पठितास्त एव तत्र ग्राह्या अथवा शाखान्तरोक्ता अप्युपसंहर्तव्या इति । तत्र किं तावत्प्राप्तम् । 'प्रज्ञानं ब्रह्म' [ ५ । ३ ] इत्याद्यैतरेयकादिप्रोक्तासु ब्रह्मविद्यासु ते धर्मा नोपसंहर्तव्या इति । कुतः । वामनीत्वादेरिव व्यवस्थोपपत्तेः । 'एष उ वामनीः' [ छा० ४ । १५ । ३ ] 'एष उ भामनीः' [ छा० ४ । १५ । ४ ] इति कामनेतृत्वभासकत्वादयो गुणा उपकोसलविद्यायामाम्नाताः । 'सत्यकामः सत्यसंकल्पः' [ छा० ८ । १ । ५ ] इति सत्यसंकल्पादयो गुणा दहरविद्यायामाम्नाताः । तत्र यथा न गुणानामुपसंहार एवमानन्दादीनां व्यवस्थेति प्राप्ते ब्रूमः । विषमो दृष्टान्तः । वामनीत्वादीनां ध्येयत्वेन विधीयमानत्वाद्व्यवस्था युक्ता । आनन्दादयस्तु प्रतिपत्तिफला इति न विधीयन्ते । अतो व्यवस्थापकविध्यभावात्प्रतिपत्तिफलस्य सर्वत्र समानत्वाच्चाऽऽनन्दादय उपसंहर्तव्याः । तदुक्तं भाष्यकारैः—आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्रोपसंहर्तव्याः । कस्मात् । सर्वाभेदादेव । सर्वत्रैव हि तदेकं प्रधानं विशेष्यं ब्रह्म न भिद्यते । तस्मात्सार्वत्रिकत्वं ब्रह्मधर्माणामिति ॥ ११ ॥

नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन् । तथा हि—तैत्तिरीयक आनन्दमयमात्मानं प्रक्रम्याऽऽम्नायते 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' [ तै० २ । ५ । १ ] इति । अत्रोत्तरमाह—

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

प्रियशिरस्त्वादिधर्माणां तैत्तिरीयक आम्नातानां नास्ति ब्रह्मण्युपसंहारः। हि यस्माद्भेदे सत्युपचयापचयौ भवतः। प्रियमोदप्रमोदानां तारतम्याद्भेदस्याऽऽवश्यकतया नाद्वितीये ब्रह्मण्युपसंहारः संभवतीत्यर्थः। न चैते प्रियशिरस्त्वादयो ब्रह्मधर्माः कोशधर्मास्त्वेत इत्युपदिष्टम्–' आनन्दमयोऽभ्यासात् ' [ ब्र० सू० १ । १ । १२ ] इत्यत्र। अपि च परस्मिन्ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते न द्रष्टव्यत्वेन। एवमपि सुतरां ब्रह्मण्युपसंहाराप्राप्तिः। प्रियशिरस्त्वादीनां ब्रह्मधर्मत्वं कृत्वा न्यायः सूत्रकारेण दर्शितः प्रियशिरस्त्वाद्यप्राप्तिरिति। यथा संयद्वामादयः सत्यसंकल्पादयश्च धर्मा उपास्यस्य ब्रह्मण एकत्वेऽपि प्रक्रमभेदादुपासनभेदे सति नान्यत्रोपसंहार एवमिहापीति ॥ १२ ॥

ननु तद्वदेवाऽऽनन्दादयोऽपि नान्यत्रोपसंह्रियेरंस्तत्रोत्तरमाह—

**इतरे त्वर्थसामान्यात् ॥ १३ ॥ ( ६ )**

तुर्नार्थे। इतर आनन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपत्त्यर्थाः। कुतः। अर्थसामान्यात्। अर्थस्य प्रतिपाद्यस्य ब्रह्मणो धर्मिणः सामान्यादेकत्वात्। सर्वे सर्वत्र प्रतिज्ञायेरन्नित्यर्थः। उपासनाविधिपरे वाक्ये विधेयगुणानां व्यवस्थैव नोपसंहारः ॥ १३ ॥ ( ६ )

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥**

कठवल्लीषु पठ्यते—

' इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।

पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ' [ क० ३ । १०–११ ] इति।

अस्यायमर्थः–यद्यपि मनसा विषयानभिलष्य पश्चादिन्द्रियैर्बाह्यान्विषयान्प्राप्नोति तत्र बाह्यविषयेभ्य इन्द्रियाणामान्तरत्वात्परत्वं प्रसिद्धं तथाऽपीन्द्रियेभ्यश्चाभिलष्यमाणदशाया-मर्था आन्तराः। तेभ्योऽप्यभिलाषात्मिका मनोवृत्तिरान्तरा। वृत्तेरपि वृत्तिमती बुद्धिरान्तरा। बुद्धेरपि बुद्ध्युपाधितो महच्छब्दवाच्यो हिरण्यगर्भरूप आत्माऽऽभ्यन्तरः। महतोऽपि तदुपादानभूतमव्यक्ताख्यं मूलाज्ञानमाभ्यन्तरम्। अव्यक्तादपि तदधिष्ठानभूतश्चिद्रूपः पुरुष आभ्यन्तरः। पुरुषादाभ्यन्तरं न किंचिदस्ति। पुरुष एवाऽऽभ्यन्तरतारतम्यस्य विश्रान्तिभूमिः पुरुषार्थकामैः परमो गन्तव्यप्रदेशश्चेति। तत्र यथा श्रुत्या पुरुषस्तात्पर्येण प्रतिपादित एवमिन्द्रियादिपरम्पराऽपि प्रतिपाद्यैव। अन्यथा तदुपन्यासवैयर्थ्यात्। तथा च

तत्तत्परस्य ज्ञानस्य प्रयोजनान्तरं कल्पनीयं वाक्यभेदश्चाङ्गीकार्य इति प्राप्ते ब्रूमः—आध्यानाय ध्यानपूर्वकसम्यग्ज्ञानाय पुरुष एवैकः सर्वेभ्यः परत्वेन प्रतिपाद्यते । नत्वर्थादयोऽपि । कुतः । प्रयोजनाभावात् । महीतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते श्रूयते वा । तस्मादाध्यानाय ध्यानपूर्वकसम्यग्दर्शनाय पुरुष एव प्रतिपाद्यः । तस्मिन्पुरुषे प्रतिपन्ने मोक्षः प्रयोजनम् । तथा च श्रुतिः—' निचाय्य तन्मृत्युमुखात्प्रमुच्यते ' [ क० ३ । १५ ] इति । अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयति श्रुतिः । तदनुगुणतयेतरेषामपि परत्वप्रतिपादनस्य साफल्येनैकवाक्यत्वे सभवति नादृष्टफलकल्पने वाक्यभेदाङ्गीकारो युक्तः ॥ १४ ॥

## आत्मशब्दाच्च ॥ १५ ॥ ( ७ )

इतश्च पुरुषप्रतिपत्त्यर्थमेवेन्द्रियाद्यनुक्रमणमिति गम्यते । यतो वाक्यशेषे पुरुषज्ञानायैव महता यत्नेन योग उपदिष्टः ।

' एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि· ' [ क० ३ । १२ ]

अस्यायमर्थः—सर्वाभ्यन्तरत्वेन गूढोऽयमात्मा न बहिर्मुखाणां प्रकाशते । अन्तर्मुखा ये सूक्ष्मतत्त्वदर्शनशीलास्तैर्योगाभ्यासेनैकाग्र्यमापन्नया बुद्ध्या सूक्ष्मवस्तुविषयया द्रष्टुं शक्यत इति । अत्र प्रकृत पुरुषमात्मशब्देन गृहीत्वा तस्य दुर्विज्ञेयत्वं प्रतिपाद्य तद्विज्ञानाय ' यच्छेद्वाङ्मनसी प्राज्ञः ' [ क० ३ । १३ ] इत्यादियोगप्रतिपादनात् । पुरुषज्ञानायैवाय श्रुतिप्रयासो निश्चीयते । न च पुरुषस्यैव प्रतिपाद्यत्वे परम्परोपदेशवैयर्थ्यं बहिर्मुखस्य चित्तस्य क्रमेण पुरुषप्रवेशायेन्द्रियादिपरम्परायाः साधनत्वात् । पुरुषशब्देनेतरेषामनात्मत्वान्न ध्यानविषयत्वम् । तस्मात्पुरुष एव ज्ञातव्यो नान्यः ॥ १५ ॥ ( ७ )

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

ऐतरेयके श्रूयते—' आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ऐ ( ई )-क्षत लोकान्नु सृजा इति ' । [ १ । १ ] ' स इमाँल्लोकानसृजत ' [ १ । २ ] इत्यादि । तत्राऽऽत्मशब्देन हिरण्यगर्भो विवक्षितः परमात्मा वेति संशयः । किं तावत्प्राप्तम् । हिरण्यगर्भ एवाऽऽत्मशब्दवाच्यो भवितुमर्हति । कुतः । ' स ऐ ( ई ) क्षत लोकान्नु सृजा इति ' पञ्चभूतसृष्टिमनुक्त्वा लोकमात्रसृष्टेरभिधानात् ।

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तते ॥ [ मार्क० पु० ४५ । ६४ ]

इति स्मृतेश्च । ईश्वरप्रकरणेषु तैत्तिरीयच्छान्दोग्यादिषु भूतसृष्टयभिधानदर्शनात् । ‘ ताभ्यो गामानयत् ’ [ ऐ० २ । २ । ३ ] इति चोक्तं गवाद्यानयनं शरीरिणो विराजो घटते न त्वशरीरस्येश्वरस्येति प्राप्ते ब्रूमः । अत्राऽऽत्मशब्देन परमात्मनो गृहीतिर्ग्रहणं युक्तम् । इतरवत् । यथेतरेषु सृष्टिवाक्येषु ‘ तस्माद्वा एतस्मादात्मन आकाशः संभूतः ’ [ तै० २ । १ ] इत्येवमादिषु परमात्मा गृह्यते तद्वदत्रापि । कुतः । उत्तरात्संदर्भात् । ‘ स ऐ(ई)क्षत ’ इतीक्षणपूर्वकस्रष्टृत्वस्येश्वरधर्मस्योत्तरत्र प्रतिपादनादित्यर्थः । तथा सति शाखान्तरोक्तभूत-सृष्टिरत्रोपसंहर्तुं शक्यते । यत्तु गवाद्यानयनं तदर्थवादरूपम् । तद्वेदनस्य स्वातन्त्र्येण पुरुषार्थत्वाभावात् । अथ भूतार्थवादत्वं मन्येथास्तर्हि विराडादिद्वारा परमेश्वर एव गवादिक-मानयतु । तस्मात्परमात्मग्रहणमेव न्याय्यम् ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥ ( ८ )

ननु हिरण्यगर्भग्रहणमेव युक्तम् । कुतः । अन्वयात् । वाक्यान्वयस्य हिरण्यगर्भविष-यत्वदर्शनादित्यर्थः । तत्र लोकसृष्टिरुक्ता । यत्र परमात्माऽभिप्रेतस्तत्र भूतसृष्टिरुच्यते । लोकाश्च भूतानां संनिवेशविशेषाः । तत्रेश्वरनियुक्तस्यान्यस्य हेतुत्वं संभवतीति चेत् । अत्रोच्यते—स्यादवधारणात् । परमात्मग्रहणमेवात्र युक्तम् । कुतः । अवधारणात् । ‘ आत्मा वा इदमेक एवाग्र आसीत् ’ [ ऐ० १ । १ ] इति प्रागुत्पत्तेरात्मैक्यावधारणात् । तच्च परमात्मपरिग्रहे समञ्जसं नान्यथा । लोकसृष्टावपि भूतसृष्टिरुपसहरिष्यते । यथा ‘ तत्तेजोऽसृजत ’ [ छा० ६ । २ । ३ ] इत्यादौ वियद्वायुसृष्ट्यनन्तरमिति योजितं तद्वदत्रापि शाखान्तरसिद्धमहाभूतसृष्ट्यनन्तरमेव लोकसृष्टिरिति योजनीयम् । एत्ते सृष्ट्यादयः पञ्चार्थवादा इत्युक्तम् । ननु श्रूयमाणस्य सर्वस्य प्रपञ्चस्यार्थवादत्वे श्रुतेर्विवक्षि-तोऽर्थः कोऽपि न सिध्येदिति चेन्न । जीवब्रह्मैक्यस्य विवक्षितत्वात् । ‘ आत्मा वा ’ [ ऐ० १ । १ ] इत्युपक्रम्य ‘ स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत ’ [ ऐ० ३ । १२ ] इति शरीरानुप्रवेशमुक्त्वा तथोपरिष्टात् ‘ एष ब्रह्मैष इन्द्रः ’ [ ऐ० ५ । ३ ] इत्यादिना समस्तभेदजात सह महाभूतैरनुक्रम्य ‘ सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ’ [ ऐत० ५ । ३ ] इत्युप-संहाराद्ब्रह्मात्मदर्शनमेवावधारयति श्रुतिः । तस्मादात्मग्रहणमेवानपवादम् । द्वितीयं वर्ण-कमाह—‘ आत्मगृहीतिरितरवदुत्तरात् ’ [ सू० १६ ] । बृहदारण्यके—‘ कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ’ [ बृ० ४ । ३ । ७ ] इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविमुक्तत्वप्रतिपादनेन ‘ स वा एष महानज आत्माऽ-जरोऽमरोऽमृतोऽभयो ब्रह्म ’ [ बृ० ४ । ४ । २५ ] इत्युपसहृतम् । छान्दोग्ये षष्ठाध्याये—‘ सदेव सौम्येदमग्र आसीत् ’ [ २ । १ ] इत्युपक्रम्य ‘ स आत्मा

तत्त्वमसि ' [ छा० ६ । ८ । ७ ] इति तादात्म्यमुपदिशति । किमुभयोः सदात्मशब्दयोरेकार्थत्वमाहोस्विद्भिन्नार्थत्वमिति विशये भिन्नार्थत्वमिति तावत्प्राप्तम् । लोके सदात्मशब्दयोरपर्यायत्वात् । इति प्राप्ते ब्रूमः । इतरवत् । वाजसनेयकवच्छा-न्दोग्येऽप्यात्मगृहीतिर्युक्ता । कुतः । उत्तरात् । 'अन्वयादितिचेत्स्यादवधारणात्'। ननु छान्दोग्ये 'सदेव सौम्येदमग्र आसीत् ' [ छा० ६ । २ । १ ] इत्युपक्रमस्तत्राऽऽत्मशब्दाश्रवणा-न्नाऽऽत्मगृहीतिरिति चेत् । उच्यते । सच्छब्दस्यैवाऽऽत्मपरत्वं स्यात् । कुतः । अवधार-णात् । सच्छब्दस्याऽऽत्मानात्मसाधारणत्वात् । सामान्यप्रतिपादकत्वेऽपि ' स आत्मा तत्त्व-मसि ' [ छा० ६ । ८ । ७ ] इति वाक्यशेषेण विशेषावधारणात् । तदुक्तं भाष्य-कृद्भिः । तथा हि–' येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ' [ छा० ६ । १ ३ ] इत्येकविज्ञाने सर्वविज्ञानमेवावधार्य तत्संपिपादयिषया सदेवेत्याह । तच्चाऽऽत्मगृ-हीतौ सत्यां संपद्यते । अन्यथा हि योऽयं मुख्य आत्मा स न विज्ञात इति नैव सर्वविज्ञानं संपद्येतेति । तस्मादुप[ पन्न ]तरमुभयत्रैकमेव वस्त्विति ॥ १७ ॥ ( ८ )

## कार्याख्यानादपूर्वम् ॥ १८ ॥ ( ९ )

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवाऽऽपो वास आम-नन्ति । तत्र छन्दोगा आमनन्ति ' तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टादद्भिः परिदधति ' [छा०५।२।२] इति । वाजसनेयिनश्चाऽऽमनन्ति–'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्य-शित्वा चाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' [ बृ० ६ । १ । १४ ] ' तस्मादेवं-विदशिष्यन्नाचामेदशित्वा चाऽऽचामेदेतमेव तदनमनग्नं कुरुते ' [ बृ० मा० ६ ।२। १५ ] इति । अत्रान्नशब्देन प्राणो विवक्षितः । तत्र किं प्राणविद्याङ्गत्वेनाऽऽचमनं विधीयत आहोस्विदाचमनीयास्वप्सु प्राणस्यानग्नताकरणचिन्तनमिति संशयः । आचमनमेव विधी-यत इति तावत्प्राप्तम् । कुतः । आचामेदिति विधिश्रवणात् । न च स्मृतिप्राप्तत्वादाचमनं न विधेयमिति वाच्यम् । अस्याः श्रुतेराचमनस्मृतिमूलत्वसंभवादिति प्राप्तेऽभिधीयते । अपूर्वमनग्नताचिन्तनमेव विधीयते ' अप्राप्ते शास्त्रमर्थवत् ' इति न्यायेन मानान्तराप्राप्त-त्वादनग्नताचिन्तनमेव विधेयम् । आचमनं तु न विधेयम् । कुतः । कार्याख्यानात् । आचमनस्य स्मृतिप्राप्तत्वादित्यर्थः । न च तस्याः स्मृतेरियमेव श्रुतिर्मूलमिति शङ्कनीयम् । वर्णाश्रमधर्मप्रकरणत्वाभावेन भिन्नविषयत्वात् । तन्मूलभूतं श्रुत्यन्तरमनुमेयम् । तस्मादा-चमनस्य प्राप्तं न विधेयत्वम् । भोजनात्प्रागूर्ध्वं चाऽऽचमनीयास्वप्सु वासोबुद्धिं कृत्वा तेन वाससा प्राणस्यानग्नत्वं ध्यायेदिति विधीयत इति सिद्धम् । विस्तरस्तु भाष्ये द्रष्टव्यः ॥ १८ ॥ ( ९ )

## समान एवं चाभेदात् ॥ १९ ॥ ( १० )

वाजसनेयिशाखायामग्निरहस्ये ब्राह्मणे शाण्डिल्यविद्या पठ्यते । तत्र गुणाः श्रूयन्ते–'स

आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमकामात्मानं कामरूपिण मनोजवं सत्यसंकल्पं सत्यधृतिं सर्वगन्ध सर्वरसं सर्वा दिशोऽनुप्रभूतम् ’ [ शतपथ० १० । ६ । ३२ ] इत्यादि । बृहदारण्यके तस्यामेव शाखाया पुनः श्रूयते—‘ मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एव सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ’ [ ५ । ६ १ ] इति । तत्र संशयः । किमियमेका विद्या वाजसनेयिबृहदारण्यकयोर्गुणोपसंहारश्चाथ वा द्वे विद्ये गुणानुपसहारश्चेति । किं तावत्प्राप्त विद्याभेद इति । कुतः । एकस्यां शाखायां प्रतिपत्तृभेदाभावेन पौनरुक्त्ये प्रामाण्यासंभवादभ्यासन्यायेन विद्याभेदस्याऽऽवश्यकत्वात् । इति प्राप्तेऽभिधीयते । मनोमयत्वादिकस्य वेद्यरूपस्य प्रत्यभिज्ञानादेकैव विद्या । यथा भिन्नशाखासु क्वचिदुत्पत्तिः क्वचिद्गुणविधिः । तयोरेकत्वं संभवति । ‘ अग्निहोत्रं जुहोति ’ ‘ दध्ना जुहोति ’ इति । एवं समानायां शाखायामपि विद्यैकत्वम् । कुतः । अभेदात् । उपास्याभेदात् । मनोमयत्वादिगुणक ब्रह्मोभयत्रोपास्यम् । उपास्यं च विद्यारूपं यथा द्रव्यदैवतं कर्मणः । तत्राग्निरहस्येऽनेकगुणश्रवणाद्भूयस्त्वन्यायेनोत्पत्तिविधिः । बृहदारण्यके गुणविधिः । न च तत्र मनोमयत्वश्रवणवैयर्थ्यम् । प्रत्यभिज्ञया विद्यैक्यसपादकत्वात् । अप्राप्तांशोपदेशेनार्थवति वाक्ये संजाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाऽप्युपपद्यमानत्वाच्च । समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्या प्रत्यभिज्ञाप्य तस्यां सर्वेशानत्वादिगुणा उपदिश्यन्त इति न काऽप्यनुपपत्तिः । तस्मादत्र समानायामपि शाखाया विद्यैकत्व गुणोपसहारश्चेत्युपपन्नम् ॥ १९ ॥ ( १० )

## संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके सत्यविद्यायां ‘ सत्यं ब्रह्म ’ [ बृ० ५ । ४ । १ ] इत्युपक्रम्य ‘ तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः ’ [ बृ० ५ । ५ । २ ] इति तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चाऽऽयतनमुपदिश्याऽऽधिदैविकस्य पुरुषस्याहरित्येतन्नाम ध्यानायोपदिष्टम् । तस्योपनिषदहरित्यधिदैवतमिति । आध्यात्मिकस्य त्वक्षिपुरुषस्याहमिति नामोपदिष्टम् । तस्योपनिषदहमित्यध्यात्ममिति । तत्र संशय. । किमविभागेनैवोभे अपि नामनी उभयत्रानुसंधातव्ये उत विभागेनेति । तत्र यथा शाण्डिल्यविद्यायां गुणोपसहार एवमन्यत्रापि सत्यविद्यायामपि नामद्वयस्योपसहारः । कुतः । सबन्धात् ॥ २० ॥

एकविद्यासंबन्धादिति प्राप्ते सिद्धान्तमाह——

## न वा विशेषात् ॥ २१ ॥

न वेति पक्षव्यावृत्तिः । उपसहारो न भवति । कुतः । विशेषात् । उपासनस्थानविशेषात् । ‘ य एष एतस्मिन्मण्डले पुरुषः ’ [ बृ० ५ । ५ । २ ] इत्युपक्रम्य ‘ तस्यो-

पनिषदहः ' इति तच्छब्देन मण्डलस्थमेव परामृश्याहरिति तस्यैव नामविशेष उपदिष्टः । तथा ' योऽयं दक्षिणेऽक्षन् पुरुषः ' [ बृ० ५ । ५ । २ । ] इत्युपक्रम्य ' तस्योपनिषदहम ' इति तच्छब्देनाक्षिस्थमेव परामृश्याहमिति तस्यैव नामविशेष उपदिष्टः । अतो विद्यैकत्वेन वेद्यस्य सत्याख्यस्य ब्रह्मण एकत्वेऽपि स्थानविशेषकटाक्षेण नामविशेषविधानादाध्यात्मिकाधिदैविकयोर्व्यवस्थिते नामनी न तु तयोरुपसहारोऽस्ति । यथा लोके गुरोरुपास्यस्यैकत्वेऽपि तिष्ठतो य उपचारः पादुकानिवेदनादिर्नासावासीनस्य युज्यते । आसीनस्योपचारः पादद्वयाभ्यङ्गादिर्नासौ तिष्ठतो भवति । तस्मादुपास्यैक्येऽपि स्थानभेदेन व्यवस्थयोपनिषद्द्वयचिन्तन कर्तव्यम् ॥ २१ ॥

## दर्शयति च ॥ २२ ॥ ( ११ )

लिङ्गं च स्थानविशेषेण धर्मव्यवस्थां दर्शयति—' तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ' [ छा० १ । ७ । ५ ] इति । कथमस्य लिङ्गत्वम् । तदुच्यते—अक्ष्यादित्यस्थानभेदभिन्नान्धर्मानादित्यपुरुषगतान्रूपादीनक्षिपुरुष उपसंहरति ' तस्यैतस्य तदेव रूपम् । [ छा० १ । ७ । ५ ] इत्यादिना । यथाऽऽदित्यपुरुषधर्मा अक्षिपुरुषे प्राप्येरंस्तथाऽतिदेशेनाऽऽदित्यरूपादिकमक्षिपुरुषे योजयेदित्यर्थः । तस्मान्नाम्नोर्व्यवस्थैवेति सिद्धम् ॥ २२ ॥ ( ११ )

## संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ ( १२ )

' ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ' इति राणायनीयानां खिलेषु पठ्यते । लोके हरिहरादौ प्रसिद्धानि वीर्याणि ब्रह्मपुरःसराण्येव सभृतानि । न हि सगुण ब्रह्मानपेक्ष्य वीर्याणि सभवन्ति । तत्र ज्येष्ठ ब्रह्म प्रथम दिव व्याप्य स्थितमिति श्रुत्यर्थः । अत्र वीर्यसंभृत्यादय उपास्यत्वेन श्रूयन्ते । तत्रैवोपनिषदि शाण्डिल्यादिविद्याः सन्ति । तासु संभृत्यादय उपसंहार्या न वेति संशये संबन्धाविशेषादुपसंहर्तव्या इति प्राप्तेऽभिधीयते । सभृतिश्च द्युव्याप्तिश्च सभृतिद्युव्याप्ती चकाराद्वीर्यपरिग्रहः । शाण्डिल्यविद्यादिषु सभृत्यादयो नोपसहर्तव्याः । कुतः । अत एवाऽऽयतनविशेषात् । तथा हि । शाण्डिल्यविद्याया हृदयायतनत्व ब्रह्मण उक्तम्—' एष म आत्माऽन्तर्हृदये ' [ छा० ३ । १४ । ३ ] इति । तद्वदेव दहरविद्याया ' दहर पुण्डरीक वेश्म दहरोऽस्मिन्नन्तराकाशः ' [ छा० ८ । १ । १ ] इति । उपकोसलविद्याया त्वक्ष्यायतनत्वम् ' य एषोऽक्षिणि पुरुषो दृश्यते ' [ छा० ४ । १५ । १ ] इति । एव तत्र तत्र भिन्नभिन्नमाध्यात्मिकमायतनमासु विद्यासु प्रतीयते । आधिदैविक्यः संभृतिद्युव्याप्तिप्रभृतयो विभूतय इत्यायतनभेदः । तासां संभृत्यादिविभूतीनां कुत एतासु शाण्डिल्यादिविद्यासूपसंहारः । न च संभृत्यादीनां गुणानामन्यतमोऽपि शाण्डिल्यादिविद्यासूपलभ्यते । येन प्रत्यभिज्ञया विद्यैक्यं

स्यात् । ब्रह्मैकत्वमात्रेणोपसंहृतौ न क्वाप्यनुपसंहार इत्यतिप्रसङ्गः । तस्मात्संभृत्यादेर्नोपसंहारः ॥ २३ ॥ ( १२ )

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ ( १३ )**

छन्दोगानां शाखाविशेषे ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्याऽऽम्नायते 'पुरुषो वाव यज्ञः' [ छा० ३ । १६ । १ ] इति । तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम् । तस्य यानि चतुर्विंशतिर्वर्षाणि तत्प्रातःसवनं चतुश्चत्वारिंशद्वर्षाणि माध्यंदिनं सवनमष्टाचत्वारिंशद्वर्षाणि तृतीयं सवनमिति । यदाशिशिषति यत्पिपासति यन्न रमते सा दीक्षा । अथ यद्धसति जक्षति ते स्तुतशस्त्रे इत्यादिधर्मा आम्नाताः । तैत्तिरीयकेऽपि 'तस्यैवंविदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः कामः' [ तै० आ० १० । ६४ ] इत्यादिनाऽनुवाकेन पुरुषविद्याऽऽम्नाता । तत्र संशयः । ताण्डिपैङ्गिशाखोक्ताः पुरुषविद्यागुणास्तैत्तिरीयके उपसंहर्तव्या न वेति । पुरुषयज्ञत्वाविशेषात् । 'यन्मरणं तदवभृथः' इत्युभयत्र समानधर्मश्रवणाच्चेति प्राप्ते ब्रूमः । चो नार्थे । नोपसंहर्तव्याः । अप्रत्यभिज्ञानात् । तदेव कुतः । इतरेषां मरणावभृथातिरिक्तगुणानां पैङ्गिरहस्यब्राह्मण उक्तानां तैत्तिरीयकेऽनाम्नानात् । यत्किंचित्साम्येऽपि बहुतरधर्मवैषम्यान्न प्रत्यभिज्ञानम् । तदाह सूत्रकारः— पुरुषविद्यायामिवेति । यथैकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नातं धर्मजातं नैवमितरेषां तैत्तिरीयकाणामाम्नातमस्ति । तेषां हीतरविलक्षणमेव यज्ञसंपादनं दृश्यते । पत्नीयजमानवेदवेदिबर्हिर्यूपाज्याद्यनुक्रमणात् । किंच विदुषो यो यज्ञस्तस्य यज्ञस्याऽऽत्मेति तैत्तिरीयके व्यधिकरणे षष्ठ्यौ । अन्यथाऽऽत्मा यजमान इति व्याघातः स्यात् । विज्ञानमेव यज्ञः स एव यजमान इति कथं न व्याहन्येत । ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं 'पुरुषो वाव यज्ञः' इति श्रुतम् । आत्मयजमानादिकं ताण्डिना नोपलभ्यते । यत्तु ताण्डिनामुपलभ्यते त्रेधा विभक्तस्याऽऽयुषः सवनत्रयत्वमित्यादि तद्विलक्षणमेव तैत्तिरीयक उपलभ्यते । अतो मरणावभृथत्वाद्यल्पसाम्यान्न विद्यैक्यम् । अपि च तैत्तिरीयकाणां नोपासनमिदं किं तर्हि ब्रह्मविद्याप्रशंसा । 'तस्यैव विदुषः' इति ब्रह्मविदोऽनुकर्षणात् । तस्मान्न विद्यैक्यशङ्काया अप्यवकाशोऽस्ति ॥ २४ ॥ ( १३ )

**वेधाद्यर्थभेदात् ॥ २५ ॥ ( १४ )**

आथर्वणिकानामुपनिषदारम्भे 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य' इत्यादय आभिचारिका मन्त्राः पठिताः । ताण्डिनाम्—'देव सवितुः प्रसुव यज्ञम्' [ छा०

ब्रा० १।१] इत्यादयः। शाट्यायनिनाम्—'श्वेताश्वो हरितनीलोऽसि' इत्यादयः। कठानां तैत्तिरीयकाणां च—'शं नो मित्रः शं वरुणः' [ तै० १। १। १ ] इत्यादयः। वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते—'देवा ह वै सत्रं निषेदुः' [ शत० १४। १। १। १ ] इत्यादि। कौषीतकिनामप्यग्निष्टोमब्राह्मणम्—'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति' इत्यादि। किमेते सर्वे प्रविध्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन्न वेति संशयः। किं तावत्प्राप्तमुपसंहार एवैषां विद्यास्विति। कुतः। उपनिषद्ग्रन्थानां विद्याप्रधानानां संनिधौ पाठात्। नन्वेषां मन्त्राणां प्रवर्ग्यकर्मणश्च विद्याङ्गत्वेन विधानं नोपलभ्यत इति चेद्बाढम्। अनुपलभ्यमानमपि कथंचिदनुमीयते। संनिधिसामर्थ्या[द्]वाजपेय इव बृहस्पतिसवस्य प्रवर्ग्यकर्माप्यङ्गं स्यादिति प्राप्ते ब्रूमः। नैषामुपसंहारो विद्यास्विति। कुतः। वेधाद्यर्थभेदात्। 'हृदयं प्रविध्य' इत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयो न तेषां ब्रह्मविद्यया संगन्तुं सामर्थ्यमस्ति। एवमन्येषामपि मन्त्राणां 'देव सवितः प्रसुव यज्ञम्' [ छा० ब्रा० १। १ ] इत्यादीनाम्। हृदयवेधादिमन्त्राणां लिङ्गादाभिचारिके कर्मणि विनियोगः। 'प्रवर्ग्यस्य पुरस्तादुपसदः प्रवृणक्ति' इत्यग्निष्टोमे विनियोगः। लिङ्गवाक्ये च संनिधेर्बलीयसी इति पूर्वमीमांसायां श्रुतिलिङ्गाधिकरणे व्यवस्थापितम्। तस्मान्न विद्याङ्गत्वं मन्त्रकर्मणोः। आरण्यकानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यमिति भाष्यकृत आहुः॥ २५॥ ( १४)

**हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम्॥ २६(१५)**

अस्ति ताण्डिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' [ छा० ८। १३। १ ] इति। तथाऽऽथर्वणिकानां श्रुतिः—'तथा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति। निरञ्जनो भाविजन्मकारणरहितः साम्यं ब्रह्मस्वरूपमित्यर्थः। शाट्यायनिनः पठन्ति—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यादि। अस्यार्थः—ज्ञानिनः पुत्रस्थानीयाः सर्वे प्राणिनस्तदीयं वित्तस्थानीयं कर्म यथायोग्यं गृह्णन्ति। तथा कौषीतकिनः पठन्ति—'तत्सुकृतदुष्कृते विधूनुते। तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' [ १। ४ ] इति। अत्र क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते। क्वचित्तयोः प्रियाप्रियैरुपायनम्। क्वचिदुभयमपि हानमुपायनं च। यत्रोभयं श्रुतं तत्र न किंचिद्वक्तव्यमस्ति। यत्राप्युपायनमेव श्रूयते न हानं तत्राप्यर्थादेव हानं संनिपतति। त्यागव्यतिरेकेणान्यैः स्वीकारासंभवात्। यत्र तु हानमेव श्रूयते नोपायनम्। तत्रोपायनसंबन्धो भवति न वेति संशये, अश्रवणान्नेति प्राप्तेऽभिधीयते। तुर्नार्थे। हानौ हानिमात्रश्रुतावुपायनमुपसंहर्तव्यम्। कुतः। उपायनशब्दशेषात्। उपायनशब्दस्य शेषत्वादित्यर्थः। इतरकर्तृकमुपायनं सगुण-

विद्यायां पठितम्। हानं तु निर्गुणविद्यायाम्। तथा च विद्याभेदोऽस्ति। अत एव न वयमुपायनमनुष्ठेयधर्मतयोपसहरामः किन्त्वर्थवादत्वेन। यथा श्रूयमाणेन पुण्यपापपरित्यागेन ब्रह्मविद्या स्तूयते तथेतरस्वीकारेण स्तोतु शक्यत एव। न चार्थवादत्वमात्रेण हानोपायनश्रुत्योः स्वार्थे तात्पर्याभावः। मानान्तरप्रसिद्धिविरोधयोरभावेन भूतार्थवादत्वात्। यत्तु हानश्रुतौ न क्वाप्युपायनं श्रुतमित्युक्तम्। तदसत्। कौषीतकिश्रुतौ हानोपायनयोरुभयोरप्यवगमात् 'तत्सुकृतदुष्कृते विधुनुते। तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' [ कौ० १। ४] इति। तत्तत्र ब्रह्मलोकप्राप्तिवेलायामित्यर्थः। एवं सति कौषीतकिश्रुतस्य हानस्याऽऽथर्वणिकताण्डिशाखयोः प्रत्यभिज्ञानात्कौषीतकिप्रोक्तस्योपसहारो युक्तः। हानोपायनकीर्तन विद्यास्तुत्यर्थम्। एवं च सर्वत्र विद्याप्रशसार्थमुपायनार्थवादोपसहारः। प्रशंसाप्रयोजन च 'विदुष्यप्रियं न कर्तव्यम्' इति गुणोपसहारप्रसङ्गात्स्तुत्युपसंहार इति संगतिः। शाखान्तरीयवाक्येन शाखान्तरीयस्यैकवाक्यताया दृष्टान्तः—'कुशाछन्दस्तुत्युपगानवत्' इति। तद्यथा भाल्लविनाम्—'कुशा वानस्पत्याः स्थ ता मा पात' इति मन्त्रे कुशानामविशेषेण वनस्पतियोनित्वश्रवणेऽपि शाट्यायनिनाम् 'औदुम्बरा' इति विशेषवचनादौदुम्बराः(र्यः) कुशा आश्रीयन्ते तथा देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नानाद्विशेषावगतिः। तथा स्तुतौ स्तोत्रे षोडशिनि शाखान्तरवाक्यात्कालविशेषावगतिः। तथा 'ऋत्विज उपगायन्ति' इत्यविशेषेणोपगान श्रुतम्। भाल्लविनां तु 'नाध्वर्युरुपगायेत्' इत्यध्वर्युव्यतिरिक्तर्विजामुपगानमिति विशेषावगतिः। श्रुत्यन्तरगतविशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्र विकल्पः स्यात्। स चान्याय्य इति द्वादशलक्षण्या दशमाध्याय उक्तम्। तस्मादर्थवादेऽप्युपायनमङ्गीकर्तव्यम्। अस्य सूत्रस्य वर्णकान्तरम्। सुकृतदुष्कृते विधूनुत इत्यत्र विधूननं किं सुकृतदुष्कृतयोर्हानमुत चालनमिति सशये धूञ् कम्पन इति धात्वर्थानुसारेण चालनमेव विवक्षितम्। मुख्यचालनासभवात्स्वकार्याच्चालन स्वकार्याजनकत्वमिति यावत्। एवं च सुकृतदुष्कृतयोः कंचित्काल कार्याजनकत्वमात्रं विधूनन न तु परित्याग इति प्राप्ते ब्रूमः। तुर्नार्थे। हानौ त्यागे विधूननशब्दो वर्तते न कम्पने। कुतः। उपायनशब्दशेषात्। तदेकवाक्यात्(?)। अत्यक्तयोरुपायनासंभवादुपायनश्रुत्यैकवाक्यतया त्यागार्थत्वनिश्चयः। यत्रापि हानमात्र श्रुतम्। तत्रापि 'कुशाछन्दस्तुत्युपगानवत्।' उपायनोपसंहारात्त्यागार्थत्वनिश्चयः। तदुक्तमित्युक्तार्थधातूनामनेकार्थत्वात्त्यागार्थत्वमप्यविरुद्धमिति ॥ २६ ॥ ( १५ ॥

**सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥**

पूर्वाधिकरणोक्तः सुकृतदुष्कृतत्यागः किं मरणानन्तर देवयानेन पथा ब्रह्मलोकं प्रस्थितस्योत मरणसमय एव जीवदवस्थायामिति संशये मरणसमय एवेति प्राप्तम्। कुतः।

एवं हि कौषीतकिनः पर्यङ्कविद्यायां समामनन्ति–' स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति ' [ कौ० १ । ३ ] इत्युपक्रम्य ' स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते ' [ कौ० १ । ४ ] इति । एवं प्राप्ते ब्रूमः । सांपराये मरणसमय एव सुकृतदुष्कृते विधूनुत इति । कुतः । तर्तव्याभावात् । विदुषः संपरेतस्य विद्यया ब्रह्मलोकं प्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां कस्यचित्प्राप्तव्यस्याभावादित्यर्थः । विद्याविरुद्धफलत्वाच्च तस्य प्राप्तव्यस्य । यद्वा तर्तव्याभावात् । विद्यासामर्थ्याद्विद्यानन्तरमेव सुकृतदुष्कृतक्षयस्याऽऽवश्यकत्वात् । अक्षीणपापस्य चार्चिरादिगमनासंभवात् । पूर्वभावी त्यागः कौषीतकिभिरग्निहोत्रयवागून्यायेन पश्चात्पठितः । तथा ह्यन्ये । यथा न्याय उक्तस्तथा ह्यन्ये शाखिनस्ताण्डिनः शाट्यायनिनश्च मरणात्प्रागेव सुकृतदुष्कृतहानिमामनन्ति–' अश्व इव रोमाणि विधूय पापम् ' [ छा० ८ । १३ । १ ] इति । ' तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् ' इति च । तस्मान्मरणात्प्रागेवोपास्ये साक्षात्कृते तयोः परित्यागः ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ २८ ॥ ( १६ )

यदि च मरणानन्तरं देवयानेन पथा प्रस्थितस्य मध्ये मार्गं सुकृतदुष्कृतक्षयोऽङ्गीक्रियेत । ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात् । तस्मात्पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात् । तत्पूर्वकं सुकृतदुष्कृतहानमिति द्रष्टव्यम् । किमित्येवं वर्ण्यत इत्यत आह––उभयाविरोधात् । उभयोस्ताण्डिशाट्यायनिश्रुत्योरविरोधार्थमित्यर्थः ॥ २८ ॥ ( १६ )

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

क्वचित्पुण्यपापहानसंनिधौ देवयानः पन्थाः श्रूयते । क्वचिन्न श्रूयते । तत्र संशयः । किं हानावविशेषेण देवयानसंबन्ध आहोस्विदुपासकस्यैव ब्रह्मविद इति व्यवस्थयेति । उपायनवदविशेषेण प्राप्तावभिधीयते । गम्यते यत्र येनेति वा गतिः । देवयानः पन्था इत्यर्थः । तस्या गतेरुभयथा विभागेनार्थवत्त्वं संभवत्युपास्तावेव न निर्गुणब्रह्मविद्यायामन्वय इत्यर्थः । कुतः । हि यस्मादन्यथाऽविशेषाङ्गीकारे विरोधः ' तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ' [ मुण्ड० ३ । १ । ३ ] इति श्रुतिविरोधः । निरञ्जनो भाविजन्मकारणरहितः । परमं साम्यं ब्रह्मस्वरूपमित्यर्थः । कथं हि निरञ्जनो देशान्तरं गच्छेत् । ब्रह्मात्मैक्यज्ञानेन विभेदजनकाज्ञाननिवृत्तौ तदैव ब्रह्मभावापत्तिरिति न तत्र

मार्गापेक्षेति भावः । तदुक्तं विद्यारण्यपादैः—उपास्तिप्राप्यस्य ब्रह्मलोकफलस्य देशान्तरवर्तित्वाद्युक्तस्तत्र मार्गः । ब्रह्मज्ञानफलं तु रोगनिवृत्तिवदविद्यानिवृत्तिमात्रमिति किं तत्र मार्गेण करणीयमिति । तस्मादुपासकस्यैव न तु ज्ञानिन इति व्यवस्थितो मार्गः ॥ २९ ॥

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ ( १७ )**

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति । कुतः । तल्लक्षणार्थोपलब्धेः । स मार्गो लक्षणं यस्यार्थस्योपास्तिफलरूपस्य स तल्लक्षणार्थस्तस्योपलब्धेः । उपलभ्यते हि कौषीतकिनां पर्यङ्कविद्यायां पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा सह संवदनं विशिष्टगन्धादिप्राप्तिश्चेति चतुर्मुखेण ब्रह्मणा देशान्तरगमनसाध्य फल श्रूयते न ब्रह्मविद्यायाम् । तत्र ब्रह्मज्ञानेन सर्वक्लेशनाशे सति प्रारब्धकर्मक्षपणव्यतिरेकेणापेक्षणीयाभावात् । लोकवत् । यथा लोके ग्रामप्राप्तौ मार्गोऽपेक्ष्यते नाऽऽरोग्यप्राप्तावेवमिहापीति ॥ ३० ॥ ( १७ )

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ ( १८ )**

सगुणासु विद्यासु गतिरर्थवती न निर्गुणब्रह्मविद्यायामिति निर्णीतम् । सगुणविद्यास्वपि कासुचिच्छ्रूयते कासुचिन्न यथा पर्यङ्कविद्याया पञ्चाग्निविद्यायामुपकोसलविद्यायां दहरविद्यायां चेति । नान्यासु यथा मधुविद्याया शाण्डिल्यविद्यायां वैश्वानरविद्यायां चेति । तत्र संशयः । किं यास्वेव गतिः श्रूयते ताभिरेव विद्याभिः संबध्यत उत सर्वाभिरिति । किं तावत्प्राप्तं नियम इति यत्रैव श्रूयते तत्रैव भवितुमर्हति । प्रकरणस्य नियामकत्वात् । प्रकरणवशाद्यासु श्रुतस्तास्वेव विद्यासु मार्गो व्यवतिष्ठते न त्वन्यत्रोपसंहर्तव्यः । उपसंहारे सकृत्पठितस्यैव सर्वत्रोपसंहर्तुं शक्यतया विद्याद्वये द्विःपाठो निरर्थकः स्यात् । तस्माच्छ्रुतस्थलेष्वेव मार्ग इति प्राप्ते ब्रूमः । सर्वेषा सगुणोपासनानां देवयानस्यानियमः । सर्वत्र सबध्यत इत्यर्थः । अविरोध । न प्रकरणविरोधः । कुतः । शब्दानुमानाभ्याम् । श्रुतिस्मृतिभ्यां प्रकरणबाधादिति शेषः । श्रुतिस्तावत्पञ्चाग्निविद्यावाक्यशेषे पञ्चाग्न्युपासकानामुत्तरमार्गं ब्रुवती श्रुतिर्विद्यान्तरोपासकाना च मुखत एवार्चिरादिमार्गमुदाजहार ‘ तद्य इत्थ विदुः । ये चेमे श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति ’ इति । अस्यार्थः—य उपासका इत्थं पञ्चाग्नीनुपासते ये चान्येऽरण्ये श्रद्धा तप इत्येवमादिधर्मैर्युक्ताः सन्त उपासनान्तरे प्रवर्तन्ते ते सर्वेऽर्चिरादिमार्गं प्राप्नुवन्तीति । स्मृतिरपि—

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः ” ॥ [ भ०गी०८।२६ ]इति ।

नन्वेवं छान्दोग्ये पञ्चाग्निविद्यायामुपकोसलविद्याया चार्चिरादिमार्गस्य द्विराम्नानवैयर्थ्यमिति चेन्न । उपास्यगुणतया चिन्तनार्थत्वोपपत्तेः । तस्मात्सर्वासूपास्तिष्वस्ति देवयानः पन्थाः ॥ ३१ ॥ ( १८ )

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ (१९)

विदुषो वर्तमानदेहपातानन्तरं मुक्तिः पाक्षिकी नियता वेति संशये पाक्षिकीति तावत्प्राप्तम् । ब्रह्मविदामपि केषाचिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात् । तथा हि— अपान्तरतमा नाम वेदप्रवर्तक आचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापरयोः सधा कृष्णद्वैपायनो बभूवेति स्मरन्ति [ भा० १२ । ३५१ ] । एवं वसिष्ठो ब्रह्मणो मानसपुत्रो ब्रह्मविदपि मित्रावरुणाभ्यां संबभूव । एवं भृगुर्वरुणात्सनत्कुमारोऽपि रुद्रनियोगात्स्कन्दो बभूव । एवं दक्षनारदप्रभृतीनामुत्पत्तिः श्रूयते स्मर्यते च । तस्मादेतेषा ब्रह्मविदामपि देहान्तरोत्पत्तिदर्शनाद्ब्रह्मविद्याया मुक्तिहेतुत्वं पाक्षिकमिति प्राप्तौ ब्रूमः । अधिकारिणामीश्वराज्ञया तत्तदधिकारेष्वधिकृतानामेषामधिकारसमर्पककर्मावसानपर्यन्तमवस्थितिस्तदन्ते मुक्तिः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सपत्स्ये ' [ छा० ६ । १४ । २ ] इति श्रुतेः । तदुक्तं भाष्यकृद्भिः—एवमपांतरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो ' यावदधिकारम् ' अवतिष्ठन्ते । तदवसाने चापवृज्यन्त इत्यविरुद्धमिति । अन्यच्च तत्रैवोक्तम्—सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येण देहान्तर संचरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव निर्माय देहान्युगपत्क्रमेण वाऽधितिष्ठन्ति । न चैते जातिस्मरा इत्युच्यन्ते त एवैत इति स्मृतिप्रसिद्धेरिति । एवं सूर्यादयोऽपि देवाः सहस्रयुगपर्यन्तं स्वस्वाधिकारं चरित्वा तदवसाने कैवल्य प्राप्नुवन्ति ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति पर पदम् ॥

इति स्मरणात् । इयांस्तु विशेषः अधिकारिणामधिकारसंपादक कर्मानेकशरीरग्रहणानन्तर नश्यति । इतरेषा तु विद्योत्पादकशरीरनाशानन्तरमेवेति । तस्मात्प्रारब्धक्षये तत्त्वविदा मुक्तिर्नियतैव ॥ ३२ ॥ ( १९ )

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ ( २० )

बृहदारण्यके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम् ' [ बृ० ३ । ८ । ८ ] इत्यादि । तथाऽऽथर्वणिके—' अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ' [ मुण्ड० १ । १ । ६ ] इत्यादि । तथा कठवल्लीषु—' अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च [ का० १ । ३ । १५ ] इत्यादि । तत्र विशेषनिषेधानां सर्वत्रोपसंहारोऽस्ति न वेति संशये । नेति तावत्प्राप्तम् । आनन्दादिवन्निषेधानां ब्रह्मस्वरूपत्वाभावात् । एव-

मनुपसंहारप्रा[ सा ]वुच्यते । तुनर्थे । अक्षरविषयाणां विशेषप्रतिषेधबुद्धीनामवरोध उपसंहारः सर्वत्र हि सभवति । कुतः । सामान्यतद्भावाभ्यामिति हेतुः । सामान्यम् । समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः । तद्भावः । तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नमिति प्रत्यभिज्ञानम् । ताभ्यामित्यर्थः । निषेधस्य स्वरूपाभासकत्वेऽप्युपलक्षणतया ब्रह्मस्वरूपप्रतिपत्त्यर्थत्वात् । तत्राऽऽनन्दाधिकरणे विधिरूपाणि विशेषणानि चिन्तितानीह प्रतिषेधरूपाणीति तस्यैवाधिकरणस्यायं प्रपञ्चः । उक्तार्थे निदर्शनमौपसदवदिति । उपसत्संबन्धिमन्त्रवत् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणाम् ' अग्नेर्होत्रं वेरध्वरम् ' [ ताण्ड्य० २१ । १० । ११ ] इत्येवमादीनामुद्गातृवेदपठितानामप्यध्वर्युणाऽपि संबन्धो भवति नोद्गात्रा प्रधानानुवर्तित्वादङ्गानामेवमिहाप्यक्षरतन्त्रत्वात्तद्विशेषणाना यत्र क्वचिदपि पठितानामक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः । तदुक्त पूर्वकाण्डे—' गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोगः ' [जै०सू०३।३।९] इति । एव प्रधानाक्षरसबन्धात्सर्वप्रतिषेधोपसहार इति॥ ३३ ॥ ( २० )

## इयदामननात् ॥ ३४ ॥ ( २१ )

'द्वा सुपर्णा सयुजा सखाया समानं वृक्ष परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति ' [ मु० ३ । १ । १ श्वे० ४ । ६ ] इत्याध्यात्मिकाधिकारे मन्त्र बह्वृचा आथर्वणिकाः श्वेताश्वतराश्च पठन्ति । तथा ' ऋतं पिबन्तौ सुकृतस्य लोके गुहा प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ' [ कठ० ३ । १ ] इति कठाः पठन्ति । किमत्र विद्यैकत्वमथवा विद्याभेद इति सशयः । किं तावत्प्राप्त विद्याभेद इति । कुतः । विशेषदर्शनात् । ' द्वा सुपर्णा ' इत्यत्रैकस्य भोक्तृत्वमन्यस्याभोक्तृत्वम् । ' ऋतं पिबन्तौ । ' इत्यत्रोभयोरपि भोक्तृत्वं दृश्यते । ततो वेद्यस्वरूपभेदाद्विद्याभेद इति प्राप्ते ब्रूमः । विद्यैकत्वमेवोभयत्र । कुतः । इयदामननात् । उभयोरपि मन्त्रयोरियत्तापरिच्छिन्न द्वित्वोपेत वेद्यमभिन्नरूपमामनन्ति तस्मादित्यर्थः । उभावप्येतौ मन्त्रौ जीवाभिन्नमीश्वर प्रतिपादयतो नार्थान्तरम् । ' द्वा सुपर्णा ' इत्यत्रानश्नन्नित्यशनायातीतः परमात्मा प्रतिपाद्यते । ' ऋत पिबन्तौ ' इत्यत्र च्छत्र्यन्छत्रिन्यायेन जीवसाहचर्यात्परमात्माऽपि पिबतीत्युपचर्यते । परमात्मप्रकरणं ह्येतत् । इदं गुहाधिकरणे निर्णीतम् । नचैतदधिकरणवैयर्थ्यम् । तत्प्रपञ्चत्वात् । तस्मान्नास्ति विद्याभेदः॥३४॥(२१)

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

बृहदारण्यके—' अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्त मे व्याचक्ष्व ' [ बृ० ३ । ४ । १ ] इत्युषस्तब्राह्मणे । ' अथहैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच ' य देव साक्षात् '

[ बृ० ३ । ५ । १ ] इत्यादि कहोलब्राह्मणे च तदेवाम्नाऽऽयते । अपरोक्षादित्यत्र विभक्तिव्यत्ययेनापरोक्षमित्यर्थः । तयारुभयोर्ब्राह्मणयोर्विद्यैकत्वं भेदो वा विद्याया इति संशये भेद इति तावत्प्राप्तम् । कुतः । अभ्याससामर्थ्यात् । अन्यथा न्यूनातिरिक्तार्थतया द्विराम्नानमनर्थकमेव स्यात् । तथा चाभ्यासाद्विद्याया भेद इति प्राप्तावुच्यते । विद्यैक्यमभ्युपगन्तव्यम् । कुतः । स्वात्मनोऽन्तरा । स्वात्मनो ब्रह्मण एव ब्राह्मणद्वयेऽन्तराऽऽम्नानाविशेषादित्यर्थः । न हि द्वावात्मानावेकस्मिन्देहे सर्वान्तरौ संभवतः । तस्मादेक एवाऽऽत्मा सर्वान्तरः । भूतग्रामवत् । यथा च पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तरा अद्भ्यस्तेजोऽन्तरमिति तथेहापीत्यर्थः । यद्वा भूतग्रामवदिति श्रुत्यन्तरनिदर्शनं दर्शयति— ‘ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ’ [ श्वे० ६ । ११ ] इति । अस्मिन्मन्त्रे यथा समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माऽऽम्नायत एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्मादेकैव विद्या ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ ( २२ )

अन्यथा विद्याया भेदानङ्गीकार आम्नानभेदानुपपत्तिरिति चेन्न । उपदेशान्तरवदुपपत्तेः । यथा ताण्डिनामुपनिषदि षष्ठप्रपाठके ‘ तत्त्वमसि ’ [ छा० ६ । ८ । ७ ] इति नवकृत्व उपदेशेऽपि न विद्याभेद एवमिहापीति । आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः । उपक्रमोपसंहाराभ्यामेकार्थतावगमात् । तस्मादेकैव विद्या ॥ ३६ ॥(२२)

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ ( २३ )

‘ तद्योऽहं सोऽसौ योऽसौ सोऽहम् ’ [ ऐ० आ० २-२ ४-६ ] इत्यादित्यपुरुषं प्रकृत्यैतरेयिणः पठन्ति । अस्यार्थः—य एव देहेन्द्रियादिसाक्षी जीवः स एवाऽऽदित्यमण्डलवर्ती परमात्मा यो मण्डलवर्ती स एवास्मद्देहादिवर्तीति । तथा जाबाला आमनन्ति—‘ त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते ’ इति । किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्याऽथ वैकरूपैवेति संशये तावदेकरूपेति प्राप्तम् । जीवब्रह्मैक्यलक्षणस्य वस्तुन एकत्वात् । यदि जीवस्येश्वरात्मत्वमीश्वरस्य जीवात्मत्वमिति व्यतिहारो भवेत् । व्यतिहारो नाम जीवपरमात्मनोर्भिन्नयोः परस्परात्मत्वोपदेशः । तदा संसारिणश्चेश्वरात्मत्व उत्कर्षो भवेत् । ईश्वरस्य संसार्यात्मत्वेऽपकर्षः कृतः स्यात् । तस्मात् ‘ योऽसौ ’ इत्यादिरुपासनार्थो न वस्तुस्वरूपमात्रनिष्ठः । इतरवत् । यथेतरे गुणा आध्यानायोपदिश्यन्ते तद्वत् । तथा हि विशिंषन्ति समाम्नातारः परस्परात्मत्वेन ‘ योऽसौ ’ इत्यादिना । यदैक्यमात्रमनुसंधेयं तदा ‘ योऽसौ सोऽहम् ’ इत्येतावतैव तत्सिद्धौ ‘ योऽहं सोऽसौ ’ इति विशेषणवैयर्थ्यप्रसङ्गः । व्यतिहारेणेह द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात् , नैकरूपतेत्येतावदत्रोपपाद्यते । यद्युपासनार्थव्यतिहारेऽनुष्ठीयमानेऽर्थाज्जीवब्रह्मणोरेकत्वप्रति-

पत्तिर्द्रष्टा भवेत्तर्हि चरितार्थाः संपद्यामहे । तस्माद्व्यतिहारेण द्विधा बुद्धिः कर्तव्या ॥ ३७ ॥ ( २३ )

### सैव हि सत्यादयः ॥ ३८ ॥ ( २४ )

बृहदारण्यके श्रूयते—' स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् ' [ बृ० ५ । ४ । १ ] इत्यादिना । यक्षं पूज्यम् । प्रथमजं हिरण्यगर्भरूपेण प्रथममुत्पन्नमित्यर्थः । अनेकवाक्येन सत्यविद्यां प्रतिपाद्यानन्तरमाम्नायते—' तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः ' [ बृ० ५ । ५ । २ ] इत्यादि । तत्तत्रेत्यर्थः । अत्र द्वे सत्यविद्ये एका वेति संशये विद्याभेद इति तावत्प्राप्तम् । पूर्वत्र जयति लोकानिति उत्तरत्र वाक्ये हन्ति पाप्मानमिति फलभेदादिति प्राप्ते ब्रूमः—सैव या पूर्ववाक्ये सैवोत्तरवाक्येऽपि विद्या न भिन्ना । कुतः । ' तद्यत्सत्यम् ' इति प्रकृतं सत्यं ब्रह्मानूद्य ' असौ स आदित्यः ' इति रविरूपत्ववर्णनात् । नचोपास्यैक्येऽपि फलभेदाद्भेदः । ' तस्योपनिषदहः ' ' अहम् ' इति चाङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमित्यदोषः । पापघातस्याङ्गोपास्तिफलत्वेनार्थवादवदङ्गेषु फलश्रुतिरर्थवाद इतिन्यायेनाविवक्षितत्वात् । अथवाऽत्रोपासनायामधिकार्यश्रवणाच्छ्रूयमाणफलस्यैव कामोपबन्धमध्याहृत्याधिकारिणि कल्पयितव्ये सति पापघातलोकजयकाम उपासीतेति वक्तुं शक्यत्वाद्द्विविशिष्टफलस्य विवक्षितत्वम् । तस्मात्सैवेयमेका सत्यकामविद्या तेनं तेन विशेषणोपेताऽऽम्नायत इत्यतः सर्व एव सत्यादयो गुणा उपसंहर्तव्याः ॥३८॥ (२४)

### कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३९ ॥ ( २५ )

छान्दोग्ये—' अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ' [ छा० ८ । १ । १ ] इत्युपक्रम्य ' एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः ' [ छा० ८ । १ । ५ ] इत्यादि श्रुतम् । बृहदारण्यके—' स वा एष महानज आत्मा ' इत्युपक्रम्य ' य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी ' [ बृ० ४ । ४ । २२ ] इत्यादि । तत्र विद्यैकत्वं परस्परगुणोपसंहारश्च किं भवति न वेति संशयः । तत्र न परस्परगुणानामुपसंहारो भवति । दहराकाशस्योपास्यत्वेन हार्दाकाशस्य च ज्ञेयत्वेन विद्याभेदादिति प्राप्ते ब्रूमः—कामादीति । सत्यकामादीत्यर्थः । यथा देवदत्तो दत्तः सत्यभामा भामेति नामैकदेशग्रहणान्नामग्रहणं तद्वच्छान्दोग्यस्य यदेतत्सत्यकामत्वादिगुणजातमुपलभ्यते तदितरत्र बृहदारण्यक उपसंहर्तव्यम् । यच्च बृहदारण्यके वशित्वादिगुणजातमुपलभ्यते तदपि तत्र छान्दोग्य उपसंहर्तव्यम् । कुतः । आयतनादिभ्यः । आयतनादिसामान्यात् । समानं ह्युभयत्र हृदयमायतनं समानश्च वेद्य ईश्वरः समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनं चेति बहुसामान्याद्वि-

द्याभेदेऽप्युपसंहार इत्यर्थः । तत्र वशित्वादीनां दहराकाश उपसंहार उपास्त्यै भविष्यति । सत्यकामत्वादीनां तु हार्दाकाशस्तुत्यर्थमुपसंहारः । न च प्रयोजनत्वेऽपि विद्याभेदो दुष्परिहर इति वाच्यम् । विद्याभेदेऽप्युभयत्राऽऽकाशशब्दवाच्यस्याऽऽत्मन एकत्वात् । दहराकाशस्य तत्त्वदात्मत्वं दहराधिकरणे निर्णीतम् । हार्दाकाशस्यापि ' महानज आत्मा ' [ बृ० ४ । ४ । २२ इत्युपक्रमादात्मत्वमवगन्तव्यम् । सगुणा हि ब्रह्मविद्या छान्दोग्य उपदिश्यते बृहदारण्यके [तु] निर्गुणोपदिश्यत इति विद्याभेदः । तत्र गुणोपसंहारो विभूतिप्रदर्शनार्थो नोपासनार्थ इति द्रष्टव्यम् ॥ ३९ ॥ ( २५ )

## आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यायां श्रूयते—' तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा ' [ छा० ५ । १९ । १ ] इत्यादि । तस्य किं भोजनलोपे लोपो नवेति संशयेऽलोपः । आदरात् । जाबालश्रुतौ वैश्वानरविद्याया पूर्वमतिथिभ्योऽश्नीयादित्यतिथ्यपेक्षयाऽपि प्राथम्यप्रतिपादनेनाऽऽदरदर्शनात् । एवं च भोजनलोपेऽप्युदकादिना प्राणाग्निहोत्रमुपासकेन कर्तव्यमिति ॥ ४० ॥

एवं प्राप्त आह—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ ( २६ )

उपस्थिते भोजनेऽतो भोजनद्रव्यादेव प्राणाग्निहोत्रं स्यात् । कुतस्तद्वचनात् । ' तद्यद्भक्तं प्रथममागच्छेत् ' [ छा० ५ । १९ । १ ] इति भोजनार्थभक्तमाश्रित्याग्निहोत्रवचनात् । यदकर्मन्यायेनाग्निहोत्रस्य द्रव्यान्तराप्रयोजकत्वादादरस्य च भोजनपक्षे प्राथम्यार्थत्वोपपत्तेः । तस्माद्भोजनलोपे प्राणाग्निहोत्रस्य लोपः ॥ ४१ ॥ ( २६ )

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ ( २७ )

' ओमित्येतदक्षरमुद्गीथमुपासीत ' [ छा० १ । १ । १ ] इत्येवमादिषु कर्माङ्गभूतोद्गीथाद्याश्रितेषूपासनेषु चिन्त्यते । किमुद्गीथाद्युपासनानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवदुतानित्यानि गोदोहनादिवदिति । किं तावत्प्राप्तं नित्यानीति । कर्मप्रकरणमारभ्याध्ययनाभावेऽपि वाक्यात्क्रतुसंबन्धापत्तेः । यथा ' यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति ' [ तै० सं० ३ । ५ । ७२ ] इत्यस्यानारभ्याधीतस्याव्यभिचरितजुहूद्वारा प्रकरणपठितवत्क्रतुसंबन्धस्तथा ' य एवं विद्वानुद्गायति य एवं विद्वान्साम गायति ' इत्यादिष्वव्यभिचरितक्रतुसंबन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसंबन्धः प्रतीयते । तस्मात्कर्मसु नियता उपास्तय इति प्राप्ते ब्रूमः । तन्निर्धारणस्य तत्तद्गुणविशिष्टोद्गीथाद्युपासनस्यानियमः । न नियतमनुष्ठानम् । कुतः । तद्दृष्टेः । तस्यानियमस्य श्रुतौ दर्शनादि-

त्यर्थः । तथा ह्यनियतत्वमेवंजातीयकानां श्रुतिर्दर्शयति । ' तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद [ छा० १ । १ । १० ] इत्यस्मिन्नङ्गावबद्धोपास्तिवाक्यशेषे ह्यविदुषोऽपि क्रियाभ्यनुज्ञानात् । किंच गोदोहनादिवदनियता उपास्तयः । यथा ' चमसेनापः प्रणये-द्गोदोहनेन पशुकामस्य' इत्यत्र प्रणयनमाश्रित्य विधीयमानमपि गोदोहनमक्रत्वर्थत्वादैच्छिकं न तु प्रणयनादिवन्नियतम् । तथा कर्माङ्गान्याश्रित्य विधीयमाना उपास्तयो न क्रत्वर्थाः । किं तु फलार्थाः । हि यस्मात्कर्मफलात्पृथगप्रतिबन्धः फलं श्रूयते । शीघ्रं फलजनकोऽप्रतिबन्ध-शब्दार्थः । ' वर्षन्ति हास्मै ' इति पञ्चविधे सामनि वृष्टिदेवतामुपासीनस्य कामवृष्टिः क्रतुफलात्पृथक्फल श्रूयते । तस्मात्कर्मस्वनियता उपास्तयः ॥ ४२ ॥ ( २७ )

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥ ( २८ )

वाजसनेयकेऽध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः । अधिदैवतमग्न्यादीनां वायुः । तथा छान्दोग्ये संवर्गविद्यायामधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः । अध्यात्मं वागादीनां प्राणः । तत्र संशयः । पृथगेवेमौ वायुप्राणावुपास्यौ स्यातामेकीभावेन वेति तत्त्वाभेदादेकीकृत्येति प्राप्ते ब्रूमः—' यः प्राणः स वायुः ' इति स्पष्टं तत्त्वाभेदेऽपि कार्यत्वेन कारणत्वेन चावस्थाभेदस्य सद्भावादित्यधिदैवमथाध्यात्ममिति विविच्य पृथगनुचि-न्तनाय श्रुतिर्विविनक्ति । इन्द्रप्रदानवत् । यथा ' इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रि-याधिराजायेन्द्राय स्वराज्ञे [ तै० स० २ । ३ । ६ । १ ] इतीन्द्रस्यैकत्वेऽपि राजादि-गुणभेदेन देवताभेदात्पुरोडाशप्रदानभेदः । तदुक्तं संकर्षे ' नाना वा देवता पृथग्ज्ञा-नात् ' इति । तद्वदेकस्यापि वायुतत्त्वस्य गुणभेदाद्भेदेन चिन्तनम् । यद्यपि तत्र यागभे-दोऽप्यस्ति नेह विद्याभेदः । उपक्रमोपसंहाराभ्यामेकविद्यात्वनिश्चयात् । तथा सायंप्रातराहु-तिव्यवस्थायामप्यग्निहोत्रस्यैकत्ववद्व्यवस्थितानुचिन्तनेऽपि विद्यैक्यसभवात् । व्यवस्थाभेदमात्रे प्रदानवदिति दृष्टान्तः । विस्तरस्तु भाष्यादवगन्तव्यः ॥ ४३ ॥ ( २८ )

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयिनोऽग्निरहस्यब्राह्मणे मनोऽधिकृत्येदमधीयते ' षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽ-ग्नीनर्कान्मनोमयान्मनश्चितः ' [ श० प० १० । ५ । ३ । ३ ] इति । पुरुषस्य शतसंवत्सरपरिमित आयुषि ' षट्त्रिंशत्सहस्राण्यपश्यदात्मनेऽग्नीनर्कान्मनोमयान्मनश्चितः ' इत्यादि । अस्यार्थः—पुरुषस्य शतसंवत्सरमित आयुषि षट्त्रिंशत्सहस्राणि दिनानि भवन्ति तत्रैकैकस्मिन्दिने या मनोवृत्तिस्तस्या एकाग्नित्वेन ध्याने सति ध्यातव्या अग्नयः षट्त्रिंश-त्सहस्राणि सपद्यन्ते ते च प्रत्यगात्मस्वरूपत्वेन ध्येयाः । एत एवाग्नयो मनसा चीयन्त इति मनश्चितः । इष्टिकाचिताग्नित्वेन च ध्येया इति प्रतिपाद्यते । एवं ' वाक्चितः प्राण-चितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः ' इति तत्र संशयः । किमेते मनश्चिदादयोऽ-

ग्नयः कर्माङ्गभूता उत स्वतन्त्राः केवलविद्यात्मका इति । कर्माङ्गभूता इति तावत्प्राप्तम् । कुतः । प्रकरणात् । एवं प्राप्ते ब्रूमः—स्वतन्त्रविद्यात्मकाः । कुतः । लिङ्गभूयस्त्वात् । अस्मिन्प्रकरणे स्वतन्त्रविद्याद्योतकलिङ्गानां बहुलमुपलब्धेरित्यर्थः । अनेन संकल्पप्राधान्यं गम्यते । 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' [ १० । ५ । ३ ] इति । उपासकस्य स्वपतोऽपि नैवाग्नयो विच्छिद्यन्ते । स्वकीयमनोवागादिवृत्त्युपरमेऽपि प्रबुद्धपुरुषमनोवागादिवृत्तीनां सभवात् । अशेषपुरुषवृत्तीनामग्नित्वेन वर्णनात् । तस्मादेवंविदे स्वपतेऽपि तानेतानग्नीन्सर्वदा सर्वाणि भूतानि चिन्वन्तीति तत्राग्नीनामविच्छेदेन नैरन्तर्यं स्यात् । ननु प्रकरणात्कर्माङ्गत्वमस्त्विति चेन्न । हि यस्मात्तल्लिङ्ग प्रकरणाद्बलीयः । कुतस्तदपि लिङ्गभूयस्त्वमपि पूर्वतन्त्र उक्तम्—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' [ जै० सू० ३ । ३ । १४ ] इति ॥४४॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

पूर्वपक्षसूत्रम् । प्रकरणात्क्रिया स्यात् । कर्माङ्गभूता विद्या स्यादित्यर्थः । ततश्च पूर्वस्य क्रियामयस्याग्रे प्रकरणात्तद्विपय एवाय विकल्पविशेषोपदेशः स्यात् । विकल्पः प्रकार इत्यर्थः । न स्वतन्त्रविद्यात्मक उपदेशः । ननु प्रकरणाल्लिङ्गं बलीय इति चेत् । सत्यम् । अन्यार्थदर्शनरूपत्वेन लिङ्गस्यैव दुर्बलत्वात् । तथा हि । लिङ्गं द्विविधम् । सामर्थ्यमन्यार्थदर्शनं चेति । तत्र विध्युद्देशगतं लिङ्गं सामर्थ्यरूपम् । तच्च स्वातन्त्र्येण प्रमाणम् । अर्थवादगतं त्वन्यशेषवाक्ये दृश्यमानत्वादन्यार्थदर्शनं तच्च तात्पर्यरहितत्वान्न स्वातन्त्र्येण प्रमाणम् । किं तु प्रमेयसाधके प्रमाणान्तरे केवलमुपोद्बलकं भवति । एवं च सत्यन्यार्थदर्शनरूपलिङ्गस्य प्रापणप्रमाणसापेक्षस्य दुर्बलत्वात्प्रकरणात्कर्मशेषा मनश्चिदादयः स्युः । तत्र दृष्टान्तः—मानसवत् । यथा द्वादशाहस्य दशमेऽहनि पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहस्य मानसस्य तदङ्गत्व तद्वत् । एवमयमप्यग्निः कल्प्यः ॥ ४५ ॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैपामग्नीना क्रियाङ्गत्वमुपोद्बलयति—'षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेपामेकैक एव तावान्यावानसौ पूर्वः' [ श० प० १० । ५ । ३ । ११ ] इति । अर्काः । छान्दसत्वाद्वर्णव्यत्ययः । अर्ग्या इत्यर्थः । सति हि समानभावेऽतिदेशः प्रवर्तते । ततश्च पूर्वेणेष्टिकाचितेन क्रियानुप्रवेशिनाऽग्निना मनश्चिदादीनग्नीनतिदिशन्कर्माङ्गत्वमेवैषां द्योतयति ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षव्यावर्तकः । विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयो न च क्रिया-

विशेषभूताः । तथाहि निर्धारयति श्रुतिः—'ते हैते विद्याचित एव'। विद्यया हैवैत एवंविदश्चिता भवन्ति' [ श० १० । ५ । ३ । १२ ] इति च ॥ ४७ ॥

**दर्शनाच्च ॥ ४८ ॥**

पूर्वोक्तलिङ्गभूयस्त्वदर्शनादित्यर्थः ॥ ४८ ॥

ननु लिङ्गमसाधकमित्युक्तमत आह—

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

कुतः । श्रुत्यादेर्बलीयस्त्वात् । बलीयांसि हि श्रुतिलिङ्गवाक्यानि हीति स्थितं श्रुतिलिङ्गसूत्रे [ जै० ३ । ३ । १४ ] तानि चेह स्वातन्त्र्यपक्षं साधयन्ति । श्रुतिस्तावत्—'ते हैते विद्याचित एव' [ श० १० । ५ । ३ । १३ ] इति । तथा लिङ्गम् । सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते' [ श० १० । ५ । ३ १३ ] इति । तथा वाक्यमपि 'विद्यया हैवैत एवंविदश्चिता भवन्ति' [ श० १० । ५ । ३ । १३ ] इति । 'ते हैते विद्याचित एव' [ श० १० । ५ । ३ । १३ ] इति सावधारणेयं श्रुतिः कर्माङ्गत्वेऽभ्युपगम्यमाने पीडिता भवेत् । लिङ्गमुक्तं नचान्यार्थं दर्शनमात्रं तत् । यत्र प्रत्यक्षविधिसंनिधावर्थवादिकं लिङ्गं तत्प्रापकप्रमाणसापेक्षं प्रकृते तु न प्रत्यक्षो विधिः । किंत्वर्थवादः कल्प्यः । अर्थवादे च स्वातन्त्र्यलिङ्गदर्शनात्स्वातन्त्र्येणैव[1] विद्याविधिः कल्प्यत इति । तदुक्तं भाष्यकृद्भिः—यत्र हि विस्पष्टो विधायको लिङादिरुपलभ्यते युक्तं तत्र संकीर्तनस्यार्थवादत्वम् । इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेवैषां विज्ञानविधानं कल्पनीयमिति । वाक्यमपि 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति । विद इति पुरुषसंबन्धमेव दर्शयति न कर्मसंबन्धम् । तस्मात्स्वातन्त्र्यपक्ष एव ज्यायान् ॥ ४९ ॥

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥**

इतश्च न कर्माङ्गत्वं मनश्चिदादीनाम् । कुतः । अनुबन्धादिभ्यः । अनुबध्यत इत्यनुबन्धः । कर्माङ्गभूतानां पदार्थानां मनोव्यापारसंबन्धः । 'मनसैवाऽऽधीयन्त मनसा चीयन्ते मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशंसन्यत्किंच यज्ञे क्रियते यत्किंच याज्ञियं कर्म मनसैव' [ श० १० । ५ । ३ । ३ ] इत्यादि संपत्फलो ह्ययमनुबन्धः । स्वतःसिद्धानां कर्मावयवानां मनःसंपाद्यत्वमनर्थकम् । अत्र कर्माङ्गानां मनःसंपाद्यत्वं वदन्ती श्रुतिरनुचिन्तनप्राधान्यं दर्शयति । षट्त्रिंशत्सहस्राणि मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञवत् । संख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्संबन्धिनीषु मनोवृ-

---

[1] क. ङ्गादि° ।

त्तिष्वारोप्यत इति द्रष्टव्यम् । एवमनूबन्धात्स्वातन्त्र्य मनश्चिदादीनाम् । अतिदिशब्दादतिदेशादपि । तथा हि—'तेषामेकैक एव तावान्यावानसौ पूर्वः' [ श० १० । ५ । ३ ११ ] इति क्रियामयस्येष्टिकाचिताग्नेर्माहात्म्य ज्ञानमयानामेकैकस्यातिदिशन्क्रियायामनदर दर्शयति । न च क्रियाग्निना विकल्पो ज्ञानाग्नेः क्रियाग्निवदाहवनीयाधारत्वाभावेनैकार्थत्वाभावात्क्रियानुप्रवेशमन्तरेणातिदेशासंभव इति वाच्यम् । अग्नित्वसामान्येनातिदेशसभवात् । श्रुत्यादीनि प्रमाणानि दर्शितानि । एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम् । प्रज्ञान्तरपृथक्त्ववत् । यथा शाण्डिल्यविद्यादीना कर्मभ्य. प्रज्ञान्तरेभ्यश्च पृथक्त्व तद्वत् । ननु प्रकरणादुत्कर्षो न दृष्टचर इत्यत आह—दृष्टश्च तदुक्तमिति । अवेष्टे राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षे वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्य । तदुक्तं पूर्वकाण्डे—'क्रत्वर्थायामिति चेन्न वर्णसयोगात्' [ जै० सू० ११ । ४ । ११ ] इति ॥ ५० ॥

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

'मानसवत्' इति यदुक्त तन्निराक्रियते । मानसग्रहणसामान्यादपि न मनश्चिदादीनां कर्माङ्गत्वं कल्प्यते । श्रुतिलिङ्गादिभिर्हेतुभिः केवलपुरुषार्थत्वोपलब्धेः । मानसवदिति दृष्टान्तो न युज्यते । मृत्युवत् । यथा 'स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' [ श० १० । ५ । २ । ३ ] इति । आदित्यपुरुषे मृत्युशब्दप्रयोगे समानेऽपि नात्यन्तसाम्यापत्तिः । एवमिहापि कल्पनासामान्यान्नाङ्गत्वसिद्धिः ॥ ५१ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥ ( २९ )

किंच परेण चकारात्पूर्वेणापि सदर्भेण ताद्विध्य केवलविद्याविधित्वं शब्दस्य प्रयोजनं गम्यते न कर्माङ्गत्वम् । परसदर्भस्त्वेवम्—'अय वाव लोक एषोऽग्निश्चितः' [ श० १० । ५ । ४ । १ ] इत्यस्मिन्ब्राह्मणे ताद्विध्यं लक्ष्यते न कर्माङ्गत्वम् । तत्र हि—

विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' [ श० १० । ५ । ४ । १६ ]

इत्यनेन कर्मनिन्दापूर्वकविद्यास्तुतिश्रवणाच्च । तथा पूर्वसंदर्भोऽपि—'यदेतन्मण्डल तपति' [ श० १० । ५ । २ । १ ] इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते । 'सोऽमृतो भवति' [ श० १० । ५ । २ । २३ ] इति विद्याफलेनैवोपसहारात् । इहापि तथात्वं विद्याया सपादनीयानामग्न्यवयवाना भूयस्त्वात् । तस्मात्कारणादग्निनाऽनुबध्यते विद्या, अकर्माङ्गत्वात् । तस्मान्मनश्चिदादीना स्वतन्त्रविद्यात्व सिद्धम् ॥५२॥ (२९)

---

१ क. 'नानानु' ।

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥**

इह देहव्यतिरिक्तस्याऽऽत्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये । न ह्यसति देहव्यतिरिक्त आत्मनि परलोकफलाश्चोदना उपपद्येरन् । कस्य वा ब्रह्मात्मत्वमुपदिश्येत । प्रथमाध्यायादौ देहादिव्यतिरिक्तस्याऽऽत्मनोऽस्तित्वमुक्तं तस्यैव प्रपञ्चोऽयं सूत्रकृता सूत्रेण प्रदर्श्यते । पूर्वस्मिन्नधिकरणे मनश्चिदादीनां क्रत्वर्थता नास्ति किं तु पुरुषार्थत्वमित्युक्तम् । तत्र कोऽसौ पुरुष इति प्रसङ्गाद्विचार्यते । तदेतदधिकरणं पूर्वोत्तरमीमांसयोः शेषभूतम् । देहव्यतिरिक्तस्य स्वर्गमोक्षभागिण आत्मनः प्रतिपादकत्वादिति भाष्ये स्थितम् । तत्रेत्थं पूर्वपक्षः । लोकायतिका देह एवाऽऽत्मेति मन्यन्ते । कुतः । शरीरे भावात् । अन्वय-व्यतिरेकाभ्यां चैतन्यस्य देह एवोपलम्भात् । सति देहे चैतन्यमुपलभ्यते नत्वसति । न च चैतन्यस्य जात्यन्तरतया देहव्यतिरिक्तात्मत्वं शङ्कनीयम् । क्रमुकनागवल्लीचूर्णख-दिराणां संयोगान्मदशक्तिरिव देहाकारपरिणतभूतेभ्यो जायमानं चैतन्यं कथं नाम जात्य-न्तरं स्यात् । तस्माच्चेतनो देह आत्मा ॥ ५३ ॥

इति प्राप्त उत्तरं पठति —

**व्यतिरेकस्तद्भावाभावित्वान्नतूपलब्धिवत् ॥ ५४ ॥ ( ३० )**

नत्विति पक्षव्यावृत्तिः । आत्मनः शरीराद्व्यतिरेकः । कुतः । तद्भावाभावित्वात् । शरीरधर्माणां रूपादीनां यावच्छरीरभावित्वात् । बुद्ध्यादीनां च शरीरभावेऽप्यभावान्न तद्धर्मत्वम् । उपलब्धिवत् । पृथिव्यादीनां भूतानामुपलब्धिर्भूतेभ्यो व्यतिरिक्ता भवितुमर्हति विषयित्वात् । यद्यद्विषयि तत्तद्विषयाद्व्यतिरिक्तं यथा रूपाच्चक्षुः । तथा सति तादृशचै-तन्यात्मत्वं वदन्तं प्रति कथं भौतिकदेहत्वमापद्येत । सत्येव हि चैतन्यमुपलभ्यते नासतीति यावन्वयव्यतिरेकावुक्तौ तत्र व्यतिरेकोऽसिद्धः । असत्यपि देहे परलोकगामिनश्चिदात्मन शास्त्रेणोपलम्भात् । तस्माद्देहव्यतिरिक्त आत्मा सिद्धः ॥ ५४ ॥ ( ३० )

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥**

'ओमित्येतदक्षरमुद्गीथमुपासीत' [ छा० १ । १ । १ ] इत्याद्याः कर्माङ्गाश्रयविद्याः प्रतिवेदं प्रतिशाखमाम्नायन्ते । ताः किं तच्छाखोद्गीथादिष्वेव भवेयुः किं वा शाखान्तरगतेष्वपीति संशये संनिहितत्वात्स्वशाखायामेव व्यवतिष्ठन्त इति प्राप्ते ब्रूमः—अङ्गेति तुशब्देन पक्षव्यावृत्तिः । नैतेऽङ्गावबद्धा उद्गीथादयः स्वशाखास्वेव व्यवतिष्ठन्ते । अपि तु सर्वशाखास्वनुवर्तन्ते । कुतः । उद्गीथादिश्रुत्यविशेषात् । उद्गीथादिशब्दस्तावन्मुख्यया वृत्त्या सर्वशाखागतमुद्गीथादिसामान्यमाचष्टे । तत उद्गीथादिश्रुतिवशात्सर्वशाखागतोद्गीथादि शास्त्रेष्वनुवृत्तिः प्राप्ता । श्रुतिश्च संनिधेर्बलीयसी ॥ ५५ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ ( ३१ )

अथ वा नैवात्र विरोधः शङ्कनीयः कथमन्यशाखागतेपूद्गीथादिष्वन्यशाखाविहिता उपासना भविष्यन्तीति । मन्त्रादिवदविरोधोपपत्तेः । मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तरेषूपसंग्रहो दृश्यते । येषामपि 'अग्नीषोमीयं पशुमालभेत' इत्यत्र जातिविशेषोपदेशो नास्ति तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते 'छागस्य वपाया मेदसोऽनुब्रूहि' [ शत० ३ । ८ । २ । २६ ] इति । तथा वेदान्तरोत्पन्नानामपि । तस्माद्यथाऽऽश्रयाणां कर्माङ्गानां( णा ) सर्वत्रानुवृत्तिस्तथाऽऽश्रितानामपि । प्रत्ययानामित्यविरोधः ॥ ५६ ॥ ( ३१ )

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ ( ३२ )

वैश्वानरविद्याया व्यस्त समस्त चोपासनं श्रूयते । व्यस्तोपासनं तावत्—' औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से ' [ छा० ५ । १२ । १ ] इत्यादि । तथा समस्तोपासनमपि—' तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा ' [ छा० ५ । १८ । २ ] इत्यादिना । तत्र व्यस्तसमस्तोपासनद्वयं विधेय किं वा समस्तोपासनमेवेति । उभयमिति तावत्प्राप्तम् । उभयफलश्रवणादिति प्राप्तेऽभिधीयते—भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्व प्राधान्येन विवक्षितमस्मिन्वाक्ये न प्रत्येकोपासनम् । क्रतुवत् । यथा दर्शपूर्णमासादेः साङ्गस्यैकं एव प्रयोगविधिस्तद्वत् । कुतः । तथाहि दर्शयति । ' भूमैव ज्यायान् ' इतिश्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति । प्राचीनशालप्रभृतयो वैश्वानरविद्याज्ञानाय कैकेयं राजानमाजग्मुरित्युपक्रम्य तेषां द्युप्रभृतीनामेकैकमुपास्य प्रदर्श्य मूर्धादित्वं द्युलोकादीनां प्रतिपादयतः सदर्भस्यैकवाक्यत्वावगमात्समस्तोपासनमेवात्र विधेयं न व्यस्तोपासनम् । वाक्यभेदात् । एवं च व्यस्तोपासने यत्फलश्रवण ' तस्मात्तव सुत प्रसुतमासुत कुले दृश्यते ' [ छा० ५ । १२ । १ ] इत्यादि । सुतादयः सोमयागविशेषाः । तेषां सोमयागविशेषाणां फलसंपत्तिः प्रधानस्तुत्यर्थत्वेनावगम्यते । ' मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्यः ' [ छा० ५ । १२ । २ ] इति व्यस्तोपासननिन्दाश्रवणात् । पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य ' स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ' [ छा० ५ । १८ । १ ] इति भूताश्रयमेव फलं दर्शयति । तस्मात्समस्तोपासनमेव विवक्षितं न व्यस्तोपासनम् । उपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमात् । उपक्रमे तावत्— ' को न आत्मा किं ब्रह्म ' [ छा० ५ । ११ । १ ] इति कृत्स्नमेव ब्रह्मोपास्यत्वेन विचारयितुं प्रक्रान्तम् । उपसंहारेऽपि ' तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव

सुतेजाः ' [ छा० ५ । १८ । २ ] इत्यादिना समस्तोपासनं विस्पष्टमभिधीयते । तस्मात्समस्तोपासनमेव विवक्षितम् ॥ ५७ ॥ ( ३२ )

## नाना शब्दादिभेदात् ॥ ५८ ॥ ( ३३ )

पूर्वस्मिन्नधिकरणे सत्यमपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम् । अतः प्राप्ता बुद्धिरन्यान्यपि भिन्नश्रुत्युपासनानि समस्यैवोपास्यानीति । श्रुतिनानात्वेऽपि न वेद्यनानात्वम् । ईश्वरस्यैकत्वात् । तथा हि—छान्दोग्यादौ शाण्डिल्यविद्या दहरविद्या मधुविद्येत्येवमादयः श्रूयन्ते । तासां किमैक्यं भेदो वेति संशये समस्तोपासनस्य ज्यायस्त्वादुपास्यब्रह्मैक्याच्च विद्यैक्यप्राप्तावाह—नाना शब्दादिभेदादिति । विद्याभेद एवाभ्युपगन्तव्यः । कुतः । उक्तहेतोः । न च वेद्यस्य ब्रह्मण एकत्वं शङ्कनीयम् । गुणभेदेन भेदोपपत्तेः । नचैकस्या विद्याया इयत्ता नियन्तुमशक्या । प्रत्येकमुपक्रमोपसंहारयोस्तन्निश्चायकत्वात् । सर्वोपासनैक्ये ह्यशक्यानुष्ठानतयाऽप्रामाण्यप्रसङ्गाच्च । तस्माद्विद्यानां नानात्वम् ॥ ५८ ॥ ( ३३ )

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ ( ३४ )

एवं स्थिते विद्याभेदे विचार्यते किमासा समुच्चयो विकल्पो वा स्यात् । अत्र समुच्चयो न युक्तः । नित्यताश्रुतिर्हि तत्र कारणम् । अग्निहोत्रदर्शपूर्णमासादीनां विधायकनित्यताश्रुतेः सत्त्वात्समुच्चयः । नैवविद्यानां काचिन्नित्यताश्रुतिरस्ति । तस्मान्न समुच्चयः । नन्वविशिष्टफलत्वादासां विकल्पोऽस्तु । नैव दोषः । समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु यथाकामदर्शनात् । तस्माद्यथाकाममिति प्राप्तौ ब्रूमः । विकल्प एवाऽऽसां भवति न समुच्चयो नाप्यनियमः । कुतः । अविशिष्टफलत्वात् । आसामुपासनानां ह्यविशिष्टफलमीश्वरसाक्षात्कारः । तस्मिन्साक्षात्कारे त्वेकेनैवोपासनेन सिद्धे सतीतरोपासनवैयर्थ्यम् । इदमेव तावन्नियामकमेकम् । किंचोपासनेषु न प्रमाणजन्यः साक्षात्कारोऽस्ति । किं तर्हि निरन्तरोपास्यभावनाजन्यः । स चैकमुपासनमनुष्ठाय तत्परित्यज्यान्यत्र वर्तमानस्य पुरुषस्य चित्तविक्षेपात्कथं संभवेत् । एवमानर्थक्यविक्षेपयोर्नियामकयोः सत्त्वाद्विकल्प एवेति सिद्धम् ॥ ५९ ॥ ( ३४ )

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ ( ३५ )

द्विविधान्युपासनानि—अहंग्रहाणि प्रतीकानि चेति । अहंग्रहोपासनेषु विकल्पः पूर्वाधिकरण उपपादितः । अनात्मवस्तुनि देवतादृष्ट्या संस्कृत्योपास्यमानानि प्रतीकानि । तानि ' स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति ' [ छा० ७ । १ । ५ ] इत्यादीनि । तेषु पूर्वाधिकरणन्यायेन विकल्पप्राप्तौ ब्रूमः । तुशब्दः

पक्षव्यावृत्त्यर्थः । काम्याः प्रतीकोपासना यथाकामं समुच्चीयेरन् । न वा समुच्चीयेरन् । कुतः । पूर्वहेत्वभावात् । अहंग्रहेषु 'देवो भूत्वा देवानप्येति' [ बृ० ४ । १ । २ ] इति जीवन्नेव भावनाप्रकर्षवशादेव साक्षात्कारं प्राप्य मृतो देवत्वमुपैतीति यथाऽहंग्रहेष्ववगम्यते न तथा प्रतीकेषु साक्षात्कारफलत्वे किंचिन्मानमस्ति । साक्षात्कारद्वारा फलत्वाभावे च तत्र तत्र प्रोक्ता भोग्यवस्तुप्राप्तयः फलत्वेनाभ्युपगन्तव्याः । तथा सति भिन्नफलत्वान्नान्यानर्थक्यम् । विक्षेपशङ्का तु दूरापास्ता । एकं प्रतीकं केषुचित्क्षणेषूपास्य क्षणान्तरे प्रतीकान्तरोपासने पूर्वोपासितजन्यापूर्वस्याविनाशात् । तस्मादेकमेव वा बहूनि समुच्चित्य वा यथाकामं प्रतीकोपास्तिः कर्तव्येति सिद्धम् ।

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

प्रतीकानि द्विविधानि—लौकिकानि वैदिकानि चेति । लौकिकेषु निर्णयः पूर्वाधिकरण उक्तः । वैदिकेषु कर्माङ्गपृद्गीथादिषु य आश्रिताः प्रत्ययाः किं ते समुच्चीयेरन्कि वा यथाकामं स्युरिति संशये समुच्चय इति तावत्प्राप्तम् । कुतः । तत्तत्कर्मणि कर्माङ्गानि समुच्चित्यैवानुष्ठेयतया प्रयोगविधिप्रापितानि तथाऽङ्गावबद्धान्युपासनान्यपि समुच्चित्यैवानुष्ठेयानि अङ्गतन्त्रत्वादिति प्राप्ते ब्रूमः । 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् । स्तुतमनुशंसति' इत्यादौ यथा ग्रहस्तोत्रशंसनादीनां नियतपौर्वापर्येण सहभावः श्रुतो न तथोपासनेषु श्रूयते । तस्माद्विकल्पसमुच्चययोर्याथाकाम्यमिति विद्यारण्यपादाः सिद्धान्तमाहुः । यथाऽऽश्रयाणामङ्गानां समुच्चय एवमङ्गावबद्धानामुपासनानामपि समुच्चयेनैवानुष्ठानं न्याय्यम् । आश्रयतन्त्रत्वादाश्रितप्रत्ययानामित्याचार्यपादैः शङ्कासूत्राणि व्याख्याय तथैव सिद्धान्तितम् ॥ ६१ ॥

## शिष्टेश्च ॥ ६२ ॥

यथा चाऽऽश्रयाः स्तोत्रादयस्त्रिषु वेदेषु शिष्यन्त एवमाश्रिता अपि प्रत्ययाः । नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः ॥ ६२ ॥

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' [ छा० १ । ५ । ५ ] इति । दुरुद्गीथमपि स्वरादिदुष्टमप्युद्गीथं होतृषदनाद्धोतृकृतशंसनादनुसमाहरति समादधात्युद्गातेति श्रुत्यर्थः । 'य उद्गीथः स प्रणवः । यः प्रणवः स उद्गीथः' [ छा० १ । ५ । १ ] इति प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात्कर्मणः प्रतिसमादधातीति ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसंबन्धसामान्यात्सर्ववेदोदितप्रत्ययोपसंहारं सूचयति ॥ ६३ ॥

**गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥**

गुणस्याऽऽश्रयस्योङ्कारस्य वेदत्रयसाधारण्यश्रुतेरपि तदाश्रितोपासनस्य साधारण्यम् 'ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' [ छा० १ । १ । ९ ] इति । ततश्चाऽऽश्रयसाधारण्यादाश्रितसाधारण्यम् ॥ ६४ ॥

तस्मात्समुच्चय इति प्राप्ते ब्रूमः—

**न वा तत्सहभावाश्रुतेः ॥ ६५ ॥**

न वेति पक्षव्यावर्तनम् । यथाश्रयभावश्चाऽऽश्रितानामुपासनानां नास्ति । कुतः । तत्सहभावाश्रुतेः । यथा हि त्रिवेदविहितानामङ्गाना स्तोत्रादीना सहभावः । नैवमुपासनानां सहभावश्रुतिरस्ति। उपासनाना समुच्चये प्रत्यक्षश्रुत्यभावात् । गोदोहनादिवदनङ्गत्वेन प्रयं.ग-वचनाविषयत्वात् ॥ ६५ ॥

**दर्शनाच्च ॥ ६६ ॥ ( ३६ )**

'एवंविद्ध वै ब्रह्मा यज्ञ यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' [ छा० ४ । १७ । १० ] इति । सर्वप्रत्ययोपसंहारे हि 'सर्वे सर्वविदः' इति ज्ञानवता ब्रह्मणेतरेषां परिपाल्यत्व-मनुपपन्न स्यात् । तस्माद्यथाकाममुपासनाना समुच्चयो विकल्पो वेति सिद्धम् ॥ ६६ ॥ ( ३६ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितकृतौ ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य

तृतीयः पादः ॥ ३ ॥

---

अथ चतुर्थः पादः ।

---

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥**

अथेदानीमौपनिषदमात्मज्ञानमधिकारिद्वारेण कर्मण्येवानुप्रविशत्याहोस्विस्वतन्त्रमेव पुरु-षार्थसाधन भवतीति मीमासमानः सिद्धान्तेनैव तावदुपक्रमते । आत्मनो देहादिव्यतिरिक्त-ज्ञानमन्तरेण परलोकगामित्वनिश्चयो न संभवति । ततश्च ज्योतिष्टोमादिषु प्रवृत्तिरेव न स्यादिति क्रतुषु प्रवर्तकत्वेनौपनिषदमात्मतत्त्वज्ञान कर्माङ्गमिति प्राप्ते ब्रूमः । द्विविध देह-व्यतिरिक्तात्मतत्त्वज्ञानम्—परलोकगामिकर्त्रात्मज्ञानमेकमपरमद्वितीयब्रह्मात्मज्ञानं चेति । तत्र कर्त्रात्मज्ञानं प्रवर्तकत्वात्कर्माङ्गमस्तु नाम । अद्वैतब्रह्मात्मज्ञानं तु न प्रवर्तक प्रत्युत कर्तृक्रि-याकारकफलनिवर्तकमेव । अतो वेदान्तविहिताद्वितीयात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते । कुतः । शब्दात् । तथा हि—'तरति शोकमात्मवित् ।' [ छा० ७ । १ । ३ ] 'स यो ह वैतत्परं ब्रह्म वेद ब्रह्मैव भवति' । [ मुण्ड० ३ २ । ९ ] 'ब्रह्मविदाप्नोति परम्' [ तै० २ । १ । १ ] 'आत्मा वा अरे द्रष्टव्यः'

[ बृ० ४ । ५ । ६ ] इत्युपक्रम्य ' एतावदरे खल्वमृतत्वम् ' [ बृ० ४ । ५ । १५ ] इत्येवंजातीयकाश( च्छ )ब्दात् । एवंजातीयका श्रुतिः केवलाया ब्रह्मविद्याया एव पुरुषार्थहेतुत्वं श्रावयतीति भाष्यम् ॥ १ ॥

अथात्र प्रत्यवतिष्ठते पूर्वपक्षी—

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

उदाहृता फलश्रुतिरात्मन्यर्थवाद इति जैमिनिराचार्यो मन्यते । कुतः । शेषत्वात् । कर्तृत्वेनाऽऽत्मनः कर्मशेषत्वात् । तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसंबन्ध्येव । अतस्तस्मिन्नवगतप्रयोजन आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते। यथाऽन्येषु द्रव्यसंस्कारकर्मसु ' यस्य पर्णमयी जुहूर्भवति न स पापꣲ श्लोकꣲ शृणोति ' [ तै० स० ३ । ५ । ७ । २ ] इत्यादिषु फलश्रुतिरर्थवादस्तद्वत् । तदुक्तं जैमिनिना— ' द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ' इति ॥ २ ॥

**आचारदर्शनात् ॥ ३ ॥**

' जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे ' [ बृ० ३ । १ । १ ] इत्यादिषु ब्रह्मविदां जनकादीनामपि कर्मानुष्ठानदर्शनात् । केवलाच्चेज्ज्ञानात्पुरुषार्थसिद्धिः स्यात्तर्हि किमर्थं ते बह्वायाससाध्यानि कर्माण्यनुतिष्ठेयुः । ' अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ' इति न्यायात् ॥ ३ ॥

**तच्छ्रुतेः ॥ ४ ॥**

तस्य विद्यायाः कर्मशेषत्वस्य ' यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ' [ छा० १ । १ । १० ] इति श्रुतेः श्रवणान्न केवलाया विद्यायाः पुरुषार्थहेतुत्वम् ॥ ४ ॥

**समन्वारम्भणात् ॥ ५ ॥**

' तं विद्याकर्मणी समन्वारभेते ' [ बृ० ४ । ४ । २ ] इति च विद्याकर्मणोः फलारम्भे साहित्यदर्शनादपि न विद्यायाः स्वातन्त्र्यम् ॥ ५ ॥

**तद्वतो विधानात् ॥ ६ ॥**

तद्वतः समस्तवेदार्थज्ञानवतः ' वेदमधीत्य स्नायात् ' [ छा० ८ । १५ । १ ] इत्यादिश्रुत्या कर्माधिकारः श्रूयते । तस्मादपि न विद्यायाः स्वातन्त्र्यम् । नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते नार्थविज्ञानमिति चेत् । नैषदोषः । दृष्टार्थत्वाद्वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम् ॥ ६ ॥

## नियमाच्च ॥ ७ ॥

' कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ' [ ईशा० २ ] एवंविधान्नियमादपि कर्मशेषत्वमेव विद्यायाः ॥ ७ ॥

एवं ' शेषत्वात्पुरुषार्थवादः ' [ ब्र० सू० ३ । ४ । २ ] इत्यत आरभ्य ' नियमाच्च ' [ ब्र० सू० ३ । ४ । ७ ] इत्यन्तया षट्सूत्र्या पूर्वपक्षे प्राप्ते सत्यभिधीयते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुर्नार्थे यदुक्तं पूर्वपक्षिणा शेषत्वात्पुरुषार्थवाद इत्यादि तन्नोपपद्यते । कस्मात् । अधिकोपदेशात् । यदि संसार्येवाऽऽत्मा जीवः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्ततो वर्णितेन प्रकारेण मोक्षफलश्रुतेरर्थवादत्वं स्यात् । न त्वेतदस्ति । अधिकस्तावज्जीवादन्यः कर्तृत्वभोक्तृत्वादिसंसारधर्मरहितोऽसङ्ग ईश्वरो वेदान्तेषूपदिश्यते । नच तद्विज्ञानं कर्मणः प्रवर्तकं भवति । प्रत्युत कर्मणां निवर्तकमेव भवति । तस्मात् ' पुरुषार्थोऽतः शब्दात् ' [ ब्र० सू० ३ । ४ । १ ] इति बादरायणस्य भगवतो मतमेव सम्यक् । न तत्पूर्वपक्षिणा दर्शितैर्हेत्वाभासैः खण्डितुं शक्यते । तस्येश्वरस्याऽऽधिक्यमेवं कथमवगम्यते । तद्दर्शनात् । तथा हि शारीरादधिकमीश्वरं दर्शयन्ति श्रुतयः—' यः सर्वज्ञः सर्ववित् ' [ मुण्ड० १ । १ । ९ ] ' भीषाऽस्माद्वातः पवते ' [ तै० २ । ८ । १ ], ' महद्भयं वज्रमुद्यतम् ' । [ क० ६ । २ ] ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' । ' तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत ' [ छा० ६ । २ । ३ ] इत्येवमाद्याः । पारमेश्वरमेव हि जीवस्य पारमार्थिकं रूपम् । उपाधिकृतं तु शारीरत्वं ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] इत्यादिश्रुतिभ्यः । विस्तरेणैतत्पुरस्ताद्वर्णितम् । ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

यदुक्तं जनकादीनामाचारदर्शनात्कर्मशेषत्वं विद्याया इति । तत्रोत्तरमिदमकर्मशेषत्वेऽपि दर्शनं तुल्यम् । तथा हि श्रुतिर्भवति—' एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे ' । ' एतद्ध स्म वै तद्विद्वांसोऽग्निहोत्रं न जुहूयाचक्रिरे ' [ कौ० २ । ५ ] ' एवं चैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ' [ बृ० ३ । ५ । १ ] इत्येवंजातीयका । याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते । ' एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज ' [ बृ० मा० ४ । ५ । २५ ] इति श्रुत्यन्तरम् । तस्मान्न कर्मशेषत्वं विद्यायाः । तुशब्दः कर्मशेषत्वलिङ्गस्यान्यथासिद्धिद्योतनार्थः ॥ ९ ॥

यत्पुनरुक्तं ' तच्छ्रुतेः ' [ ब्र० सू० ३ । ४ । ४ ] इति तत्रोत्तरमाह—

**असार्वत्रिकी ॥ १० ॥**

- यदेव विद्यया करोति ' [ छा० १ । १ । १० ] इत्येषा श्रुतिर्न सर्वविद्याविषया । प्रकृतोद्गीथविद्याप्रकरणात्तद्विषया । एतेनान्यसिद्धिरुक्ता ॥ १० ॥

**विभागः शतवत् ॥ ११ ॥**

' समन्वारम्भणात् ' [ ब्र० सू० ३ । ४ । ५ ] इत्यस्योत्तरम् । ' तं विद्याकर्मणी समन्वारभेते ' [ बृ० ४ । ४ । २ ] इत्यत्र विद्याऽन्य पुरुषमन्वारभते कर्मान्यमिति विभागो द्रष्टव्यः । शतवत् । यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत् ॥ ११ ॥

**अध्ययनमात्रवतः ॥ १२ ॥**

'तद्वतो विधानात् ' [ ब्र० सू० ३ । ४ । ६ ] इत्यस्योत्तरमिदम् । ' आचार्यकुलाद्वेदमधीत्य ' [ छा० ८ । १५ । १ ] इत्यध्ययनमात्रस्य श्रवणादध्ययनजन्यज्ञानं कर्माधिकारकारण भवति औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यते ॥ १२ ॥

**नाविशेषात् ॥ १३ ॥**

' कुर्वन्नेवेह कर्माणि ' [ ईशा० २ ] इत्यत्र न विदुष इति विशेषोऽस्ति । कुतः । अविशेषात् । तत्र विशेषाश्रवणात् ॥ १३ ॥

**स्तुतयेऽनुमतिर्वा ॥ १४ ॥**

' कुर्वन्नेवेह कर्माणि ' [ ई० २ ] इत्यत्रापरो विशेष उच्यते । यद्यत्र प्रकरणसामर्थ्याद्विद्वानपि कुर्वन्निति सबध्येत तथाऽपि विद्यास्तुतये कर्मानुमतिरियम् । वाकारः शङ्कानिरासार्थः। विदुषि कर्म कुर्वत्यपि विद्यासामर्थ्यात्तल्लेपो न भवति । ' न कर्म लिप्यते नरे ' [ ईशा० २ ] इति तत्रैव श्रवणात् ॥ १४ ॥

**कामकारेण चैके ॥ १५ ॥**

कामकार इच्छा । अपि चैके वाजसनेयिन इच्छया गार्हस्थ्यत्यागमधीयते—' पूर्वे वेद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः ' [ बृ० ४ । ४ । २२ ] इति । अतो विद्याप्राधान्य गम्यते । अनुभवारूढमेव विद्याफलम् । अतो न विद्यायाः कर्मशेषत्वम् ॥ १५ ॥

**उपमर्दं च ॥ १६ ॥**

एक इत्यनुवर्तते । अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य प्रपञ्चस्याविद्या-

कृतस्य विद्यासामर्थ्यादुपमर्दमामनन्ति-'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' [ बृ० २ । ४ । १४ ] इत्यादिना । तस्मादपि न विद्यायाः कर्मशेषत्वम् ॥ १६ ॥

**ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ (१)**

अपि चोर्ध्वरेतःस्वप्याश्रमेषु विद्या श्रूयते न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते । ननूर्ध्वरेतस एव न सन्तीति चेत् । न । हि यस्मात्कारणाच्छब्दे वेदे तेऽपि श्रूयन्ते-' तपःश्रद्धे ये ह्युपवसन्त्यरण्ये ' [ मु० १ । २ । ११ ] ' एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ' [ बृ० ४ । ४ । २२ ] ' ब्रह्मचर्यादेव प्रव्रजेत् ' [ जाबा० ४ ] इत्येवमादौ । तत्सिद्धं ब्रह्मविद्यायाः स्वातन्त्र्येण फलसाधनत्वम् ॥ १७ ॥ ( १ )

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥**

विद्यायाः कर्मशेषत्वासंभवात्स्वातन्त्र्येण फलसाधनत्वं पूर्वाधिकरण उक्तम् । तस्यं चाऽऽत्मज्ञानस्योर्ध्वरेतस्काश्रमेषु सुलभत्वं चोक्तम् । तस्याऽऽश्रमस्य सद्भावोऽस्मिन्नधिकरणे चिन्त्यते । तत्र नास्त्यूर्ध्वरेता इति तावत्प्राप्तम् । कुतः विध्यभावात् । ' त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः ' [ छा० २ । २३ । १-२ ] इत्यत्र यज्ञाद्युपलक्षितगार्हस्थ्यस्य तपःशब्दोपलक्षितस्य वानप्रस्थस्य ब्रह्मचर्योपलक्षितस्य नैष्ठिकब्रह्मचर्यस्य चानात्यन्तिकफलत्वं संकीर्त्याऽऽत्यन्तिकफलतया 'ब्रह्मसंस्थोऽमृतत्वमेति ' [ छा० २ । २३ । २ ] इति भिक्षोश्च परामर्शमात्रं गम्यते न तु विधिरुपलभ्यते । परामर्शमनुवादमित्यर्थः । हि यस्मादचोदना विधिरत्र न श्रूयते । विधिप्रत्ययाभावात् । ननु विध्यश्रवणेऽपि चेत्रिवीतादिवद्विधिः कल्प्यतामिति । गार्हस्थ्यादौ विरोधाभावेन विधिकल्पनेऽपि सन्यासविधेः कल्पना नोचिता । प्रत्यक्षश्रुतिविरोधादित्याह-अपवदतीति । ' वीरहा वा एष देवानां योऽग्निमुद्वासयते ' [ तै० सं० १ । ५ । २ । १] इति कर्मत्यागनिन्दादर्शनान्न सन्यासविधिः कल्पयितुं शक्यते । स्मृतिस्तु गार्हस्थ्यानधिकृतान्धपङ्ग्वादिविषया भविष्यति न ह्यन्धस्याऽऽज्यावेक्षणे पङ्गोश्च विष्णुक्रमेऽधिकारोऽस्ति ॥ १८ ॥

एवं प्राप्तावुत्तरं पठति—

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

आश्रमान्तरमप्यनुष्ठेयं बादरायण आचार्यो मन्यते । कुतः । साम्यश्रुतेः । ' त्रयो धर्मस्कन्धाः ' [ छा० २।२३।१ ] इत्यादौ गार्हस्थ्येन सममाश्रमान्तरस्यापि श्रुतेः । तद्वदेव विधिकल्पनयाऽनुष्ठेयत्वं संन्यासस्यापि । न च निन्दाविरोधः । उत्सन्नाग्निकगृहस्थविषयत्वान्निन्दायाः । तस्मादनुवादेऽप्यन्यथानुपपत्त्या विधिकल्पनं युक्तमेव ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥ ( २ )

इदानीमप्राप्तत्वाद्विधिरित्याशयेनाऽऽह । अत्र वाक्ये विधिः कल्पनीयः । कुतः । अप्राप्तत्वात् । ननु पुण्यलोकफलाः 'त्रयो धर्मस्कन्धाः' [ छा० २ । २३ । १ ] 'ब्रह्मसंस्थोऽमृतत्वमेति' [ छा० २ । २३ । १ ] इत्यनेन प्रतीतैकवाक्यता भज्येतेति चेत्सत्यम् । सतीमप्येकवाक्यताप्रतीतिं परित्यज्य विधिरेवात्राभ्युपगन्तव्यो भवति विध्यन्तरस्यादर्शनात् । विस्पष्टाच्चाऽऽश्रमान्तरप्रत्ययाद्गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः । यथाग्निहोत्रे श्रूयते—यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमप्राप्तत्वात् । तथा चोक्तं शेषलक्षणे—'विधिस्तु धारणेऽपूर्वत्वात्' [ जै० सू० ३ । ४ । १५ ] इति । तस्माद्विधिरत्र कल्प्यते । अत्र विचारान्तरं भाष्ये कृतम् । 'ब्रह्मसंस्थोऽमृतत्वमेति' [ छा० २ । २३ । १ ] इत्यत्र किं ब्रह्मसंस्थो यः कश्चिदाश्रमी किं वा परिव्राडेवेति । 'त्रयो धर्मस्कन्धाः' [ छा० २ । २३ । १ ] इत्युपक्रम्य 'सर्वे एते पुण्यलोका भवन्ति' [ छा० २ । २३ । १ ]इत्याश्रमिणा पुण्यफलं श्रावयित्वा 'ब्रह्मसंस्थोऽमृतत्वमेति' [ छा० २ । २३ । १ ] इति ब्रह्मसंस्थयाऽमृतत्वफलं श्राव्यते । तत्र यस्य कस्यचिदाश्रमिणो ब्रह्मसंस्था संभवतीति प्राप्तेऽभिधीयते । परिव्राडेव ब्रह्मसंस्थो नान्यः । ब्रह्मनिष्ठा नाम परित्यक्तसर्वव्यापारयाऽनन्यचित्ततया ब्रह्मणि समाप्तिः । न चासौ कर्मठे संभवति । कर्मानुष्ठानकर्मत्यागयोः परस्परविरोधात् । तस्मात्कर्मत्यागिन एव ब्रह्मनिष्ठा । तस्मात्सिद्ध ऊर्ध्वरेतस आश्रमः । सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यम् ॥ २० ॥ ( २ )

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

उद्गीथावयवस्योंकारस्य रसतमादयो गुणाः श्रूयन्ते—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' [छा० १।१।३] इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्थाः किंवोपासनार्था इति संशये । स्तुत्यर्था इति तावत्प्राप्तम् । कुतः । उपादानात् । उद्गीथादीनां कर्माङ्गानां स्तुत्यानामुपादानात् । यथा 'इयमेव जुहूः' 'आदित्यः कूर्मः' इत्यादौ कर्माङ्गभूतायाः जुह्वा आदित्यादिरूपेण स्तुतिस्तथा रसतमत्वादिगुणैरोंकारस्तुतिरिति प्राप्तेऽभिधीयते । विषमो दृष्टान्तः । जुहूरादित्य इत्यादिकं जुहूप्रकरणे पठितत्वात्स्तोत्रमस्तु । रसतमत्वादिकं तूपनिषदि पठितत्वेन कर्मप्रकरणपठितोद्गीथविधिवाक्येनैकवाक्यत्वाभावान्न स्तावकम् । किं त्वप्राप्तत्वाद्विधेयमेव । अङ्गविधिसंनिधानाभावाच्च नार्थवादत्वम् ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥ ( ३ )

'उद्गीथमुपासीत' [ छा० १ । १ । १ ] इत्यादिविधिश्रवणादप्युपासनाविधित्वमेवं-

जातीयकानाम् । 'उद्गीथमुपासीत' इति संनिहितेन विधिनैव( नैक )वाक्यत्वाद्रसतमत्वादिक ध्यातव्यम् ॥ २२ ॥ ( ३ )

## पारिप्लवार्था इतिचेन्न विशेषितत्वात् ॥ २३ ॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी कात्यायनी च' [ बृ० ४ । ५ । १ ] 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' [ कौ० ३ । १ ] 'जनको ह वैदेह आसांचक्रे' [ बृ० ४ । १ । १ ] इत्यादिकमुपनिषदि श्रूयमाणमाख्यानं तत्र संशयः । किमिदमाख्यानं पारिप्लवार्थमाहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थमिति । पारिप्लवार्थं भवितुमर्हति । अश्वमेधयागे रात्रिषु राजानं सकुटुम्बमुपवेश्य तस्याग्रे वैदिकान्युपाख्यानान्यध्वर्युणा वक्तव्यानि । तान्यनुष्ठानायोपयुज्येरन् । तदिदं पारिप्लवाख्य कर्म 'पारिप्लवमाचक्षीत' इतिवाक्येन विहितम् । एवमौपनिषदान्याख्यानानि पारिप्लवार्थानि । आख्यानसामान्यात् । ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात् । मन्त्रवत्प्रयोगशेषत्वादिति चेन्न । कस्मात् । विशेषितत्वात् । 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' [ श० प० १३ । ४ । ३—३ ] इत्येवमादीनि कानि चिदेवाऽऽख्यानानि तत्र विशेष्यन्ते । आख्यानसामान्याच्चेत्सर्वगृहीतिः स्यात्तदाऽनर्थकमेवेदं विशेषण स्यात् । तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः ॥ २३ ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ ( ४ )

तथा हि तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते प्ररोचनोपयोगात् प्रतिपत्तिसौकार्योपयोगाच्च । मैत्रेयीब्राह्मणे तावत् । 'आत्मा वा अरे द्रष्टव्यः' [ बृ० २ ४ । ५ ] इत्याद्यया विद्ययैकवाक्यता दृश्यते । तस्मात्संनिहितविधैकवाक्यताप्रतीतेर्नैषां वेदान्तगताख्यानाना कर्मविधिनैकवाक्यता संभवति । तस्माद्विद्यास्तावकमाख्यान न पारिप्लवार्थम् ॥ २४ ॥ ( ४ )

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ ( ५ )

'पुरुषार्थोऽतः शब्दात्' [ ब्र० सू० ३ । ४ । १ ] इत्यतोऽत इति समाकृष्यते । अत एव विद्यायाः पुरुषार्थहेतुत्वादेव ब्रह्मविद्या मोक्षे जनयितव्ये कर्माण्यपेक्षते न वेति संशये । अपेक्षत इति तावत्प्राप्तम् । कुतः । कर्मणा विद्याङ्गत्वात् । प्रयाजाद्यपेक्षदर्शपूर्णमासवत् । यद्यपि प्रथमाधिकरणे विद्यायाः स्वतन्त्रपुरुषार्थहेतुत्वप्रतिपादनेन कर्माङ्गत्वं निवारित तथाऽपि कर्मणा विद्याङ्गत्व न निवारितम् । अतो नासिद्धो हेतुः । अतो विद्या कर्माण्यपेक्षत इति प्राप्ते ब्रूमः । विद्याऽग्नीन्धनाद्युपलक्षितानि कर्माणि नापेक्षते । कुतः । अत एव पूर्वोक्तादेव स्वतन्त्रपुरुषार्थत्वादेवेत्यर्थः । विमतं ब्रह्मज्ञान स्वविरोधिनिवर्तनेऽन्यापेक्षं न भवति । प्रकाशकत्वाद्दीपवत् । यत्त्वङ्गत्वमुक्तं तत्र कर्मणः कीदृशमङ्गत्वम-

भिप्रेतम् । किं प्रयाजादिवत्फलोपकार्यङ्गत्वमुतावघातवत्स्वरूपोपकार्यङ्गत्वम् । नाऽऽद्यः । मुक्तेः कर्मजन्यत्वेनानित्यत्वप्रसङ्गात् । द्वितीये साध्यविकलो दृष्टान्तः । अवघातादीना विद्याया तथात्वाभावात् । तस्माद्विद्या स्वफलप्रदाने कर्माणि नापेक्षते ॥ २५ ॥ ( ५ )

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

ब्रह्मविद्या स्वफलदाने कर्माणि नापेक्षत इत्युक्तम् । इदमिदानीं चिन्त्यते । यथा विद्या स्वार्थसिद्धौ कर्माणि नापेक्षत एवं स्वोत्पत्तावपि । अन्यथा क्वचिदपेक्षते क्वचिन्नेत्य-र्धजरतीयन्यायः प्रसज्जेतेति प्राप्त इदमुच्यते—सर्वापेक्षा चेति । ब्रह्मविद्यायाः स्वोत्पत्ता-वस्त्यपेक्षा सर्वेषामाश्रमकर्मणाम् । कुतः । यज्ञादिश्रुतेः । ‘ तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ’ [ बृ० ४ । ४ । २२ ] इत्यादिश्रुत्या चित्तशुद्धिपूर्वकविविदिषोत्पत्तिद्वारा विद्यायामुपयोगोपपत्तेरित्यर्थः । अर्धजरतीयत्वदो-षोऽपि नास्ति । योग्यतावशेनैकस्यैव क्वचिदपेक्षा क्वचिदनपेक्षा च युज्यते । तत्र दृष्टान्तः । अश्ववत् । तथा लाङ्गलवहनेऽनपेक्षितोऽप्यश्वो रथवहनेऽपेक्ष्यते तद्वद्विद्याफलेऽनुपकारका-णामप्याश्रमकर्मणां विद्योत्पत्तावुपकार[क]त्वमविरुद्धम् । तस्मादस्ति विद्योत्पत्तौ सर्वा-पेक्षा ॥ २६ ॥

एवं प्रवृत्तिरूपाणि कर्माणि बहिरङ्गसाधनान्युक्त्वा विद्याया अन्तरङ्गसाधानान्याह —

## शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्ग-तया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ ( ६ )

यद्यपि यज्ञादिकं कर्मानुष्ठितं तथाऽपि मुमुक्षुः शमदमाद्युपेत. स्यात् । कुतः । तद-ङ्गतया विद्याङ्गतया । तद्विधेः । ‘ तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मान पश्येत् ’ [ बृ० ४ । ४ । २३ ] इति विद्यासाधन-त्वेन शमादीना विधानात् । विहितानाञ्च तेषामवश्यानुष्ठेयत्वात् । ननु यज्ञादीना न विद्यासाधनत्वं विध्यभावादिति चेन्न । ‘ पूषा प्रपिष्टभागोऽदन्तको हि सः ’ [ तै० सं० २ । ६ । ८ । ५ ] इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्यथा विधिः कल्प्यत एवमत्र विधेः कल्प्यत्वात् । शमादिवाक्ये तु पश्येदिति स्पष्टो विधिः । तस्मादेववि॑दिति विद्यासंयोगाच्छमादीन्यन्तरङ्गसाधनानि विविदिषासंयोगाद्यज्ञादीनि विद्यो-त्पत्तौ बहिरङ्गसाधनानीति विवेकः ॥ २७ ॥ ( ६ )

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

छान्दोग्ये प्राणविद्याया श्रूयते—‘ न ह वा एवंविदि किंचनानन्नं भवति ’ [ छा० ५ । २ । १ ] इति । प्राणोपासकस्याभक्ष्यं किमपि नास्तीत्यर्थः । अत्र सर्वान्नानुज्ञानं शमा-

दिवद्विद्याङ्गत्वेन विधीयत उत स्तुत्यर्थं संकीर्त्यत इति संशये । अत्र सर्वान्नभोजनस्य मानान्तरेणाप्राप्तत्वाद्विद्याङ्गत्वेन विधीयत इति प्राप्तेऽभिधीयते । नेदं सर्वान्नानुज्ञानं विधीयते । ' न ह वा एवंविदि किंचनानन्नं भवति ' [ छा० ५ । २ । १ ] इति वर्तमानोपदेशात् । न चासत्यामपि विधिप्रतीतौ प्रवृत्तिलोभेनैव विधिरभ्युपगन्तुं शक्यते । 'यदिदं किंचाऽऽश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नम्' इति श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेदमुच्यते । न ह वा विदि किंचनानन्नं भवतीति । न च श्वादिमर्यादमन्नं मानुषेण देहेनोपयोक्तुं शक्यते । कथ तद्विधातुं शक्यम् । तस्मात्प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादो न सर्वान्नानुज्ञानविधि. । नन्वेवं क्वचिदप्यभक्ष्यभक्षण न स्यान्नेत्याह प्राणात्यये सर्वान्नानुमितिरिति । निषिद्धभक्षणव्यतिरेकेण यदि प्राणात्ययस्तदेत्यर्थः । कुतः । तद्दर्शनात् । छान्दोग्याख्यायिकायां श्रूयते ' चाक्रायणः किल ऋषिरापद्गतः ' इत्यादि । चाक्रायणो मुनिः प्राणात्यये प्राप्ते पर्युषितान् हस्तिपकेनार्धभक्षितानुच्छिष्टान्कुल्माषान् भक्षयित्वा शूद्रभाण्डस्थमुदक न पपौ । तत्रोभयत्र कारणं चावोचत् । ' न वा अजीविष्यमिमानखादन् ' [ छा० १ । १० । ४ ] इति ' कामो म उदपानम् ' [ छा० १ । १० । ४ ] इति च । तदेतदुच्छिष्टपर्युषितभक्षणं दर्शयन्त्या. श्रुतेराशयो लक्ष्यते । प्राणात्ययप्रसङ्गे प्राणधारणायाभक्ष्यमपि भक्षणीयमिति स्वस्थावस्थाया तु विद्यावताऽपि न भक्षणीयमित्युदपानप्रत्याख्यानाद्गम्यते । तस्मादर्थवादो ' न ह वा एवंविदि ' [ छा० ५ । २ । १ ] इत्येवमादिः ॥ २८ ॥

**अबाधाच्च ॥ २९ ॥**

एवं च सति ' आहारशुद्धौ सत्त्वशुद्धिः ' [ छा० ७ । २६ । २ ] इत्येवमादिभक्ष्यविभागशास्त्रमबाधितं भविष्यति ॥ २९ ॥

**अपि च स्मर्यते ॥ ३० ॥**

' जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ' [ म० १० । १०४ ]

इत्यादिस्मृतिरपि प्राणात्ययप्रसङ्गे विदुषोऽविदुषश्च सर्वान्नानुमतिं स्मारयति ॥ ३० ॥

**शब्दश्चातोऽकामकारे ॥ ३१ ॥ ( ७ )**

निमित्तसप्तमी चेयम् । अकामकारनिमित्तम् । कामकारनिवृत्त्यर्थमयं शब्दः । ' ब्राह्मणो न सुरां पिबेत् ' इति श्रुतिः । साऽप्यत एव सर्वान्नानुमतेरर्थवादत्वादेवासंकुचिता भवतीत्यर्थः ॥ ३१ ॥ ( ७ )

## विहितत्वाच्चाऽऽश्रमकर्मापि ॥ ३२ ॥

यानि यज्ञादीनि कर्माणि विविदिषावाक्ये विहितानि तान्येवामुमुक्षोराश्रममात्रनिष्ठस्याऽऽश्रमधर्मत्वेन विहितानि । तेषामग्निहोत्रादीना कर्मणा ‘ यावज्जीवमग्निहोत्रं जुहोति ’ इति नित्याधिकारासिद्ध्यर्थम् । ‘तमेतं वेदानुवचनेन’ [ बृ० ४ । ४ । २२ ] इति विविदिषार्थे द्विरनुष्ठानं किं वा सकृदिति संशये । प्रयोजनभेदाद्द्विरनुष्ठानमिति प्राप्तावुच्यते । सकृदेवानुष्ठानं कर्तव्यम् । विविदिषार्थेन नित्यस्यापि सिद्धेः । यथा श्राद्धभोजनेन तृप्तिर्नान्तरीयकतया सिध्यति तथा विद्यार्थमनुष्ठितैः कर्मभिराश्रमकर्मापि सिध्यतु । न च तत्र विद्याहेतूनां कर्मणां काम्यत्वादाश्रमकर्मणां च नित्यत्वात्सकृत्प्रयोगे नित्यानित्यसयोगविरोध इति वाच्यम् । वचनद्वयबलेनोभयसिद्धेः ॥ ३२ ॥

एतदेव सूत्रद्वयेनाऽऽह—

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि चैतानि स्युः ‘ तमेतम् ’ इतिवचनेन विहितत्वादेव । आश्रमकर्माण्यप्यग्निहोत्रादीनि यावज्जीववाक्यविहितत्वात् । न चैकस्य कर्मणो नित्यकाम्योभयरूपत्वविरोधः शङ्क्यः । संयोगपृथक्त्वेनाविरोधात् । यथा ‘ खादिरो यूपो भवति ’ ‘ खादिरं वीर्यकामस्य यूपं कुर्वीत ’ इत्यत्र वाक्यद्वयेनैकस्य नित्यत्वं काम्यत्वं च तद्वत् ॥ ३३ ॥

## सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथाऽप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः । कुतः । उभयलिङ्गात् । श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत्–‘तमेत वेदानुवचनेन’ [ बृ० ४ । ४ । २२ ] इत्यादि । स्मृतिलिङ्गमपि—

‘ अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ’ [ भ० गी० ६ । १ ]

इत्यादि त एवेत्यवधारणात् ‘ मासमग्निहोत्र जुह्वति ’ इत्यत्र यथा नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते तथेहापि कर्मभेदोऽस्त्विति शङ्कां वारयत्याचार्यः ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥ ( ८ )

अत्रेदं भाष्यम् । सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनमनभिभवं च दर्शयति ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः ‘ ऐष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दति’ [छा० ८ । ५ । १ ] इत्यादिना । तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति ॥ ३५ ॥ ( ८ )

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

अनाश्रमिणां विधुरादीनां द्रव्यादिसंपद्रहितानामन्यतममाश्रमप्रतिपन्नानां विद्यायामधिकारोऽस्ति न वेति संशये नास्तीतितावत्प्राप्तम् । विद्यासहकारिपूर्वोक्ताग्निहोत्रादिकर्माभावादिति

प्राप्ते ब्रूमहे । तुर्नार्थे । अन्तरा चाप्यनाश्रमित्वेन वर्तमानानां विधुरादीनामप्यस्ति विद्याधिकारः । कुतः । तद्दृष्टेः । अनाश्रमित्वावस्थायामपि रैक्वादेर्गुरुकुलात्समावृत्तस्य विवाहात्पूर्वं संवर्गविद्याधिकारदर्शनात् । तद्दृष्टेरेतस्यार्थो रैक्ववाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेरिति ॥ ३६ ॥

**अपि च स्मर्यते ॥ ३७ ॥**

संवर्तादीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्व स्मर्यत इतिहासे ॥ ३७ ॥

ननु श्रुतिस्मृतिदर्शन लिङ्गमिदमुपन्यस्त तेन का नु खलु प्राप्तिरिति साऽभिधीयते—

**विशेषानुग्रहश्च ॥ ३८ ॥**

तेषामपि च विधुरादीनां जपोपवासदेवताराधनादिभिरविरुद्धैर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति । तथा च स्मृतिः—

'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति ॥

जन्मान्तरानुष्ठितैरपि चाऽऽश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः । तथा च स्मृतिः—

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' [ भ० गी० ६ । ४५ ]

इतिजन्मान्तरसंचिता अपि संस्काराः प्रकृतजन्मनि विद्यायाः सहकारिणो भवन्तीति दर्शयति । दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणापि विद्यार्थिनमधिकरोति श्रवणादिषु । तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते ॥ ३८ ॥

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥ ( ९ )**

अतस्त्वन्तरालवर्तित्वात् । इतरदाश्रमवर्तित्वम् । ज्यायः श्रेष्ठं विद्यासाधनम् । श्रुतिस्मृतिलिङ्गात् । श्रुतिस्तावत्—'तेनैति ब्रह्मवित्पुण्यकृत्' [ बृ० ४ । ४ । ९ ] इति । स्मृतिश्च—

'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः' इति ॥ ३९ ॥ ( ९ )

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥४०॥(१०)**

'ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्' [ जाबा० ४ ] इत्याश्रमाणामारोहः श्रुतः । ततो यतेर्गार्हस्थ्यस्वीकारोऽस्ति वा नवेति संशये पारिव्रज्याद्वनस्थ इत्याद्यवरोहो[पि] क्वचिद्रागवशात्पूर्वाश्रमकर्मश्रद्धावशात्प्रत्युतापि भवेत् । विशेषाभावादित्येवं प्राप्तेऽभिधीयते । तद्भूतस्योर्ध्वरेतस्त्वं प्राप्तस्य कथंचिदतद्भावस्ततः प्रच्युतिर्न स्यात् । यतः पूर्वाश्रमस्वीकारः कथंचिदपि न भवेदित्यर्थः । अय पक्षो जैमिनेरपिशब्दाद्बादरायणस्यापि

संमत इति शेषः । कुतः । नियमातद्रूपाभावेभ्यः । तथाहि–' अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् ' [ छा० २ । २३ । २ ] इति ' अरण्यमियादिति ' । ब्रह्मचर्यं समाप्य गृही भवेत् [ जा० ४ ] इत्यादि ।

' आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।

आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ' [ भार० १२ । २३४ । ४ ]

इति श्रुतिस्मृतिभ्यामारोहनियमः । नैवमवरोहे क्वचिन्नियम आम्नायते । अतद्रूपत्वमारोहसमानरूपत्वाभावः । अभावः शिष्टाचाराभावः । यत्तु पूर्वधर्मानुष्ठानचिकीर्षया प्रत्यवरोहणमस्त्विति तदसत् ।

' श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ' [ भ० गी० ३ । ३५ ]

इतिस्मरणात् । तस्मान्न प्रत्यवरोहो युक्तः । चोदनालक्षणत्वाद्धर्मस्य ॥ ४० ॥ (१०)

## न चाऽऽधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

नैष्ठिकब्रह्मचर्यादूर्ध्वरेतस्त्वं प्राप्य पुनः प्रसङ्गेन भ्रष्टस्यावकीर्णित्वे प्रायश्चित्तमस्ति न वेति संशये । ' अवकीर्णी नैर्ऋतं गर्दभमालभेत ' इत्येतत्प्रायश्चित्तमाधिकारिकमधिकारलक्षणे निर्णीतमपि नैष्ठिकस्य नास्ति ।

' आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।

प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥ ' इति

प्रायश्चित्तादर्शनवचनात् । ' अथ योऽत्र ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत ' इत्यस्ति प्रायश्चित्तमित्युच्येत । तस्य नैष्ठिकविषयत्वाभावात् । उपकुर्वाणो यो वेदाङ्गत्वेन व्रतमनुतिष्ठति तद्विषयमिदं प्रायश्चित्तवचनम् । तस्मादूर्ध्वरेतसो भ्रष्टस्य न प्रायश्चित्तम् ॥ ४१ ॥

इति प्राप्ते ब्रूमः—

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥ ( ११ )

तुर्नार्थे । उपपूर्वमुपपातकमेव नैष्ठिकस्यावकीर्णित्वं न महापातकमित्येके आचार्या मन्यन्ते । यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्येत न तन्महापातकं भवति । तस्मादुपकुर्वाणकवन्नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति । ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च । अशनवत् । यथा ब्रह्मचारिणो मधुमांसादिभक्षणे प्रायश्चित्तात्पुनः संस्कारो विद्यते तद्वत् । यदि महापातकेष्वपरिगणितत्वेनोपपातकमाश्रित्य प्रायश्चित्तमुच्यते तर्ह्यदर्शनवचनस्य का गतिरिति चेत् । यत्नपरं तद्वाक्यमिति ब्रूमः । अत एव ' प्रायश्चित्तं न पश्यामि ' इत्युक्तं न तु नास्तीति । प्रायश्चित्तं तु गर्दभपशुरेवायं लौकिकाग्नौ होतव्यः । तदुक्तमधिकारलक्षणे ' अवकीर्णिपशुश्चाधानस्याप्राप्तकालत्वात् ' इति ब्रह्मचारित्वस्य समत्वात् । तस्मात्प्रायश्चित्तस्य भावो युक्ततरः । तदुक्तं प्रमाणलक्षणे–' समा विप्रतिपत्तिः स्यात् ' [ पू० मी० सू० १ । ३ । ८ ] ' शास्त्रस्था वा तन्निमित्तत्वात् ' [ पू० मी०

सू० १ । ३ । ९ ] इति । एवं वानप्रस्थपरिव्राजकयोरपि व्रतभ्रंशे प्रायश्चित्तं स्मर्यते । वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत् । भिक्षुर्वनस्थवत्सोमवृद्धिवर्जमिति । कक्षवृद्धिवर्जनमिति भावः । तस्मादस्ति नैष्ठिकस्यापि प्रायश्चित्तम् ॥ ४२ ॥ ( ११ )

## बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥ ( १२ )

नैष्ठिकस्य प्रायश्चित्तानन्तरं संव्यवहार्यत्वमस्ति नवेति संशये प्रायश्चित्तेन शुद्धत्वात्संव्यवहारप्राप्तावुच्यते । यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं यदि वोपपातकम् । उभयथाऽपि । यद्वाऽवकीर्णित्वेऽपि प्रायश्चित्तानन्तरमपि विशिष्टैर्बहिष्कर्तव्या एव । कुतः । स्मृतेः । ' आरूढो नैष्ठिकं धर्मम् ' इति पूर्वोक्तस्मृतेः ।

' आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् ।
उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत् ' ॥

इति स्मृत्यन्तराच्च । आचाराच्च । एतादृशाञ्छिष्टा बहिष्कुर्वन्ति न तैः सह संव्यवहरन्ति । तैः सह यज्ञाध्ययनविवाहादीनि नाचरन्तीत्यर्थः ॥ ४३ ॥ ( १२ )

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अङ्गावबद्धोपासनेषु स्वामिनः कर्तृत्वमृत्विजां वेति संशये स्वामिन इत्यात्रेय आचार्यो मन्यते । कुतः । फलश्रुतेः । फलं च स्वामिनो न्याय्यम् । तस्मात्फलिनो यजमानस्यैव कर्तृत्वमित्यात्रेय आह ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

आर्त्विज्यमृत्विजां कर्म यदङ्गावबद्धोपासनमित्यौडुलोमिराचार्यो मन्यते । तस्मै हि परिक्रीयते । हि यस्मात्साङ्गाय कर्मण ऋत्विक्परिक्रीयते । तत्प्रयोगान्तःपातित्वादुद्गीथाद्युपासनानाम् । न च ध्यातुरेव फलमिति नियमः । साङ्गस्य कर्मण ऋत्विग्द्वारा यजमानस्य प्रयोजककर्तृत्वाद्गोदोहनादिवदुपपत्तेः ॥ ४५ ॥

## श्रुतेश्च ॥ ४६ ॥ ( १३ )

' यां वै काञ्चन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच' [ शत० १ । ३ । १ । २६ ] 'तस्मादु हैवंविदुद्गाता ब्रूयात्क ते काममागायानि' [ छा० १ । ७ । ८ ] इति ऋत्विक्कर्मणा जन्यं फलं यजमानगामीति दर्शयति । तस्मादङ्गावबद्धोपासनानामृत्विक्कर्मत्वसिद्धिः ॥ ४६ ॥ ( १३ )

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

बृहदारण्यके कहोलब्राह्मणे श्रूयते—' तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' [ बृ० ३ । ५ । १ ]

इति । अस्यार्थः—यस्माद्ब्रह्मभावः परमपुरुषार्थ इति मत्वा पूर्वे ब्राह्मणाः पुत्राद्येषणाभ्यो व्युत्थाय ब्रह्मभावमापन्नास्तस्माद्ब्राह्मणो ब्रह्म बुभूषुरुपनिषत्तात्पर्यार्थनिर्णयरूपं श्रवणापरपर्यायं पाण्डित्यं निर्विद्य निःशेषेण सपाद्य बाल्येन तिष्ठासेत् । बालवत्कामादिनि-र्मुक्तत्वेनासंभावनादिनिराकरणाय युक्तीरनुचिन्तयन्नवस्थातुमिच्छेत् । ततः पाण्डित्यं बाल्यं च निर्विद्येत्यनुवाद उक्तदार्ढ्यार्थः । अथ मुनिर्मननशीलो निदिध्यासको भवेत् । मौनादन्य-द्बाल्यं पाण्डित्यं चामौनं मौनं च निदिध्यासनं च निर्विद्याथ ब्राह्मणो ब्रह्माहमिति साक्षा-त्कृतपरमार्थो भवतीत्यर्थः । तत्र भवेदिति विध्यश्रवणान्मौनं विधेयं न वेति संशयः । न विधेयं विध्यश्रवणात् । न च विधिः कल्पयितुं शक्यः । पाण्डित्यशब्दप्राप्तस्य मौनस्यापू-र्वत्वाभावादिति प्राप्ते ब्रूमः । सहकार्यन्तरविधिः । विद्यासहकारिणो मौनस्य विधिरभ्युपेयः । कुतः । अप्राप्तत्वात् । तद्वतो विद्यावतः सन्यासिनो बाल्यपाण्डित्यापेक्षया तृतीयं मौनं विधेयम् । अपूर्वविधित्वासंभवेऽपि नियमविधित्वोपपादनाय पक्षेणेत्युक्तम् । यद्वा भेददर्शन प्राबल्यादस्य विद्यावतः पाण्डित्यमात्रेण साक्षात्कारो न प्राप्नोति । तस्मिन्पक्षे निदिध्यासने नियमविधिः । विध्यादिवत् । यथा ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इत्येवंजाती-यके विध्यादौ सहकारित्वेनाग्न्याधानादिकमङ्गजातं विधीयते तथाऽत्र विधिप्रधानेऽप्यस्मि-न्विद्यावाक्ये मौनविधिरित्यर्थः । अत्र विद्यारण्यपादा आहुः—पूर्वोक्तस्य पाण्डित्यस्य पुनर्मु-निशब्दाभिधाने प्रयोजनाभावान्निरन्तरज्ञाननिष्ठापूर्वार्थो मुनिशब्देन विवक्षितः । ‘ ततस्ति-ष्ठासेत् ’ इति पदानुवृत्त्या विधिर्लभ्यते । अस्ति च ज्ञाने नैरन्तर्येण प्रयोजनं भेदवास-नावासितस्य तन्निवृत्त्यर्थत्वादिति ॥ ४७ ॥

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुते सति कथं छान्दोग्ये गृहिणोपसंहारः । ‘ अभि-समावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः ’ इति गृहस्थाश्रममुपक्रम्य ‘ स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ’ [ छा० ८ । १५ । १ ] इत्यत्र गृहस्थस्य मोक्षमुक्त्वोपसंहारात् । तेनाऽऽश्रमान्तराभावशङ्का जायतेऽत आह—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

तुशब्दो विशेषणार्थः । कृत्स्नभावोऽस्य विशिष्यते । बहुलायासानि हि बहून्याश्रमक-र्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टान्याश्रमान्तरकर्माणि च यथासंभवमिन्द्रियसंयमा-दीनि तस्य विद्यन्ते । तस्माद्गृहिणोपसंहारो न विरुध्यते ॥ ४८ ॥

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ ( १४ )

आश्रमद्वयोपन्यासे तदितरयोरभावशङ्कायामिदमुच्यते । मौनं यत्याश्रमः । उपलक्षण-मेतद्यथा गृहस्थाश्रमयत्याश्रमौ श्रुतिविहितावेवमितरावपि वानप्रस्थगुरुकुलवासौ दर्शितौ । तथा च श्रुतयः—‘ तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः ’ [ छा० २ ।

२३ । १ ] इत्याद्याः । द्वयोराश्रमयोरितरेषामिति बहुवचनं तत्तदनुष्ठानवृत्तिभेदापेक्षम् । तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात्तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिरिति भाष्यम् ॥ ४९ ॥ ( १४ )

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ ( १५ )

' तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् ' [ बृ० ३ । ५ । १ ] इत्यत्र बाल्यमनुष्ठेयतया श्रूयते । तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्य संपादयितुमशक्यत्वाद्विध्यनर्हत्वम् । तर्हि बालस्य कर्म बाल्यमिति व्युत्पत्त्या कामचारवादादिकर्मास्तु सर्वथाऽपि न धीशुद्धिर्बाल्यमिति प्राप्ते ब्रूमः । पाण्डित्यमौनाख्ययोः श्रवणनिदिध्यासनयोर्मध्ये मनन विधेयत्वेन श्रुत्या विवक्षितम् । यथा बालोऽप्ररूढेन्द्रियतया दम्भदर्पादिकमाविष्कर्तुं नेहते तथा विद्वानपि ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमनाख्यापयन्बालवत्तिष्ठेदिति विधीयते । कुतः । अन्वयात्पूर्वापरवाक्यस्य तत्रैवार्थे समन्वयात् । श्रवणनिदिध्यासनयोर्मध्ये मननस्यानुष्ठेयत्वात् । तत्र च रागद्वेषादिराहित्यस्यैवापेक्षितत्वात् । तथा चोक्तं स्मृतिकारैः—

' यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्त वेद कश्चित्स ब्राह्मणः ' इति ॥ ५० ॥ ( १९ )

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ ( १६ )

' सर्वापेक्षा च ' [ ब्र० सू० ३ । ४ । २६ ] इत्यारभ्यान्तरङ्गबहिरङ्गसाधनानि निरूपितानि ज्ञानस्य । इदानीं फलभूतं ज्ञानमिह जन्मनि जन्मान्तरे वेति चिन्त्यते । किं तावत्प्राप्तम् । श्रवणमनननिदिध्यासनेष्वनुष्ठीयमानेष्वस्मिन्नेव जन्मनि ज्ञानं जायत इति नियम्यते । नत्विह वा जन्मान्तरे वेति कालविकल्पः । कुतः । श्रवणादिषु प्रवर्तमानस्य पुरुषस्येच्छाया ऐहिकज्ञानविषयत्वात् । इह मे विद्या जायतामित्यभिसधाय पुरुषः प्रवर्तते । न चादृष्टफलाना यज्ञादीनां तत्साधनत्वेन स्वर्गवज्जन्मान्तरे ज्ञानोत्पत्तिः शङ्कनीया । श्रवणादिप्रवृत्तेः प्रागेव विविदिषामुत्पाद्य यज्ञादीनां चरितार्थत्वात् । तदुक्तं भाष्यकारैः—न च कश्चिदमुत्र मे विद्या जायतामित्यभिसंधाय श्रवणादिषु प्रवर्तते । समान एव तु जन्मनि विद्याजन्माभिसंधायैतेषु प्रवर्तमानो दृश्यत इति । तस्मादैहिकमेव विद्याजन्मेति प्राप्ते ब्रूमः । असति प्रस्तुतप्रतिबन्धे विद्येहैवोत्पद्यते । प्रस्तुतस्य श्रवणादिसाधनस्योपस्थितविपाकेन प्राग्भवीयकर्मान्तरेण प्रतिबन्धे सति श्रवणादिसाधनैरत्रानुष्ठितैर्जन्मान्तरेऽपि विद्योत्पद्यते । कुतः । तद्दर्शनात् । वामदेवस्य गर्भ एवावस्थितस्य ज्ञानोत्पत्तिश्रवणात् । ' गर्भ एवैतच्छयानो वामदेव एवमुवाच ' [ ऐ० २ । १ ] ' अहं मनुरभवं सूर्यश्च ' [ बृ० १ । ४ । १० ] ' अहं कक्षीवानृषिरस्मि विप्रः ' इत्युपक्रम्य

' गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ' ।

शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम् ' [ ऐ० २ । १ ] इत्यादिविद्यायाः प्रतिबन्धश्च बहुविधः श्रूयते । तथा च श्रुतिः—

' श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः ' [ कठ २ । ७ ] इत्याद्या ।

तथा च श्रुतिर्दुर्बोधत्वमात्मनो दर्शयति—'आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ' [ क० १ । २ । ७ ] इति । तस्मादिह जन्मनि जन्मान्तरे वा विद्योत्पत्तिः प्रतिबन्धासद्भावाभ्याम् ॥ ५१ ॥ ( १६ ) ।

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥ (१७)**

यथा ब्रह्मलोकाख्यं फलं सालोक्यसारूप्यसामीप्यसार्ष्टिभेदेन चतुर्विधम् । तत्र सार्ष्टिर्नाम चतुर्मुखेन समानैश्वर्यत्वम् । यथा वा ' कर्मभूयस्त्वात्फलभूयस्त्वम् ' इति न्यायेन स्वर्गो बहुविधस्तथा मुक्तिरपि फलत्वाविशेषात्सातिशयेति प्राप्ते ब्रूमः । मुक्तिर्नाम निजसिद्धस्वरूपमेव न स्वर्गवदागन्तुकं किंचिद्रूपमित्यग्रे वक्ष्यते । ब्रह्म चैकविधं श्रुतं निर्णीतं च । तस्माच्चतुर्मुखस्य मनुष्यस्य वा मुक्तिरेकविधैव । सालोक्यादिविशेषस्तु जन्यरूपत्वादुपासनातारतम्येन सातिशयो भविष्यति । स्वरूपमुक्तिस्तु न तादृशी । सूत्रार्थस्त्वेवं—विद्याफलरूपाया मुक्तौ किं तारतम्यमस्ति न वेति संशये फलत्वाविशेषात्स्वर्गादिवत्तारतम्यप्राप्तावुच्यते । एवं यथोपासनाया नियमस्तारतम्यमस्त्येवं मुक्तौ तारतम्यं नास्ति । कुतः । तदवस्थावधृतेः । ' ब्रह्म वेद ब्रह्मैव भवति ' [ मुण्ड० ३ । २ । ९ ] इति ब्रह्मभावावधारणात् । अभ्यासोऽध्यायसमाप्तिद्योतकः ॥ ५२ ॥ ( १७ )

इति ब्रह्मसूत्रवृत्तौ तृतीयोऽध्यायः ॥ ३ ॥

---

अथ चतुर्थोऽध्यायः ।

---

**आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

तृतीये साधनाश्रयो विचारो वृत्तः । अस्मिन्नध्याये फलाश्रयो वर्तिष्यते प्रासङ्गिकं च किंचिदन्यत् । प्रथमं कतिपयाधिकरणैः साधनाश्रयो विचार्यते । तत्र श्रवणादिकं सकृदनुष्ठेयमसकृदिति संशये—कितावत्प्राप्तम् । श्रवणादिकं सकृदनुष्ठेयं प्रयाजादिवत् । ' सकृत्कृते कृतः शास्त्रार्थः ' इति न्यायेन शास्त्रस्य कृतार्थत्वादिति प्राप्ते ब्रूमः । श्रवणादीनामावृत्तिः कर्तव्या । कुतः । असकृदुपदेशात् । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [बृ० ४ । ५ । ६ ] इत्यसकृदात्मविषयकश्रवणाद्युपदेशः प्रत्ययावृत्तिं सूचयति । उक्तन्यायस्यादृष्टविषय-

त्वात् । अत्र ब्रह्मसाक्षात्कारलक्षणस्य दृष्टफलस्य संभवाददृष्टं न कल्पनीयम् । तदुक्तं भाष्यकारैः—दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत् । अपि चोपासन निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते । लोके गुरुमुपास्ते राजानमुपास्त इति यो गुर्वादीननुवर्तते स एव मुच्यते । एवं ध्यानेऽप्यावृत्तिः । तस्मात्फलपर्यन्त श्रवणाद्या आवर्तनीयाः ॥ १ ॥

## लिङ्गाच्च ॥ २ ॥ ( १ )

लिङ्गमपि प्रत्ययावृत्तिं ज्ञापयति । तथा ह्युद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' [ छा० १ । ५ । १ ] इत्येतदेकपुत्रतादोषेण निन्दित्वा 'रश्मींस्त्वं पर्यावर्तयात्' [ छा० १ । ५ । २ ] इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत्सिद्धवत्प्रत्ययावृत्तिं दर्शयति । तस्मादावृत्तिसामान्यात्सर्वप्रत्ययेष्वावृत्तिसिद्धिः । पुत्रं रश्मीनादित्यं चाभेदेन पर्यावर्तयोपास्वेत्यर्थः । एवं सति बहवः पुत्रा भविष्यन्ति न केवलादित्योपास्ताविवैकपुत्रतेति श्रुत्यर्थः । अत्राय भाष्यसंग्रहः । भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः । तेष्वावृत्तिसाध्यस्यातिशयस्य सभवात् । यस्तु परब्रह्मविषय. प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावसात्मभूतमेकमेव परं ब्रह्म समर्पयति तत्र किमर्थाऽऽवृत्तिः । ननु सकृच्छ्रवणे ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेन्न । आवृत्तावपि तदनुपपत्तेः । यदि हि 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्येवंजातीयक वाक्य सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्तदेवाऽऽवर्त्यमानमुत्पादयिष्यतीति का प्रत्याशेति । अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितु शक्नुयात् । यस्तु न शक्नोति त प्रत्युपयुज्यत एवाऽऽवृत्तिः । अत एव छान्दोग्ये श्वेतकेतुं प्रति नवकृत्व उपदेशः कृतः । तस्मादावृत्तिः कर्तव्या । विस्तरस्तु भाष्ये द्रष्टव्यः ॥ २ ॥ ( १ )

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ ( २ )

नित्यशुद्धबुद्धमुक्तस्वरूपो यः परमात्मा स किमहमिति ग्रहीतव्यः किंवा मदन्य इत्येतदत्र चिन्त्यते । किं तावत्प्राप्त नाहमिति ग्राह्यः । कुतः । सुख्यसुखिनोरपहतपाप्मत्वादितद्विपरीतगुणवतोर्जीवपरमात्मनोरेकत्वविरोधादिति प्राप्ते ब्रूमः । तुरवधारणे । चोऽप्यर्थे । वस्तुतो ब्रह्मरूपस्यैव सतो जीवस्यान्तःकरणोपाधिकृतो दुःखित्वादिधर्मो न वास्तव इति पूर्वं जीवविचारे प्रपञ्चितम् । अतो वास्तवविरोधाभावादात्मत्वेनैव ब्रह्म गृह्यताम् । अत एवाहंग्रहोपासनायामपि जाबाला आत्मत्वेनैव परमात्मानमुपगच्छन्ति. 'त्वं वा अहमस्मि भगवो देवते अहं वा त्वमसि भगवो देवते' इति । ग्राहयन्ति स्वशिष्यानपि शिष्टा आत्मत्वेनैवैनं परमात्मानम् । 'एष त आत्मा सर्वान्तरः' [ बृ० ३ । ४ । १ ] इति ।

'तत्त्वमसि' [ छा० ६ । ८ । ७ ] 'अहं ब्रह्मास्मि' [ बृ० १ । ४ । १० ] 'अयमात्मा ब्रह्म' [ बृ० २ । ५ । १९ ] इत्यादिमहावाक्यानि ग्राहयन्ति वा । तस्मादात्मत्वेनैव ब्रह्मोपासितव्यम् ॥ ३ ॥ ( २ )

## न प्रतीके न हि सः ॥ ४ ॥ ( ३ )

'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' [ छा० ३ । १८ । १ ] तथा 'आदित्यो ब्रह्मेति' [ छा० ३ । १९ । १ ] 'स यो नाम ब्रह्मेत्युपास्ते' [ छा० ७ । १ । ५ ] इत्येवमादिपु प्रतीकोपासनेषु संशयः । किं तेष्वात्मग्रहः कर्तव्यो न वेति । किंतावत्प्राप्तम् । तेष्वात्मग्रहः कर्तव्य इति । प्रतीकस्य ब्रह्मकार्यत्वेन ब्रह्मणोऽनन्यत्वाज्जीवस्य च ब्रह्माभिन्नत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेः । एवमात्मत्वेनोपासने प्राप्ते ब्रूमः । यदि ब्रह्मकार्यस्य प्रतीकस्य ब्रह्मैक्यमवलोक्येत तदा प्रतीकस्वरूपमेव लीयेत । घटस्य मृद्रूपेण सहैक्ये विलयदर्शनात् । यदि च जीवस्य ब्रह्मैक्यमवलोकयेत्तदा जीवत्वापाये सत्युपासकत्वं हीयेत । अथोपास्योपासकस्वरूपलोभेन कार्यकारणैक्यं जीवब्रह्मैक्यं च न पर्यालोच्येत तदा गोमहिषवदत्यन्तभिन्नयोः प्रतीकोपासकयोर्नास्त्येकत्वयोग्यता । तस्मान्न प्रतीकेष्वहंग्रहः ॥ ४ ॥ ( ३ )

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ ( ४ )

उक्तोदाहरणेषु विचार्यते किमादित्यादिदृष्टयो ब्रह्मण्यध्यासितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति संशयः । तत्र नियमहेतोरभावादादित्यादिदृष्टिभिर्ब्रह्मोपासितव्य भवति । ब्रह्मोपासनं च फलवदिति शास्त्रे मर्यादा । तस्मान्न ब्रह्मदृष्टिरादित्यादिष्वेवं प्राप्ते ब्रूमः । आदित्यादिषु ब्रह्मदृष्टिर्विधीयते । कुतः । उत्कर्षाद्ब्रह्मणः । ब्रह्मण उत्कृष्टत्वान्निकृष्टेषु मनआदिपु ब्रह्मदृष्टिः कर्तव्या । लोके हि निकृष्टे भृत्ये राजदृष्टिं कृत्वा राजवत्त पूजयन्ति । किं च 'मनो ब्रह्मेत्युपासीत' [ छा० ३ । १८ । १ ] इत्यत्र ब्रह्मशब्द इति शब्दपरत्वेन दृष्टिलक्षको भविष्यति । मनःशब्दश्चानितिपरत्वान्मुख्यार्थवाची । यथा स्थाणुश्चोर इति प्रत्येतीत्यत्र स्थाणुशब्दो मुख्यार्थवाची चोरशब्दो दृष्टिलक्षकस्तद्वत् । न चाब्रह्मरूपस्य मनस उपास्यत्वे ब्रह्मणः फलप्रदत्वानुपपत्तिः । अब्रह्मरूपस्यातिथेरुपास्यत्वेऽपि कर्माध्यक्षत्वेन यथा ब्रह्म फलं प्रयच्छति तद्वदत्रापि संभवात् । तस्मादब्रह्मणि प्रतीके ब्रह्मदृष्टिः कर्तव्या ॥ ५ ॥ ( ४ )

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ ( ५ )

'य एवासौ तपति तमुद्गीथमुपासीत' [ छा० १ । ३ । १ ] इत्यत्राऽऽदित्यदेवतां प्रतीकं कृत्वा तत्र कर्माङ्गभूतोद्गीथदृष्टिः कर्तव्या किं वोद्गीथं प्रतीकं कृत्वा तत्राऽऽदित्यदृष्टिः कर्तव्येति संशयः । तत्रानियम इति तावत्प्राप्तम् । कुतः । आदित्योद्गीथयोरुभयोर्ब्र-

ह्यकार्यत्वेन ब्रह्मवदुत्कृष्टत्वाभावेन पूर्वोक्तोत्कृष्टन्यायानवतरणे नियामकाभावादिति प्राप्ते ब्रूमः । आदित्यदृष्टया कर्माङ्गमवश्यं संस्कर्तव्यम् । कुतः । उपपत्तेः । उपपद्यते ह्येवमपूर्वसंनिकर्षादादित्यादिदृष्टिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः । ' यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ' [ छा० १ । १ । १० ] इति श्रुतिर्विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति । भवतु कर्मसमृद्धिफलेषूद्गीथादिष्वेवम् । स्वतन्त्रफलेषु ' य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते ' [ छा० २ । २ । ३ ] इत्यादिषु कथं कर्मसमृद्धिहेतुत्वम् । तेष्वप्यधिकृताधिकारात्प्रकृतापूर्वसंनिकर्षेणैव फलकल्पना युक्ता गोदोहनादिवत् । प्रकृतकर्माश्रितमेव फलसाधनमित्युपपत्तेः । अयं भावः—आदित्यादिदृष्टया कर्माङ्गमवश्य संस्कर्तव्यम् । तथा सति दृष्टिसंस्कृतस्य कर्मणः फलातिशयः संभवति । विपर्यये तु कर्माङ्गैरादित्यदेवतायां संस्कृताया कुतः फलं भविष्यति । न ह्यक्रियात्मिका देवता फलस्य साधनं भविष्यति । अन्यथा देवतायाः साधारणत्वेन यजमानायजमानयोः साधारणफलप्रसङ्गादिति । तस्मादनङ्गाश्रया आदित्यादिदृष्टयोऽङ्गेषूद्गीथादिषु कर्तव्या इति सिद्धम् ॥ ६ ॥ ( ५ )

## आसीनः संभवात् ॥ ७ ॥

अङ्गावबद्धोपासनेषु कर्मतन्त्रत्वान्नाऽऽसनचिन्ता । नापि सम्यग्दर्शने । वस्तुतन्त्रत्वाज्ज्ञानस्य । इतरेषु तूपासनेषु प्रवृत्तेयमासनचिन्ता । तत्र किं तिष्ठन्नासीनः शयानो वोपासीतोताऽऽसीन एवेति संशये मानसत्वादुपासनस्यानियमः शरीरस्थितेरिति प्राप्तेऽभिधीयते । आसीन एवोपासीत । उपासनं नाम विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणम् । कुतः । संभवात् । शयानस्य निद्राप्रसङ्गात् । गच्छतश्चित्तविक्षेपात् । तिष्ठतः शरीरधारणव्यग्रत्वान्नोपासनं संभवति । परिशेषादासीनस्यैवाव्यग्रत्वसंभवात् । तस्मादासीन एवोपासीत ॥ ७ ॥

## ध्यानाच्च ॥ ८ ॥

किं च ध्यानमुपासनम् । ध्यायतिश्च निश्चलाङ्गेषु निश्चलदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते बकोध्यायतीत्यादौ आसीनश्चानायासो भवति । तस्माद्ध्यानाद्धेतोरासीनस्य कर्मोपासनम् ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥

किंच ' ध्यायतीव पृथिवी ' [ छा० ७ । ६ । १ ] इत्यादौ पृथिव्यादीनामचलत्वमेवापेक्ष्य ध्यायतिवादो भवति तच्च लिङ्गमुपासनस्याऽऽसीनकर्मत्वे ॥ ९ ॥

## स्मरन्ति च ॥ १० ॥ ( ६ )

' शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ' । [ भ० गी० ६ । ११ ] इत्युपक्रम्य

‘ उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ’ ॥ [ भ० गी० ६ । १२ ]

इति शिष्टा उपासनाङ्गत्वेनाऽऽसनं स्मरन्ति । अत एव स्वस्तिकपद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥ १० ॥ ( ६ )

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ ( ७ )

‘ ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ’ इति दिङ्नियमः । ‘ प्राचीनप्रवणे वैश्वदेवेन यजेत ’ इति देशनियमः । ‘ अपराह्णे पिण्डपितृयज्ञेन चरन्ति ’ इति कालनियमः । तदेतन्नियमत्रयं यथा कर्मणि दृश्यते तथोपासनेऽपि द्रष्टव्यम् । कुतः । वैदिकत्वस्याविशेषात् । इति प्राप्ते ब्रूमः । मनस ऐकाग्र्यं हि ध्यानस्य प्रधान साधनम् । न च तस्य दिगादिनियमात्कश्चिदतिशयो विद्यते । अतो नास्ति नियमः । अत एव श्रुतिर्योगाभ्यासाय प्रदेशं निर्दिशन्ती मनोनुकूल इत्येवाऽऽह । यस्मिन्देशे सौमनस्य तत्रैव युञ्ज्यात् । न तु शास्त्रेण निश्चितः कश्चिद्देशोऽस्तीत्यर्थः । ननु

‘ समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाशयादिभिः ।
मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत् ’ ॥ [ श्वे०२।१० ]

इति विशेषः श्रूयत इति चेत् । उच्यते । अत्राऽऽहुर्भाष्यकृतः—सत्यमस्त्येवंजातीयको विशेषः । सति चैतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाऽऽचार्य आचष्टे ‘मनोकूले’ इति चैषा श्रुतिर्यत्रैकाग्रता तत्रेत्येतदेव दर्शयति ॥ ११ ॥ ( ७ )

## आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ ( ८ )

आवृत्तिः सर्वेषूपासनेषु कर्तव्येति प्रतिपादितमाद्येऽधिकरणे । तत्र यानि सम्यग्दर्शनार्थानि तान्यवघातादिवत्कार्यावसायीनीति ज्ञातमेवैषामावृत्तिपरिमाणम् । न हि सम्यग्दर्शने [ कार्ये ] निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यम् । अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । यानि पुनरभ्युदयफलान्युपासनानि तेष्वेषा चिन्ता । तत्राहंग्रहाद्युपासनानामावृत्तिः कियन्तं चित्कालं कर्तव्येताऽऽमरणादिति संशयः । तत्र कियन्तं चित्कालमावृत्तिः कर्तव्येति तावत्प्राप्तम् । आमरणादित्यनुक्तत्वात्किंचित्कालमावृत्तौ क्रियमाणायां शास्त्रार्थानुष्ठानसिद्धेश्चेति प्राप्ते ब्रूमः । आप्रायणान्मरणपर्यन्तमावृत्तिः कर्तव्या । कुतः । तत्रापि हि दृष्टम् । हि यस्मात्तत्रापि ज्योतिष्टोमादिष्वपि प्राप्तव्यफलज्ञान मरणकाले श्रुतौ दृष्टम् । ‘ यच्चित्तस्तेनैव प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयति ’ [ प्र० ३ । १० ] इत्येवमादिश्रुतिभ्यः । यस्मिन्विषये चित्तमस्य स यच्चितः । तेन विषयेण हृद्यभिव्यक्तेन सह तेजसोदानेन । उदानस्य तेजोदेवतात्मकत्वात् । आत्मना भोक्त्रा च युक्तो यथासंकल्पितं लोकं नयतीति श्रुत्यर्थः । तथा च भाष्यम्—प्रत्ययास्त्वेते स्वरूपावृत्तिं मुक्त्वा किमन्यत्प्रयाणकालभावि भावनाविज्ञानमपेक्षेरन् । तस्माद्ये प्रतिपत्तव्यफलभावनात्मकास्तेष्वाप्रायणादावृत्तिरिति । तथा च

श्रुतिः—'स यावत्क्रतुरयमस्माल्लोकात्प्रैति' [ श० प० १० । ६ । ३ । १ ] इति प्रयाणकाले प्रत्ययावृत्तिं दर्शयति । स्मृतिरपि—

'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः' ॥ [भ० गी० ८ । ६] इति ।

तस्माद्भाविजन्मनः प्रयोजकोऽन्त्यः प्रत्यय आमरणमावृत्तिमन्तरेण न सुलभः । कथं तर्हि ज्योतिष्टोमकर्मणा स्वर्गं गच्छतोऽन्त्यः प्रत्ययो भवति । कर्मजन्यापूर्ववशादिति गृहाण । उपासनेऽप्येवमस्ति तेनैवान्त्यः प्रत्ययो भविष्यति किमावृत्त्येति चेद्बाढम् । नैतावता निरन्तरावृत्तिलक्षणो दृष्टोपायः परित्याज्यो भवति । अन्यथा सर्वस्य सुखदुःखादेरपूर्वजन्यत्वेन भोजनाद्यर्थो दृष्टः प्रयत्नस्त्यज्येत । ततो दृष्टोपायत्वादामरणमावृत्तिः कर्तव्या । यद्यप्येतान्यष्टावधिकरणानि साधनविचारत्वात्पूर्वाध्याययोग्यानि तथाऽपि फलप्रत्यासन्नसाधनत्वात्फलाध्याये रचितानि ॥ १२ ॥ ( ८ )

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ (९)**

गतस्तृतीयशेषः । इदानीं फलविषया चिन्ता प्रस्तूयते । ब्रह्मसाक्षात्कारे सति पापं नश्यति किं वा न नश्यतीति संशये किं तावत्प्राप्तम् । न नश्यतीति । फलार्थत्वात्कर्मणः फलमदत्त्वा तन्नाशासंभवात् । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मरणादकृतप्रायश्चित्तं कर्म फलमदत्त्वा न कदापि नश्यतीत्येव प्राप्ते ब्रूमः । तदधिगमे ब्रह्मज्ञाने सत्युत्तराघस्याश्लेषोऽनुत्पत्तिः पूर्वाघस्य नाशश्च भवतः । कुतः । तद्व्यपदेशात् । 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं न श्लिष्यते' [ छा० ४ । १४ । ३ ] इति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' [छा० ५।२४। ३ ] इति च । इत्यादिश्रुतिषु पापाश्लेषविनाशयोर्व्यपदेशात् । किं च ब्रह्मात्मतत्त्वविदः पापलेपशङ्काऽपि नोदेति । नाकार्षं न करोमि न करिष्यामीति कालत्रयेऽप्यकर्तृब्रह्मस्वरूपत्वेन निश्चितत्वात् । न ह्यकर्तुर्लेपं मन्दा अपि शङ्कन्ते । नापि सगुणब्रह्मविदो लेपोऽस्ति । 'भिद्यते हृदयग्रन्थिः' [ मुण्ड० २ । २ । ८ ] इत्यादिश्रुतेः । 'नाभुक्तं क्षीयते' इत्यादि शास्त्रं तु सगुणनिर्गुणब्रह्मज्ञानरहितविषयम् । ब्रह्मज्ञानाभावे तु प्रायश्चित्तादिना तस्य क्षय इष्यते । 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते' [ तै० सं० ५ । ३ । १२ । २ ] इत्यादिश्रुतिस्मृतिभ्यः । तस्माद्ब्रह्माधिगमे प्रारब्धातिरिक्तसर्वदुरितक्षयः ॥ १३ ॥ ( ९ )

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ ( १० )**

पूर्वाधिकरणे बन्धहेतोरघस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रप्रमाणेन निरूपितौ । धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधि-

करणन्यायोऽत्रातिदिश्यते । इतरस्यापि पुण्यस्याघवदश्लेषविनाशौ ज्ञानिनो भवतः । कुतः । तस्यापि स्वफलहेतुत्वेन ज्ञानं प्रति प्रतिबन्धकत्वात् । 'उभे उ हैवैष एते तरति' [ बृ० ४ । ४ । २२ ] इत्यादिश्रुतिषु दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात् । अकर्त्रात्मत्वबोधनिमित्तकस्य कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् । 'क्षीयन्ते चास्य कर्माणि' [ मुण्ड० २ । २ । ८ ] इति चाविशेषश्रुतेः । अयमत्र निष्कर्षः । दहरविद्यावाक्यशेष उपासनाव्यतिरिक्तकाम्यपुण्य पापवदधःजन्महेतुत्वात्पापमेवेति मत्वा पापत्वेनैव श्रुतिः परामृशति 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति । अस्यायमर्थः—सुकृतदुष्कृतं तत्फल च ते सर्वे पाप्मानोऽतोऽस्मादुपासकान्निवर्तन्त इति । ब्रह्मलोकप्राप्त्यनन्तरं मुक्तिरिति प्राङ् निर्णीतम् । निर्गुणब्रह्मविदस्तु न ब्रह्मलोकप्राप्तिः किं तर्हि विदेहकैवल्यमेव । उभयोरपि सुकृतदुष्कृतनाशस्तुल्य एवेति । तदाह सूत्रकारः—पाते त्विति । तुरवधारणे । पाते शरीरपाते विदुषो मुक्तिरेव न तु पुण्यफलभोगाय शरीरान्तरम् । सकलकर्मणा निःशेषापक्षयात् । तस्माद्ब्रह्मविदि न पुण्यलेपः ॥ १४ ॥ ( १० )

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ ( ११ )**

पूर्वयोरधिकरणयोरकर्त्रात्मज्ञाननिमित्तक' सुकृतदुष्कृतयोर्विनाशोऽवधारित' । स किमविशेषेणाऽऽरब्धकार्ययोस्तयोर्भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्यते । 'उभे उ है वैष एते तरति' [ बृ० ४ । ४ । २२ ] इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इति प्राप्ते प्रतिविधीयते । तुर्नार्थे । अनारब्धं विद्वच्छरीरलक्षण कार्य याभ्यां पुण्यपापाभ्या ते तथोक्ते । एवंविधे एव पूर्वे पुण्यपापे प्रारब्धव्यतिरिक्ते एव नश्यतः । कुतः । तदवधेः । 'तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्ये' [ छा० ६ । १४ । २ ] इति श्रवणात् । अस्यार्थः—तस्य ब्रह्मविदो मुक्तिर्विलम्बमानाऽपि नात्यन्तं विलम्बते किं तु गर्भाधाने क्लृप्तस्याऽऽयुषः क्षयाभावेन यावद्देहः प्राणैर्न विमोक्ष्यते तावदेव विलम्बते । अथ देहप्राणयोर्वियोगे सति ब्रह्म संपद्यत इति । अत्र पुरुषादिव्यत्ययश्छान्दसः । अनया श्रुत्या यथा विदुषोऽप्यादेहपातं ससारोऽङ्गीकृतः, तथा विद्वदनुभवोऽप्यस्मिन्नर्थेऽतिस्फुटः । युक्तिरपि—यथा लोके तूणस्थेषु बाणेषु धानुष्कस्य स्वीकारपरित्यागयोः स्वातन्त्र्येऽपि न मुक्तबाणे स्वातन्त्र्यम् । स तु वेगे क्षीणे स्वयमेव पतति । एवं कुलालचक्रभ्रमणाद्युदाहर्तव्यम् । तथा दार्ष्टान्तिकब्रह्मज्ञानस्यापि विनाशकत्वस्वातन्त्र्यमनारब्धकार्येषु कर्मसु न त्वारब्धकर्मणि । आरब्धस्य प्रवृत्तफलत्वात् । यद्येतैः श्रुतियुक्त्यनुभवैरारब्धस्थितिर्नाभ्युपेयते तदोपदेष्टुरभावाद्विद्यासंप्रदाय उच्छिद्येत । न तावदविद्वानुपदेष्टेति शक्य वक्तुम् । विद्वांस्तु वेदनसमकालमेव मुक्त इति को नामोपदेष्टा संभवति । तस्मान्नारब्धयोर्नाशः ॥ १५ ॥ ( ११ )

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥**

नित्याग्निहोत्रादिकं कर्म विद्यया नश्यति वा न वेति संशयः । तत्र न नश्यतीति तावत्प्राप्तम् । कुतः । प्रारब्धव्यतिरिक्तत्वाविशेषात् । एवं प्राप्ते ब्रूमः । तुर्नार्थे । नित्याग्निहोत्रादिक तत्कार्यायैव विद्याद्वारा विद्याकार्यमोक्षायैव । अतो न नाशः । कुतः । तद्दर्शनात् । 'तमेत वेदानुवचनेन' [ बृ० ४ । ४ । २२ ] इत्यादिदर्शनात् । ज्ञानस्यैव हि प्रापकस्य कर्मणो मोक्षकारणत्वमुपचारात् । यद्यपि विद्यामुत्पाद्य कर्माणि नश्यन्ति फलापवर्गित्वात्कर्मणाम् । तथाऽपि फलमदत्त्वा नाश एव नाशः । फल दत्वा नाशस्तु न नाशत्वेन व्यवह्रियते । न हि लोके भोगेनोपक्षीणमन्नादिक नष्टमिति पामरेणाप्युच्यते । अयमत्राऽऽशयः । द्वावंशौ नित्यकर्मणः । एकोंऽशः प्राधान्येन चित्तशुद्धिं विधत्ते । अपरोऽशोऽनुषङ्गण स्वर्गादिफलं प्रयच्छति । यत्तु ज्ञानादूर्ध्वं नित्यं कर्मानुषङ्गेण फलप्रदं तस्य काम्यवदश्लेपः ॥ १६ ॥

नन्वश्लेषविनाशयोः सतोः 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यस्य को विषय इत्यत्रोत्तरमाह —

**अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥ ( १२ )**

अतोऽग्निहोत्रादेर्नित्यात्कर्मणोऽन्याऽपि ह्यस्ति साधुकृत्या या फलमभिसंधाय क्रियते । तस्या एव विनियोग उक्त एकेषां शाखिना–'सुहृदः साधुकृत्यामुपयन्ति' इति । उपायनमित्यर्थः । तस्या एव चेदमघवदश्लेषविनाशनिरूपणमितरस्या अप्येवमसंश्लेष इति । तथाजातीयस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे सप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥ १७ ॥ ( १२ )

**यदेव विद्ययेति हि ॥ १८ ॥ ( १३ )**

नित्यं कर्म द्विविधम् । अङ्गव्यपाश्रयविद्यासहितं तद्रहितं चेति । तत्र किमविशेषेणाग्निहोत्रादिकं कर्म विद्याङ्गमुत विद्याविशिष्टं कर्मेति संशयः । तत्र किं तावत्प्राप्तम् । अङ्गावबद्धोपासनासहितमेव कर्म ब्रह्मविद्याया अङ्गम् । उपासनारहितात्कर्मणः सकाशात्तत्सहितस्य प्रशस्तत्वात् । इति प्राप्तेऽभिधीयते । सत्यमेतद्विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्यारहितात्कर्मणः सकाशाद्वरम् । यदेव विद्ययेति वाक्ये तरप्श्रवणात् । 'यदेव विद्यया करोति० तदेव वीर्यवत्तरं भवति' [ छा० १ । १ । १० ] इति श्रुतिः सोपासनकर्मणोऽतिशयेन वीर्यमस्तीति वदन्ती निरुपासनस्यापि कर्मणो वीर्यमात्रमभ्यनुजानाति । अन्यथा तरप्प्रत्ययानुपपत्तेः । तस्मात्सोपासननिरुपासनयोर्नित्यकर्मणोस्तारतम्येन विद्यासाधनत्वम् ॥ १८ ॥ ( १३ )

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥ ( १४ )**

अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षयः पूर्वमुक्त इदानीं विदुषा मुक्तिरस्ति न वेति चिन्त्यते । अधिकारिपुरुषाणा मुक्तिर्नास्ति । प्रारब्धकर्मोपभोगाय बहुजन्मस्वीकारे तत्र पूर्वार्जितविद्याया लुप्ताया यत्कर्म क्रियते तस्य फलप्रदत्वे सत्युत्तरोत्तरजन्मपरम्पराया अवश्यंभावित्वात् । एवं प्राप्ते ब्रूमः । आरब्धं वर्म स्वफले सुखदुःखे भोजयते । तदर्थमेव प्रवृत्तत्वात् । नच विद्यालोपार्थं किंचित्कर्म पूर्वमनुष्ठितम् । येन कर्मणा विद्यालोप आशङ्क्येत । नच मरणव्यवधानमात्रेण विद्यालोप इति वक्तुं शक्यम् । सुषुप्तिव्यवधानेन तल्लोपादर्शनात् । अतो विद्यायामवस्थितायां बहुभिरपि क्रियमाणैरश्लेषान्मिथ्याज्ञानस्य सम्यग्ज्ञानेन बाधितत्त्वाच्च सम्यग्दर्शिनां चरमदेहपातानन्तरमेव विदेहकैवल्यमित्यनवद्यम् ॥ १९ ॥ ( १४ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितविरचितायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयः पादः ।

---

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

अथापरासु विद्यासु फलप्राप्तये देवयानं पथानं कथयिष्यन्प्रथमं तावद्यथाशास्त्रमुत्क्रान्तिक्रममाचष्टे । समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति । अनुत्क्रान्तस्यापरविद्याफलप्राप्तेरसंभवात्फलाध्यायसङ्गतिः । छान्दोग्य उत्क्रान्तिक्रमः श्रूयते—' अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ' [ छा० ६ । ८ । ६ ] इति । तत्र म्रियमाणस्य पुरुषस्य प्रयतो वागादीनि दशेन्द्रियाणि मनसि लीयन्ते । स च लयः किं स्वरूपेण वृत्त्या वेति संशये सति वागादीना स्वरूपेण लय इति प्राप्त ' वाङ् मनसि ' इति श्रुतौ वृत्तिशब्दाश्रवणात् । तथा च श्रुतिरनुगृहीता भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणयोः श्रुतिर्न्याय्या न लक्षणा । तस्माद्वाच एव मनसि लय इति प्राप्ते ब्रूमः । वाग्वृत्तिरेव मनसि लीयते न तु वाक् । कुतः । दर्शनात् । मनोवृत्तौ स्थितायां वाग्वृत्तिलयो दृश्यते । मनसो वागादिक प्रत्यनुपादानादुपादान एन कार्यस्य स्वरूपेण लय इति मृद्घटादौ व्याप्तेर्दर्शनान्न वागादीनां स्वरूपेण विलयः । वृत्तिस्त्वनुपादानेऽपि लयमर्हति । अङ्गारेषु जलमध्ये प्रक्षिप्तेषु वह्निवृत्तेर्दाहप्रकाशात्मिकाया अनुपादाने जले लयदर्शनात् । श्रुतौ तु वाक्शब्देन वृत्तिर्लक्ष्यते वृत्तिवृत्तिमतोरभेदोपचारात् । कथं तर्ह्यस्मिन्पक्षे शब्दो ' वाङ्मनसि संपद्यते '

इत्यत आह—शब्दाच्चेति । शब्दोऽप्यस्मिन्पक्षेऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादिति भाष्यात् । तस्माद्वागादीनां वृत्तय एव मनसि लीयन्ते न वागादयः ॥ १ ॥

## अत एव च सर्वाण्यनु ॥ २ ॥ ( १ )

यस्मादिन्द्रियाणां मनउपादानकत्वाभावोऽत एव वाच इव मनसि चक्षुरादीनामपि वृत्तिलय एव न स्वरूपेण लयः । वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्त इत्यर्थः । दृश्यते हि लोके मनोवृत्तौ स्थितायां चक्षुरादिवृत्तिलयः । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथक्करणं ' वाङ् मनसि संपद्यते ' [ छा० ६ । ८ । ६ ] इत्युदाहरणानुरोधेनेति द्रष्टव्यम् ॥ २ ॥ ( १ )

## तन्मनः प्राण उत्तरात् ॥ ३ ॥ ( २ )

' वाङ् मनसि संपद्यते मनः प्राणे ' [ छा० ६ । ८ । ६ ] इत्यत्र मनसि वागादीनां वृत्तिलय एव न स्वरूपलय इत्युक्तम् । अथ तदुत्तरं वाक्यं ' मनः प्राणे ' इति । किमत्रापि प्राणे मनसो लय इति तावत्प्राप्तम् । कुतः । मनः प्रति प्राणस्योपादानत्वसंभवात् । तथा हि—' अन्नमयं हि सोम्य मन आपोमयः प्राणः ' [ ६ । ५ । ४ ] इति श्रुतेर्मनसोऽन्नं कारणं प्राणस्याऽऽपः कारणम् । तथासति मनःप्राणशब्दाभ्यां तत्कारणे अन्नोदके उपलक्ष्य मनः प्राणे लीयत इति वाक्यस्यान्नमप्सु लीयत इत्यर्थो व्याख्यातः । ' आपश्चान्नमसृजन्त ' [ छा० ६ । २ । ४ ] इति श्रुतेरपामन्नप्रकृतित्वादन्नात्मकस्य मनसोऽबात्मके प्राणे स्वोपादने स्वरूपेण लयो युक्ततर इत्येवं प्राप्ते ब्रूमः । तद्वाह्येन्द्रियवृत्तिलयाश्रयभूतं मनः प्राणे वृत्तिरूपेणैव लीयते न स्वरूपेण । कुतः । उत्तरादुत्तरवाक्यात् । द्विविधमुपादानं मुख्यं प्राणाडिकं चेति । तत्र प्राणमनसोर्मृद्घटयोरिव न मुख्य उपादानोपादेयभावोऽस्ति किं तर्हि संबन्धपरंपरया प्रणाड्या । न हि प्राणाडिके उपादाने कार्यस्य लयं क्वचित्पश्यामः । तदुक्तं भाष्यकृद्भिः—सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते । न च मनसः स्वरूपाप्ययः प्राणे संभवत्यतत्प्रकृतित्वादिति । वृत्तिवृत्तिमतोरभेदविवक्षया मनः प्राणे संपद्यत इत्युक्तम् । तस्मात्प्राणे मनोवृत्तीनामेव लयः ॥ ३ ॥ ( २ )

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

इदानीं प्राणस्तेजसीत्यत्र चिन्त्यते । प्राणस्य तेजसि वृत्तिलय आहोस्विद्देहेन्द्रियाध्यक्षे जीव इति संशयः । तेजस्येव प्राणस्य लय इति तावत्प्राप्तम् । कुतः । ' प्राणस्तेजसि ' इति श्रुतेः । एवं प्राप्तेऽभिधीयते । स प्राणोऽध्यक्षे जीवे विलीयते । कुतः । तदुपगमादिभ्यः । तस्मिन्नध्यक्षे सर्वेषां प्राणानामुपगमो लय आदिशब्देनाध्यक्षानुवृत्तिः । तयोः श्रवणादित्यर्थः । ' तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति '

[ बृ० ४ । ४ । २ ] इतिश्रुतेः । ‘ एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोऽच्छ्वासी भवति ’ [ बृ० ४ । ३ । ३८ ] इति श्रुत्यन्तराच्च । ननु ‘ प्राणस्तेजसि ’ [ छा० ६ । ८ । ६ ] इति श्रूयते कथं प्राणोऽध्यक्ष इत्यधिकमुच्यते । नैष दोषः । अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य ॥ ४ ॥

तर्हि ‘ प्राणस्तेजसि ’ इत्यस्याः श्रुतेः का गतिरित्यत आह—

**भूतेषु तच्छ्रुतेः ॥ ५ ॥**

‘ प्राणस्तेजसि ’ इत्यतः श्रुतेः प्राणसंपृक्तो जीवस्तेजःसहचरितेषु देहबीजभूतेषु भूतसूक्ष्मेष्वेवावतिष्ठते । ननु ‘ प्राणस्तेजसि ’ इति श्रुतौ प्राणस्यैव तेजस्यवस्थितिः श्रूयते न प्राणसंपृक्तस्याध्यक्षस्य । नैष दोषः । सोऽध्यक्ष इत्यस्यापि तत्र श्रवणात् । ‘ एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति ’ [ बृ० ४ । ३ । ३८ ] इति श्रुत्यन्तरे जीवे प्राणलयस्य स्पष्टमाम्नानाच्च ॥ ५ ॥

ननु प्राणस्तेजसीति तेजोमात्रश्रवणे कथं तेजःसहचरितेषु भूतेष्वित्युच्यत इत्यत आह—

**नैकस्मिन्दर्शयतो हि ॥ ६ ॥ ( ३ )**

अन्तकाल एकस्मिन्नेव तेजसि जीवो नावतिष्ठते । हि यस्मात् ‘ पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ’ [ छा० ५ । ३ । ३ ] इत्यत्र प्रश्नप्रतिवचने भूतसूक्ष्मेष्ववस्थानं दर्शयतः । तथाऽन्याऽपि श्रुतिः—‘ पृथिवीमय आपोमयस्तेजोमयो वायुमय आकाशमयः ’ [ बृ० ४ । ४ । ५ ] इत्याद्या । स्मृतिरपि—

‘ अण्व्यो मात्रा अनाशिन्यो दशार्धानां तु याः स्मृताः ।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ’ ॥ [ मनुस्मृ० १ । २७ ]

इत्याद्या । अमुमेवार्थं दर्शयतः । तस्मात्प्राणसंपृक्तोऽध्यक्षो भूतसूक्ष्मेषु लीयते ॥६॥(३)

**समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ ( ४ )**

सेयमुत्क्रान्तिः सगुणब्रह्मोपासकस्यानुपासकस्य च समाना किं वा विशेषवतीति संशयः । विशेषवतीति तावत्प्राप्तम् । दहरविद्यायाममृतत्वश्रवणात् । निर्गुणविद्यायामिवोत्क्रान्त्यनुपयोगादविदुष एवेयमुत्क्रान्तिरिति प्राप्ते ब्रूमः । विद्वदविदुषोः समानेयमुत्क्रान्तिः । आसृत्युपक्रमात् । स्रियते गम्यते प्राप्यते ब्रह्मलोकोऽनयेति सृतिस्तां मर्यादीकृत्योपक्रमात् । सगुणज्ञानिनो मूर्धन्यनाडीप्रवेश उत्तरमार्गोपक्रमः । ज्ञानरहितस्य नाड्यन्तरप्रवेशो दक्षिणमार्गोपक्रमः । मार्गपर्यन्तमिदं भूतसूक्ष्मायणं समानमेव । अज्ञानिन इव सगुणब्रह्मोपासकस्यापि देवयानगमनव्यतिरेकेण ब्रह्मलोकप्राप्तेरसंभवेनोत्क्रान्तिरावश्यकीत्यर्थः । ननु विदुषाऽमृतत्वं प्राप्तव्यं न च तद्देशान्तरायत्तं तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति । अत्रोच्यते-

अनुपोष्याविद्यादिक्लेशजातमदग्ध्वाऽपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्स्यते । संभवति तत्र सृत्युपक्रमो भूताश्रयत्व च । न हि निराश्रयाणां प्राणानां गतिरुपपद्यते । उष-दाहे इति धातोः क्विबन्तस्योपसृष्टस्य रूपमनुपोष्येति । तस्माद्विद्वदविदुषोरुत्क्रान्तिः समाना ॥ ७ ॥ ( ४ )

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

' अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ' [ छा० ६।८।६ ] इत्यत्र तेजःप्रभृतीनां भूतानां सकरणानां प्रयतः पुसः परमात्मनि किं वृत्तिलयः किं वा स्वरूपलय इति संशयः । स्वरूपलय इति तावत्प्राप्तम् । परमात्मनो भूतोपादानत्वात् । तस्मिन्नुपादाने कार्यस्य स्वरूपेण लयो युक्त इति प्राप्ते ब्रूमः । तत्तेजःप्रभृति भूतसूक्ष्म श्रोत्रादिकरणाश्रयभूतमापीतेरासंसारमोक्षात्तत्त्वज्ञाननिमित्तादव-तिष्ठते ।

> ' योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
> स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ' ॥ [ कठ० ५ । ७ ]

इति मरणानन्तरमपि संसारव्यपदेशात् । अन्यथा सर्वेषां मरणानन्तरमेव मोक्षप्रसङ्ग इति विधिनिषेधशास्त्रवैयर्थ्यं प्रसज्जेत तस्मात्सगुणोपासकाना भूतसूक्ष्मावशेषैव परमात्मनि संपत्तिः सुषुप्तिवदिति ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

तच्चेतरभूतसहित तेजोऽस्माच्छरीरात्प्रयतो जीवस्याऽऽश्रयभूत स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति । नाडीनिष्क्रमणश्रवणात् । तत्र तनुत्वात्संचारोपपत्तिः । अत एव निर्गच्छत्तेजः पार्श्वस्थैर्नोपलभ्यते ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

अत एव च सूक्ष्मत्वात्स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेन न तत्सूक्ष्मं शरीर-मुपमृद्यते ॥ १० ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥ ( ५ )

अस्यैव सूक्ष्मशरीरस्यायमूष्मा यः शरीर उपलभ्यते । कुतः । उपपत्तेः । सूक्ष्मशरीरे निर्गते मृतशरीर ऊष्मा नोपलभ्यते । सति तस्मिन्सूक्ष्मशरीर ऊष्मोपलभ्यत इत्युपपद्यते । प्रसिद्धशरीरव्यतिरिक्तशरीरव्यपाश्रय एवैष ऊष्मेति ॥ ११ ॥ ( ५ )

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

अमृतत्वं चानुपोष्येत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगत-स्तत्रापि केनचित्कारणेनोत्क्रान्तिमाशङ्कते निर्गुणब्रह्मज्ञानिनोऽप्युत्क्रान्तिरस्ति न वेति संशये ।

अविशेषादस्तीत्याह पूर्वपक्षी । ननु ' न तस्य प्राणा उत्क्रामन्ति ' [ बृ० ४ । ४ । ६ ] इति प्रतिषेधाद्ब्रह्मविदो नोत्क्रान्तिरिति चेन्न । शारीरादात्मन एष उत्क्रान्तिप्रतिषेधो न शरीरात् । कथमेतदवगम्यते । ' न तस्मात्प्राणा उत्क्रामन्ति' [ बृ० मा० ४ । ४ । ८ ] इति शाखान्तरे पञ्चमीप्रयोगात् । संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते । तस्मादुच्चिक्रमिषोर्जीवात्प्राणा नोत्क्रामन्ति तेन सहैवोत्क्रामन्ति तेन सहैव भवन्तीति श्रुत्यर्थः ॥ १२ ॥

तस्मात्प्राणसहितस्यैव जीवस्य देहादुत्क्रातिरिति प्राप्ते निराचक्रे ( करोति ) सूत्रकारः—

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

यदुक्तं ब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरिति नैतदस्ति । कुतः । हि यस्मादेकेषां शाखिनां देहापादानक एवोत्क्रान्तिनिषेधः स्पष्ट उपलभ्यते । तथा ह्यार्तभागप्रश्ने—' यत्राय पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति ' [ बृ० ३ । २ । ११ ] इत्यत्र ' नेति होवाच याज्ञवल्क्यः ' [बृ०३ । २ । ११] । तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृतो न स्यादस्यामाशङ्कायाम् । ' अत्रैव समवलीयन्ते ' इति प्रणानां विनाशं प्रतिज्ञाय तत्सिद्ध्ये देहस्योच्छ्वयनादीनि तत्रैवाऽऽम्नातानि । अतो जीवनासंभवान्मृतो देह इति व्यवहारः । तस्माद्ब्रह्मविदो न गत्युत्क्रान्ती भवतः । 'ब्रह्मैव सन्ब्रह्माप्येति ' [ बृ० ४ । ४ । ६ ] इत्यादिश्रुतेः ॥१३॥

## स्मर्यते च ॥ १४ ॥ ( ६ )

गत्युत्क्रान्त्योरभावो भारते स्मर्यते—

' सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ॥ ' [म० भा० १२ । २७० । २२] इति ।

अपदस्य न विद्यते पद गन्तव्यस्थानं यस्य तस्येत्यर्थः । तस्माच्छरीरापादानक एवोत्क्रान्तिप्रतिषेधः ॥ १४ ॥ ( ६ )

## तानि परे तथा ह्याह ॥ १५ ॥ ( ७ )

इन्द्रियाणि भूतानि च ब्रह्मविदः परे ब्रह्मणि लीयन्त आहोस्वित्स्वस्वप्रकृताविति संशये प्रातिस्विकेषु स्वस्वकारणभूताग्न्याद्यधिकरणेषु विलीयन्ते न परमात्मनीति तावत्प्राप्तम् । कुतः । ' गताः कलाः पञ्चदश प्रतिष्ठाः ' [ मुण्ड० ३ । २ । ७ ] इति श्रुत्या कलाशब्दवाच्यानां वागादिप्राणानां प्रतिष्ठाशब्दवाच्येषु स्वस्वकारणेषु लयप्रतिपादनात् । ' यत्रास्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम् । ' [ बृ० ३ । २ । १३ ] इत्यादिश्रुतेश्चेति प्राप्ते ब्रूमः । तानि प्राणशब्दोदितानि वागादीनीन्द्रियाणि भूतानि च ब्रह्मविदः परे ब्रह्मण्येव विलीयन्ते । कुतः । तथा ह्याह श्रुतिः—'यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासा नामरूपे समुद्र इत्येत्र प्रोच्यत एव-

मेवास्य द्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येव प्रोच्यते ' [ प्रश्न० ६ । ५ ] इति । भिद्येते विलीयेते इत्यर्थः । सेयं श्रुतिस्तत्त्वविद्दृष्टिविषया । ' गताः कलाः पञ्चदश प्रतिष्ठाः ' [ मुण्ड० ३ । २ । ७ ] 'अग्निं वागप्येति' [ बृ० ३ । २ । १३ ] इत्यादिशास्त्रं तु तटस्थपुरुषप्रतीतिविषयम् । म्रियमाणे तत्त्वविदि समीपवर्तिनः पुरुषाः स्वस्वदृष्टान्तेन तदीयवागादीनामग्न्यादिषु लयं मन्यन्ते । अतो न श्रुत्योर्विरोधः । तस्माद्ब्रह्मविदः प्राणाना ब्रह्मण्येव विलयः ॥१५॥ (७)

## अविभागो वचनात् ॥ १६ ॥ ( ८ )

स पुनः पूर्वाधिकरणोक्तो विदुषः कलाप्रविलयः स किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति संशये सावशेष इति प्राप्तम् । प्रलयसामान्यात् । एवं प्राप्ते ब्रूमः । अविभागो निःशेषलयः । कुतः । वचनात् । ' भिद्येते चासां नामरूपे ' [ प्र० ६।५ ] इत्यत्र जीवस्य याः षोडश कलाः संसारहेतवस्तासां कलानां नामरूपविलयश्रवणात् । ताश्च कला वाक्योपक्रमेऽनुक्रान्ताः । ' स प्राणमसृजत ' [ प्र० ६ । ४ ] इत्यादिना । प्राणो बुद्धिः । ' खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रः कर्म लोका लोकेषु च नाम च ' [ प्र० ६ । ४ ] इति । यदि प्राणादीनां नामान्तानां नामरूपे शक्त्यवशेषे लीयेते तदा नामरूपविभेदश्रुतिरुपरुध्येत । शक्त्यात्मना नामरूपयोः सूक्ष्मयोरवस्थानात् । ' स एषोऽकलोऽमृतो भवति ' [ प्र० ६ । ५ ] इति तस्या एव श्रुतेः शेषात् । अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः । तस्माद्विदुषः कलानां निःशेषेण ब्रह्मणि लयः ॥ १६ ॥ ( ८ )

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ ( ९ )

समाप्ता प्रासङ्गिकी परविद्याचिन्ता । संप्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति । ' समाना चाऽऽसृत्युपक्रमात् ' [ ब्र० सू० ४ । २ । ७ ] विद्वदविदुषोरुत्क्रान्तिरित्युक्तम् । इदानीं सृत्युपक्रमं दर्शयति । तस्योपसंहृतवागादिकलापस्योत्चिक्रमिषोर्जीवस्यौक आयतनं हृदयम् । ' स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ' [ बृह० ४ । ४ । १ ] इति श्रुतेः । तदग्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते । ' तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ' [ बृ० ४ । ४ । २ ] इति । अस्यार्थः–वाङ् मनसि संपद्यत इति क्रमेण संलिङ्गशरीरो जीवो हृदयस्याग्रप्रज्वलनं प्रद्योतो भाविजन्मालोचनात्मकः प्रत्ययस्तेन प्रद्योतेन प्रकाशितनाडीद्वारा चक्षुरादिस्थानापादानेभ्यो निर्गच्छतीति ।

---

१ क. °रीरावयवेभ्यः ।

एतच्च सर्वेषां समानम् । तस्मान्नोपासकस्येतरेभ्यो विशेष इति प्राप्ते ब्रूमः । मूर्धन्ययैव नाड्योपासको निर्गच्छतीतराभ्य एव नाडीभ्य इतरे । कुतः । विद्यासामर्थ्यात् , सगुणब्रह्मोपासनासामर्थ्यादित्यर्थः । अविद्वद्वत् । यतः कुतश्चिन्निष्क्रमणेन ब्रह्मलोकाप्राप्तौ विद्यासामर्थ्यहानिः स्यात् । तच्छेषगत्यनुस्मृतियोगाच्च । तस्य विद्याशेषस्य या शेषभूता गतिस्तस्या अनुस्मृतिरनुचिन्तनं तद्योगाच्चेत्यर्थः । विद्याशेषे मूर्धन्यनाडीगत्यभ्यासो विहितः। 'तामभ्यस्यंस्तयैव प्रतिष्ठते' इति श्रुतेः । एतेन योगस्यापि विद्यासहकारित्वं सूचितम् । तस्माद्हृदयालयेन ब्रह्मणा सुप्रसादितेनानुगृहीतस्तद्भावमापन्नो विद्वाञ्छताधिकया मूर्धन्यनाड्या निष्क्रामति । इतरे तु स्थानान्तरेभ्यः । तथा च श्रूयते—

' शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ' ॥

[ छा० ८ । ६ । ६ ] इति । अन्या नाड्यो विष्वङ्नानागतयोऽन्येषामुत्क्रमणायोपयुज्यन्ते न त्वमृतत्वप्राप्तय इत्यर्थः । तस्मादस्त्युपासकस्य विशेषः ॥ १७ ॥ ( ९ )

## रश्म्यनुसारी ॥ १८ ॥

' अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म ' [ छा० ८ । १ । १ ] इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसबन्धमुक्त्वोक्तम्— ' अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ' [ छा० ८ । ६ । ५ ] इति । पुनश्चोक्तम्—'तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ ] इति । तस्माच्छताधिकया नाड्या निष्क्रामन्रश्म्यनुसारीति गम्यते । तत्किमविशेषेणैवाहनि रात्रौ म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सत्यविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञायते ॥ १८ ॥

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥१९॥(१०)

मूर्धन्यया नाड्या निर्गतस्य यो रश्मिसंबन्ध उक्तः स चाहन्येव मृतस्य संभवति न तु रात्रौ नाडीरश्मिसबन्धविच्छेदादिति चेन्न । नाडीरश्मिसबन्धस्य यावद्देहभावित्वात् । यावद्देहभावी हि सौरकिरणसंबन्धः । एतमेवार्थं श्रुतिर्दर्शयति—'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ' [ छा० ८ । ६ । २ ] इति । अत एव ग्रीष्मे क्षपासु देहे दाह उपलभ्यते । ऋत्वन्तरेषु प्रतिबद्धत्वादनुपलम्भः शैशिरेष्विव दुर्दिनेषु । तस्माद्दिवा रात्रौ च रश्मिसंबन्धाविच्छेदाद्रात्रावपि मृतो रश्मीन्यातीति सिद्धान्तः ॥ १९ ॥ ( १० )

**अतश्चायनेऽपि दक्षिणे ॥ २० ॥**

दक्षिणायने मृतस्योपासकस्य ब्रह्मलोकप्राप्तिरस्ति न वेति संशये, उत्तरायणस्य ब्रह्मलोकमार्गत्वश्रुतेर्भीष्मस्योत्तरायणप्रतीक्षादर्शनाच्च ब्रह्मलोकप्राप्तिर्नास्तीति प्राप्तावभिधीयते— अत एव विद्याफलस्य नियतत्वादेव दक्षिणायनेऽपि मृतस्य ब्रह्मलोकप्राप्तिर्भवत्येव । उत्तरायणशब्देन कालो न विवक्षितः किं तर्ह्यातिवाहिकदेवतेति वक्ष्यति । उत्तरायणप्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्योत्तरायणप्रतीक्षा त्वाचारप्रतिपालनार्था पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्था च ॥ २० ॥

ननु 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ' ॥ [ भ० गी० ८ । २३ ] इति

कालप्राधान्येनोपक्रम्याहरादिकालविशेषस्मरणात्कथ दक्षिणायने रात्रौ वा मृताना ब्रह्मलोकप्राप्तिरत आह —

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥ ( ११ )**

योगिनः प्रत्येवायं कालः स्मर्यते । स्मार्ते चते योगसांख्ये न श्रौते । अतो विषयभेदान्नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । यदा पुनः ' अग्निर्ज्योतिरहः शुक्लः ' [भ० गी० ८ । २४] इति स्मृतावग्न्यादिदेवता एवाऽऽतिवाहिक्यो गृह्यन्ते तदा न कश्चिद्विरोधः ॥ २१ ॥ ( ११ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितविरचितायां ब्रह्मसूत्रवृत्तौ
चतुर्थाध्यायस्य द्वितीयः पादः ।

---

अथ तृतीयः पादः ।

---

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥ ( १ )**

आमृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तम् । सृतिस्तु श्रुत्यन्तरेष्वनेकविधा श्रूयते । ब्रह्मलोकमार्गश्छान्दोग्यबृहदारण्यकयोः पञ्चाग्निविद्यायां चार्चिरादिकः पठ्यते—' तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः ' [छा० ५ । १० । १] इति । विद्यान्तरे—' यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति ' [ बृ० ५ । १० । १ ] इत्यपरा । कौषीतकिनः पर्यङ्कविद्यायामग्निलोकादिगमनमामनन्ति—' स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति ' [ कौषी० १ । ३ ] इत्यन्या । ' सूर्यद्वारेण ते विरजाः प्रयान्ति ' [ मुण्ड० १ । २ । ११ ] इतीतरा । एवमन्यत्रापि मार्गान्तराणि श्रूयन्ते । तत्र संशयः । किं सर्वेऽपि मार्गाः परस्परनिरपेक्षाः किं वैक एवानेकविशेषणविशिष्ट इति । भिन्नप्रकरणत्वात्तत्तद्विद्याफलब्रह्मलोकप्राप्तावन्योन्यनिरपेक्षा अनेके मार्गा इति प्राप्ते ब्रूमः—सर्वोऽप्युपासकोऽर्चिरादिनैकेनैव मार्गेण ब्रह्मलोकं रंहति । कुतः । तत्प्रथितेः । तस्यैव सर्वविद्यासु मार्गत्वेन प्रसिद्धेः । पञ्चाग्निविद्यायां वाक्यशेषे ' य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभि-

संभवन्ति' [ छा० ५ । १० । १ ] इति विद्यान्तरोपासकानामप्यर्चिरादिमार्गश्रवणाद्वाय्वादीनामपि गुणोपसंहारन्यायेनात्रैवोपसहारसभवात् । ननु यासु विद्यासु न काचिद्गतिः श्रूयते तास्वियमर्चिरादिगतिरस्तु । यासु चान्या गतिः श्रूयते तासु किमित्यर्चिराद्याश्रयणमिति । अत्रोच्यते—भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः । एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रापिणी । विद्याभेदेऽपि गन्तव्याभेदात् । 'तेऽर्चिरभिसंभवन्ति' [ बृ० ६ । २ । १५ ] इति स्पष्टमर्चिरादिगत्याम्नानाच्च । तस्मादर्चिरादिमार्ग एक एव ॥ १ ॥ ( १ )

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ ( २ )

सर्वेषामुपासकानामेक एवार्चिरादिमार्ग इति पूर्वाधिकरणे व्यवस्थापितम् । इदानीमातिवाहिकदेवताक्रमश्चिन्त्यते । तत्र कौषीतकिन इत्थं देवयानं पन्थानमामनन्ति—'स एतं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' [ कौ० १ । ३ ] इति । तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ । छान्दोग्यबृहदारण्यकयोरर्चिरादिराम्नातः—

> 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासास्तान् ।
> मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' [छा० ५ । १० । १–२] इति ।

अत्रार्चिरादिमार्गे वायुर्निवेश्यो न वेति संशये, न निवेश्य इति तावत्प्राप्तम् । अस्योपरि वायुरिति क्रमस्याश्रुतत्वात्कल्पकाभावाच्चेति प्राप्ते ब्रूमः—संवत्सरात्पराञ्चमादित्यादर्वाञ्चं गन्तारोऽभिसंभवन्ति । कुतः । अविशेषविशेषाभ्याम् । 'स वायुलोकम्' [ कौ० १ । ३ ] इत्यत्राविशेषेणोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषः श्रूयते—'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' [ बृ० ५ । १० । १ ] इति । इतो निर्गच्छन्नुपासकोऽग्निलोकमागच्छति, स वायुलोकमागच्छति तद्वायुमण्डलं छिद्रितं भवति, तेन रथचक्रच्छिद्रप्रमाणेन वायुच्छिद्रेण वायुमण्डलमुल्लङ्घ्याऽऽदित्यमण्डलं प्राप्नोतीत्यर्थः । एवं श्रुत्यन्तरेणाऽऽदित्यादर्वाग्वायुलोक इति प्रतीयते । तथाचार्चिरादौ संवत्सरानन्तरं वायुर्निवेश्यः । बृहदारण्यके—'मासेभ्यो देवलोकं देवलोकादादित्यम्' [ बृ० ६ । २ । १५ ] इति समामनन्ति । स च संवत्सरानन्तरं वायोरर्वाङ्निवेशयितव्यः । माससंवत्सरयोः संबन्धित्वेन प्रसिद्धयोरानन्तर्यस्यानिवारणार्थत्वात् । तदेवं संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकौ संनिवेशयितव्यौ ।

अत्राय सिद्धान्तः–ब्रह्मलोकं गच्छन्नुपासकः प्रथममर्चिर्गच्छति, ततोऽहस्तत आपूर्यमाणपक्षं ततो मासांस्ततः संवत्सरं ततो देवलोकं ततो वायुलोकं तत आदित्यलोकमिति ॥२॥ (२)

## तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥ ( ३ )

कौषीतकिनः पठन्ति—‘स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम्’ [ कौ० १ । ३ ] इति। तत्र वरुणादयस्त्रयो लोका अर्चिरादिमार्गे संनिवेश्या न वेति संशये संनिवेशयितुमशक्या इति तावत्प्राप्तम् । कुतः । वायोरिव व्यवस्थापकाभावादिति प्राप्ते ब्रूमः–विद्युल्लोकस्योपरि वरुणलोकः संबन्धवशाद्व्यवस्थाप्यते। विद्युत्पूर्वकवृष्टिगतानामपां वरुणोऽधिपतिरिति विद्युद्वरुणयोः संबन्धात् । यदा हि विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्यथाऽऽपः प्रपतन्ति । ‘विद्योतते स्तनयति वर्षिष्यति वा’ [ छा० ७ । ११ । १ ] इति च ब्राह्मणम् । अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धेश्च । इन्द्रप्रजापत्योस्तु स्थानान्तरासंभवेऽप्यागन्तुकानामन्ते निवेश इति न्यायेन वरुणलोकस्योपरि संनिवेशः । तदेवं वरुणादीनां संनिवेशादर्चिरादिमार्गो व्यवस्थितः ॥ ३ ॥ ( ३ )

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

ये पूर्वमर्चिरादय उक्तास्ते किं मार्गचिह्नानि किं वा भोगभूमयोऽथ वा नेतारो गन्तृणामिति संशयः । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम् । यथा हि लोके नगरं प्रतिष्ठासुर्वृद्धेनोपदिश्यते गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरमिति, एवमिहापि ‘अर्चिषोऽहरह्न आपूर्यमाणपक्षम्’ [ छा० ५ । १० । १ ] इत्यादिमार्गलक्षणोपदेशात् । अथ वा भोगभूमय इति प्राप्तम् । यथा हि—‘मनुष्यलोकः पितृलोको देवलोकः’ [ बृ० १ । ५ । १६ ] इति प्राणिनां भोगभूमित्वेन प्रसिद्ध एवम् ‘अग्निलोकमागच्छति’ [ कौ० १ । ३ ] इत्यादिलोकशब्दश्च प्राणिनां भोगभूमित्वेन भाष्यते । तस्मान्नाऽऽतिवाहिका अर्चिरादयः किं तु ब्रह्मलोकं प्रति गन्तृणां मध्येमार्गं विश्रामभूमय इति प्राप्ते ब्रूमः–आतिवाहिका एवैतेऽर्चिरादयो भवितुमर्हन्ति । कुतः । तल्लिङ्गात् । ‘तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति’ [ छा० ५ । १० । २ ] इत्यन्ते श्रूयमाणस्यामानवस्य विद्युत्पुरुषस्य नेतृत्वावगमात् । अनेनार्चिरादयोऽप्यातिवाहिकदेवता इत्यवगम्यते । वैद्युतस्य पुरुषस्यामानव इति विशेषणादितरेषां मानवपुरुषत्वं गम्यते ॥ ४ ॥

ननु लिङ्गमात्रं न गमकं गमकन्यायाभावादित्यत्रोत्तरं पठति–

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

उभयेषां गन्तृणामुपासकानां गम्यानामर्चिरादिमार्गाणां च व्यामोहान्मार्गज्ञानाभावा-

चेदुच्यते—अर्चिरादीनां मार्गरूपत्वादचेतनत्वात् । न हि लोकमार्गश्चेतनो दृश्यते । गन्तृणां च संपिण्डितकरणग्रामत्वाच्च युक्तमुभयेषां व्यामाहत्वम् । तस्मात्तदभिमानिदेवता अतियात्रायां परमेश्वरेण नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्छितादयः संपिण्डित-करणाः परप्रयुक्तवर्त्मानो भवन्ति । यत्तु गच्छेतरत्वममुं गिरिं ततो न्यग्रोधमित्यादिनिर्देशसा-म्यमुक्तं तदातिवाहिकदेवतास्वपि समानम् । गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततो वीरसेनमित्यादिनिर्देशदर्शनात् । लोकशब्दस्तूपासकानां भोगाभावेऽप्यातिवाहिकदेवानां भोगमपेक्ष्योपपद्यते । उपसंहारे तु 'स एतान्ब्रह्म गमयति' इतिसंबन्धविशेषोऽतिवाह्यातिवाहकल-क्षण उक्तस्तेन स एवोपक्रमेऽपीति निर्धार्यते । अग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते । वायुस्वामिकं प्राप्तो वायुनाऽतिवाह्यत इत्येवमग्रे योजनीयम् ॥ ५ ॥

ननु विद्युल्लोकानन्तरममानवपुरुषस्यैकस्यैवाऽऽतिवाहिकश्रुतेर्वरुणादीनामातिवाहिकत्वं न स्यादित्यत उत्तरं पठति—

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ ( ४ )

ततो वरुणादनन्तरं वैद्युतेनैवामानवेन पुरुषेण ब्रह्मलोकं नीयन्ते । कुतः । तच्छ्रुतेः । 'स एतान्ब्रह्म गमयति' [ छा० ४ । १५ । ५ ] इति तस्यैव गमयितृत्वश्रुतेः । वरुणादीनामपि तदनुकूलाचरणेनाऽऽतिवाहिकत्वमविरुद्धम् ॥ ६ ॥ ( ४ )

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

'स एतान्ब्रह्म गमयति' [ छा० ४ । १५ । ५ ] इत्यत्र विचार्यते किं कार्यं चतुर्मुखलक्षणं ब्रह्म गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति संशये सिद्धान्तमेवाऽऽह—कार्य-मिति । तत्र कार्यमेव सगुणं ब्रह्म गमयत्येतानमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः । अस्य गत्युपपत्तेः । अस्य कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात् । परब्रह्मणि तु प्रत्यगात्माभिन्ने न गन्तव्यत्वगती संभवतः ॥ ७ ॥

## विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान्गमयति' इति कार्यब्रह्मैव । कुतः । 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' [ बृ० ६ । २१ । ५ ] इति च श्रुत्यन्तरे विशेषितत्वात् । न हि बहुवचनेन विशेषणं परस्मिन्ब्रह्मणि युज्यते । कार्यब्रह्मणि त्ववस्थाभेदोपपत्तेर्लोके बहुवचनश्रुतिरपि विकारगोचरायामेव संनिवेशविशिष्टाया भोगभूमावाञ्जसी । तस्मात्कार्यब्रह्म-विषयमेवेदं नयनम् ॥ ८ ॥

ननु कार्यब्रह्मणि ब्रह्मशब्दो मुख्य इत्यत आह—

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुराशङ्कानिवृत्त्यर्थः । परब्रह्मसामीप्यादपरस्य ब्रह्मणो ब्रह्मशब्दव्यपदेशः । परमेव ब्रह्म विशुद्धोपाधिसबन्धात्सत्यकामत्वादिधर्मविशिष्टमुपास्यत्वेनोपदिश्यते ॥ ९ ॥

ननु कार्यब्रह्मप्राप्तावनावृत्तिश्रवण न घटते । न हि परस्माद्ब्रह्मणोऽन्यत्र कचिन्नित्यता संभवति । दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिं श्रुतिः—' एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते ' [ छा० ४ । १५ । ५ ] इति । ' तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ । का० ६ । ११ ] इति च । एवं मुक्त्यनावृत्त्योः श्रवणं कार्यब्रह्मणि न सभवतीत्यत उत्तरं पठति—

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

कार्यब्रह्मप्रलये सति तत्रैवोत्पन्नब्रह्मज्ञानाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः सगुणात्पर विशुद्ध ब्रह्म प्रतिपद्यन्त इत्येव क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानादभ्युपेयते । न ह्यञ्जसैव गतिपूर्विका परब्रह्मप्राप्तिः सभवति ॥ १० ॥

**स्मृतेश्च ॥ ११ ॥**

स्मृतिरप्येतमर्थमनुजानाति—

' ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ' ॥

इति । तस्मात्कार्यब्रह्मविषयैवार्चिरादिगतिरिति सिद्धान्तः ॥ ११ ॥

कं पुनः पूर्वपक्षमाशङ्क्यायं सिद्धान्तः प्रतिष्ठापितः ' कार्यं बादरिः ' [ ब्र० सू० ४ । ३ । ७ ] इत्यादिना । स इदानीमुच्यते—

**परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

' स एतान्ब्रह्म गमयति ' [ छा० ५ । १० । २ ] इत्यत्र परमेव ब्रह्म प्रापयतीति जैमिनिराचार्यो मन्यते । कुतः । मुख्यत्वात् । परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम् । गौणमपरम् । मुख्यगौणयोर्मध्ये मुख्ये संप्रत्ययस्य न्याय्यत्वात् ॥ १२ ॥

**दर्शनाच्च ॥ १३ ॥**

' तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ ] इतिश्रुतिर्गतिपूर्वकममृतत्वं दर्शयति । तदिदममृतत्वं परस्मिन्नेव ब्रह्मण्युपपद्यते न कार्यब्रह्मणि तस्य विनाशित्वात् । ' अन्यत्र धर्मादन्यत्राधर्मात् ' [ क० २ । १४ ] इति कठवल्लीषु परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥ १३ ॥

ननु ' प्रजापतेः सभां वेश्म प्रपद्ये ' [ छा० ८ । १४ । १ ] इति श्रवणात्कार्यब्रह्मविषयो गतिनिश्चय इत्यत उत्तरं पठति—

**न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥ ( ५ )**

अपि च ' प्रजापतेः सभां वेश्म प्रपद्ये ' इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः ' नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म ' [ छा० ८ । १४ । १ ] इति कार्यवि. लक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात् । ' यशोऽहं भवामि ब्राह्मणानाम् ' [ छा० ८ । १४ । १ ] इति च सर्वात्मत्वेनानुक्रमात् । न ' तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ' [ श्वे० ४ । १९ ] इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः । तस्मात्परब्रह्मविषया गतिः श्रूयत इति पक्षान्तरम् । शिष्यबुद्धिपरीक्षार्थं सूत्रकारस्य पूर्वोत्तरव्यत्यासोऽयम् । अर्थक्रमेण तु पौर्वापर्यं ज्ञेयम् । तदेतद्भाष्यकारैर्महता प्रबन्धेन स्फुटीकृतम् । केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्त्युत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति । तदनुपपन्नम् । गन्तव्यत्वानुपपत्तेर्ब्रह्मणः । यत्सर्वगतं सर्वान्तरं सर्वात्मकं च परं ब्रह्म ' आकाशवत्सर्वगतश्च नित्यः ' ' यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः ' [ बृ० ३ । ४ । १ ] ' आत्मैवेदं सर्वम् ' [ छा० ७ । २५ । २ ] इत्यादिश्रुतिनिर्धारितविशेषं तस्य गन्तव्यता न कदाचिदुपपद्यते । तस्मात् ' कार्यं बादरिः ' [ ब्र० सू० ४ । ३ । ७ ] इत्येष एव स्थितः पक्षः । ' परं जैमिनिः ' [ ब्र० सू० ४ । ३ । १२ ] इति तु पक्षान्तरं प्रतिभामात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यमित्युक्तम् ॥ १४ ॥ ( ५ )

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषा-त्तत्क्रतुश्च ॥ १५ ॥

निरूपितमेतत्कार्यब्रह्मविषया गतिर्न शुद्धब्रह्मविषयेति । इदानीं विशेषो निरूप्यते । ' स एनान्ब्रह्म गमयति ' [ छा० ४ । १७ । ५ ] इत्यत्र किं सर्वानुपासकान्गमयति किं वा प्रतीकोपासकव्यतिरिक्तानिति संशयेऽविशेषात्सर्वानपि गमयतीति प्राप्तावुच्यते—प्रतीकालम्बनान्वर्जयित्वा पञ्चाग्निविद्यादहरविद्यापर्यङ्कविद्यावैश्वानरविद्याद्युपासकानमानवः पुरुषो ब्रह्मलोकं नयतीति बादरायण आचार्यो मन्यते । एवमुभयथा द्वैविध्ये सति दोषाभावात् । कुतो द्वैविध्यम् । तत्क्रतुश्च । चो हेतौ । यतः 'त यथा यथोपासते तदेव भवति ' इति श्रुतौ सगुणब्रह्मभावनारूपः क्रतुः सकल्पः सगुणब्रह्मप्राप्तिहेतुरित्यवगम्यते । न हि प्रतीकोपासकाना ब्रह्मक्रतुरस्ति । अतो द्वैविध्योपपत्तिः । ननु पञ्चाग्निविद्यायाः प्रतीकत्वेऽपि ' स एतान्ब्रह्म गमयति ' [ छा० ५ । १० । २ ] इति तत्रैवोक्तत्वाद्यत्रैवमाहत्यवादस्तत्र भवतु ब्रह्मलोकप्राप्तिर्यत्राऽऽहत्यवादो नास्ति तत्र कथमिति चेदुच्यते—औत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मलोकप्राप्तिर्ब्रह्मक्रतूनामेव न प्रतीकोपासकानामिति गम्यते ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥ ( ६ )

नामादिप्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति ' यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति ' [ छा० ७ । १ । ५ ] इति नामब्रह्मोपासकस्य शब्दशास्त्रादिलक्षणे नामविषये स्वातन्त्र्यं भवतीत्यर्थः । ' वाग्वाव नाम्नो भूयसी ' [ छा० ७ । २ । १ ] ' यावद्वाचो गतं तत्रास्य यथाकामचारो भवति ' [ छा० ७ । २ । २ ] ' मनो वाव वाचो भूयः ' [ छा० ७ । ३ । १ ] इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वात्तदुपासकानामुपपद्यते ॥ १६ ॥ ( ६ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितविरचितायां ब्रह्मसूत्रवृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः ।

---

अथ चतुर्थः पादः ।

---

## संपद्याऽऽविर्भावः स्वेन शब्दात् ॥ १ ॥

आद्यपादे निर्गुणविद्याफलैकदेशो बन्धनिवृत्तिर्निरूपिता । द्वितीये सगुणनिर्गुणफलप्राप्तिशेषत्वेनोत्क्रान्त्यनुत्क्रान्ती निरूपिते । तृतीये सगुणविद्योपयोगिनो गतिगन्तव्यगन्तृविशेषा निरूपिताः । इह चतुर्थपादे निर्गुणविद्याफलैकदेशान्तरं ब्रह्मभावाविर्भावः सगुणविद्याफलं चेश्वरतुल्यभोगभाक्त्वमभिधीयते । ' एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' [ छा० ८ । १२ । ३ ] इति श्रूयते । अस्यार्थः—सम्यक्प्रसीदत्युपाधिशान्ताविति संप्रसादो जीवः । स च शरीरत्रयाभिमानं परित्यज्य परं ब्रह्म प्राप्य मुक्तिरूपेणावतिष्ठत इति । तत्रैतन्मुक्तिरूपं न जीवस्य पूर्वसिद्धं किं तर्हि स्वर्गवदागन्तुकम् । कुतः । ' अभिनिष्पद्यते ' इति उत्पाद्यत्वश्रवणात् । पूर्वसिद्धत्वे संसारदशायामपि सद्भावेन फलत्वं न स्यात् । तस्मात्स्वर्गवदिदं नूतनं मुक्तिरूपमिति प्राप्ते ब्रूमः—स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्देन विशेषितत्वात् पूर्वमपि विद्यत एवेदं मुक्तिरूपम् । न चात्र स्वशब्दः स्वकीयत्वमभिधत्ते विशेषणवैयर्थ्यप्रसङ्गात् । यद्यद्रूपं मुक्तावुपादत्ते तत्तत्स्वकीयमेवेति कस्य व्यावृत्तये विशेष्येत । आत्मवाचित्वे तु स्वशब्दस्य स्वकीयव्यावृत्तिः प्रयोजनम् । न चाभिनिष्पत्तिरुत्पत्तिः । पूर्वसिद्धस्योत्पत्तेरसंभवात् । किं तर्हि तत्त्वज्ञानेन ब्रह्मताविर्भावो निष्पत्तिर्न तु कस्यचिदागन्तुकधर्मस्योत्पत्तिः । कुतः । स्वेन शब्दात् । अविद्यया यत्स्वरूपं तिरोहितं तदिदानीमविद्यानिवृत्तावाविर्भूतं मेवापायेंऽशुमत इवेत्यर्थः । नन्वेवं सत्युपसंपद्याभिनिष्पद्यत इत्यनयोः पौनरुक्त्यं शङ्कनीयम् । संपद्येतिशब्देन तत्पदार्थशोधनस्य विवक्षितत्वात् । अभिनिष्पत्तिस्तु वाक्यार्थावबोधः । तथा चाद्वितीयाखण्डसच्चिदानन्दात्मस्वरूपेणाऽऽविर्भवतीति वाक्यार्थः । अत्र मध्वभाष्ये सौपर्ण-

श्रुतिबृहच्छ्रुतिमाध्यंदिनायनादिश्रुतीस्तादर्शीरेव व्रतकादिस्मृतीश्चानुसृत्य दुर्व्याख्यानं कृतं तत्सर्वथा नाऽऽदर्तव्यम् । कल्पितप्रमाणैः किं किं कर्तुमशक्यम् । तत्खण्डनमस्मत्कृतशतसूच्यां द्रष्टव्यम् । तस्माच्छंकरभाष्यमेवानवद्यम् ॥ १ ॥

ननु पूर्वसिद्धा चेन्मुक्तिस्तर्हि संसारावस्थातः को विशेष इत्यत आह—

**मुक्तः प्रतिज्ञानात् ॥ २ ॥**

संसारदशायामविद्यया बद्धो ज्ञानेनाविद्यानिवृत्तौ मुक्त इत्ययं विशेषः । कथं पुनरवगम्यते मुक्तोऽयमिदानीमिति । प्रतिज्ञानादित्याह । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' [ छा० ८ । ९ । ३ ] इत्यवस्थात्रयदोषहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [ छा० ८ । १२ । १ ] इति चोपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' [ छा० ८ । १२ । ३ ] इत्युपसंहारान्मुक्तत्वनिश्चय इत्यर्थः । 'फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजनापेक्षा' इति भाष्यम् । भाष्यस्यायमाशयः—नन्वज्ञाते कामनानुदयाज्ज्ञात आत्मनि कामना वाच्या । तथा च कथमहेयानुपादेये नित्यसिद्ध आत्मनि सा भवतु सिद्ध इच्छाविरहात्संसारावस्थायामपि मोक्षापत्तेश्च । न च संसारावस्थायामविद्यावृतत्वाद्विद्यमानोऽप्यद्वयानन्दो न भासते विद्यया त्वविद्याया निवृत्ताया स्वप्रकाशत्वादानन्दरूपेण स्वयमेव प्रथत इत्यविद्यानिवृत्तिविशिष्टत्वेन काम्यत इति वाच्यमविद्यानिवृत्तेर्दुर्निरूपत्वात् । सा ह्यात्मभिन्ना तत्स्वरूपा वा । आद्ये द्वैतापत्तिरद्वैतश्रुतिव्याकोपश्च । द्वितीये पूर्वोक्तदोष इति । अत्रोच्यते—न सिद्धत्वमात्रेणाऽऽत्मनीच्छाविरहः । सिद्धत्वं हि सत्त्वं वा ज्ञायमानत्वं वाऽप्रतिबद्धसाक्षात्कारत्वं वा । नाऽऽद्यो विस्मृतग्रैवेयकप्राप्तौ व्यभिचारात् । अत एव न द्वितीयोऽपि तस्येच्छाप्रयोजकत्वात् । तृतीयस्तु भवतीच्छापरिपन्थी । स तु प्रकृते नास्त्यसंभावनादिप्रतिबन्धात् । अत एव पित्तदूषितरसनस्य शुद्धसितामश्नतो मधुरत्वेन तां जानतोऽपि न माधुर्यनिमित्ततृप्तिविशेषोत्पत्तिः पित्तदोषेण माधुर्यसाक्षात्काराभावात् । तथा च द्विविधमिष्टम्—वस्तुतोऽप्राप्तं ग्रामादि । प्राप्तमपि भ्रमव्यवहितं कण्ठचामीकरादि । एवं परिहार्यमपि द्विविधम्—वस्तुतोऽपरिहृतं कूपादि । सर्वदा परिहृतं रज्जुभुजगादि भ्रममात्रादपरिहृतमिव । तत्राऽऽद्ययोः क्रियाव्यवधानौ प्राप्तिपरिहारौ । द्वितीययोः साक्षात्कारमात्रसाध्यौ । अत्रैव च परमपुमर्थत्वं मन्यन्ते क्रियाव्यवधानाभावात् । तथा च परमानन्दप्राप्त्यविद्यानिवृत्त्योरपि भ्रमव्यवहितत्वादसिद्धत्वप्रत्ययेन कामनाविषयत्वमुपपद्यत एव । यत्त्वविद्यानिवृत्तिरात्मभिन्ना तत्स्वरूपा वेत्याशङ्कितं तत्रोच्यते—अद्वैतश्रुतेः सदद्वैतमात्रविषयत्वादविद्यानिवृत्तेरात्मभिन्नत्वेऽपि नाद्वैतहानिः । यद्वा—

'नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ।
निवृत्तिस्तद्वदेवास्य नावगत्याऽऽत्मनोऽपरा' ॥

इति कल्पितपदार्थभावाभावयोरधिष्ठानस्वरूपमात्रत्वात् । यथाऽज्ञातं शुक्तिद्रव्यमेव रजतभावात्मकं तदेव ज्ञातं रजताभावात्मकं तदसाधारणस्वरूपस्यैव रजताभावत्वात् । एवमत्राप्यात्मा सर्वद्वैतभावात्मकः । ज्ञातश्च तदभावात्मकः । तदसाधारणस्वरूपस्यैव द्वैताभावरूपत्वात् । भूतलादिस्वरूपस्यैवाभावव्यवहारहेतुत्वं प्राभाकरैरङ्गीकृतम् । तार्किकैरपि घटाभावो घटो न भवतीत्यादावभावप्रतियोगिकाभावान्तरानभ्युपगमात्तत्स्वरूपस्यैवाभावबुद्धिहेतुत्वमङ्गीकृतं तद्वदस्माकं किं न स्यात् । एतदेवाभिप्रेत्योक्तं—

> ' स्थूलापह्नुतिरत्र स्याद्वस्तु यत्पारमार्थिकम् ।
> नाभावनिष्ठोऽन्यत्रापि निषेधः किमुताक्षरे ' ॥

इति । ' अस्थूलमनण्वह्रस्वम् ' [ बृ० ३ । ८ । ८ ] इत्यादिवाक्यानां स्थूलादिविलक्षणात्मस्वरूपमात्रबोधकत्वमित्यर्थः । तस्मादखण्डानन्दाद्वितीयचैतन्यसन्मात्र आत्मा ज्ञातः सन्नविद्यानिवृत्तिरित्युच्यते । अत्राविद्यानिवृत्तिरेव बन्धनिवृत्तिरित्याचार्याणामाशय इति दिक् । ' यदप्यभिनिष्पद्यत इत्युत्पत्तिपर्यायत्व तदपि पूर्वावस्थापेक्ष यथा रोगनिवृत्तावरोगो निष्पद्यत इति तद्वत् । तस्माददोषः ' इति भाष्ये स्थितम् ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥ ( १ )

ननु ज्योतिःशब्दस्य भौतिके रूढत्वात्कथ तत्संपत्त्या मुक्तिरित्यत आह—आत्मेति । आत्मैवात्र ज्योतिःशब्देनाऽऽवेद्यते । कुतः । ' य आत्माऽपहतपाप्मा विजरो विमृत्युः ' [ छा० ८ । ७ । १ ] इत्यात्मप्रकरणात् । ज्योतिःशब्द आत्मन्यपि दृश्यते ' तद्देवा ज्योतिषां ज्योतिः ' [ बृ० ४ । ४ । १६ ] इति । प्रपञ्चितं चैतत् ' ज्योतिर्दर्शनात् ' [ ब्र० सू० १ । ३ । ४० ] इत्यस्मिन्नधिकरणे । तस्मान्मुक्तिर्नाऽऽगन्तुकी ॥ ३ ॥ (१)

## अविभागेन दृष्टत्वात् ॥ ४ ॥

परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः स किंपरस्मादात्मनः पृथगवावतिष्ठत आहोस्विदविभागेनेति संशये परस्माद्विभागेनावतिष्ठत इति तावत्प्राप्तम् । कुतः । कर्तृकर्मभेदव्यपदेशात् । ' एष संप्रसादः परं ज्योतिरुपसंपद्य ' [ छा० ८ । ३ । ४ ] इत्यत्र संप्रसादशब्दवाच्यो जीव उपसपत्तौ कर्तृत्वेन व्यपदिश्यते ज्योतिःशब्दवाच्य च ब्रह्म कर्मत्वेन । तस्मान्मुक्तस्य जीवस्य स्वरूपं ब्रह्मणो भिन्नमिति प्राप्ते ब्रूमः—अविभक्त एव परेण ब्रह्मणा मुक्तोऽवतिष्ठते । कुतः । दृष्टत्वात् । ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] ' अहं ब्रह्मास्मि ' [ बृ० १ । ४ । १० ] ' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ' [ छा० ७ । २४ । १ ] 'यो वै भूमा

तत्सुखम् ' [ छा० ७ । २३ । १ ] ' न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ' [ बृ० ४ । ३ । २३ ] ' यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ' [ बृ० ४ । ५ । १५ ] ' उदरमन्तर कुरुते । अथ तस्य भय भवति ' [ तैत्ति० २ । ७ ] ' तत्र को मोहः कः शोक एकत्वमनुपश्यतः ' [ ई० ७ ]

' विभेदजनकेऽज्ञाने नाशमात्यन्तिक गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ '

इत्येवमादिषु श्रुतिषु दृष्टत्वात् । ज्योतिरुपसंपद्येति वाक्यं तत्पदार्थशुद्धिविषयमुक्तम् । अतस्तत्त्वंपदार्थयोः शुद्धौ महावाक्यतः क्रियमाणायां तदानी जीवपरयोरस्तु नाम कल्पित-भेदः । तदा कर्तृकर्मविरोधोऽपि न । तत उपरि स्वेन रूपेणाभिनिष्पद्यत इति वाक्यं वाक्यार्थदशापन्नं मुक्तस्वरूपं प्रतिपादयति । न च तस्य ब्रह्मणा सह भेदोऽस्ति स उत्तमः पुरुष इति वाक्ये तच्छब्देनाभिनिष्पन्नरूपं मुक्तस्वरूपं परामृश्य तस्योत्तमपुरुषत्वान्यब्रह्मस्व-रूपत्वाभिधानात् । तथा च भाष्यम्—'यथोदकं शुद्धे शुद्धमासिक्त तादृगेव भवत्येवं मुनेर्विजानत आत्मा भवति गौतम ' [ कठ० ४ । १५ ] इत्येवमादीनि मुक्तस्वरूप-निरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति नदीसमुद्रादिनिदर्शनानि च । भेदनि-र्देशस्त्वभेदेऽप्युपचर्यते ' स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि ' [ छा० ७ । २४ । १ ] इति श्रुतेः ॥ ४ ॥ ( २ )

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

पूर्वाधिकरणे स्वेन चिन्मात्ररूपेणाभिनिष्पद्यते नाऽऽगन्तुकेनापररूपेणेति व्यवस्थापि-तमधुना तु तद्विशेषबुभुत्सायामभिधीयते—मुक्तस्वरूपभूतं ब्रह्म श्रुतिषु द्विधा व्युत्पा-द्यते क्वचित्सविशेषं क्वचिन्निर्विशेषम् । तथा हि —'य आत्माऽपहतपाप्मा विजरो विमृ-त्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः ' [ छा० ८ । ७ । १ ] इति सविशेषत्वश्रुतिः । ' तद्यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैव वा अरेऽय-मात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ' [ बृ० ४ । ५ । १३ ] इति निर्विशे-षत्वश्रुतिः । तत्र यदपहतपाप्मत्वादि सविशेषरूप तेन रूपेणाभिनिष्पद्यत इति जैमिनिरा-चार्यो मन्यते । कुतः । उपन्यासादिभ्यस्तथात्वावगमात् । ' य आत्माऽपहतपाप्मा ' [ छा० ८ । ७ । १ ] इत्यादिरुपन्यासः । आदिशब्देन ' स तत्र पर्येति जक्षत क्रीडन्रममाणः ' [ छा० ८ । १२ । ३ ] इत्यैश्वर्यम । ' तस्य सर्वेषु लोकेषु काम-चारो भवति ' [ छा० ७ । २५ । २ ] इति च । सर्वज्ञः सर्वेश्वर इत्यादिव्यपदेशाश्चै-वमुपपन्ना भविष्यन्ति । एवं मुक्तप्राप्यस्येश्वरस्य सगुणत्वान्मुक्तस्यापि सगुणत्व सगुणब्रह्म-सायुज्यमाप्नोतीति ॥ ५ ॥

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

चितितन्मात्रेण चैतन्यमात्रस्वरूपेण मुक्तोऽवतिष्ठते । कुतः । तदात्मकत्वान्मुक्तस्य चैतन्यमात्रस्वरूपत्वात् । 'ब्रह्म वेद ब्रह्मैव भवति' [ मुण्ड० ३ । २ । ९ ] 'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] इत्यादिश्रुत्या ब्रह्मज्ञानाद्ब्रह्मभावः श्रूयमाणस्तद्व्यवधायकाज्ञाननिवृत्तिमन्तरेण नोपपद्यत इतिश्रुतार्थापत्त्या च तन्मात्रस्वरूपेणाभिनिष्पन्नत्वादित्यर्थः । तथा च श्रुतिः—'तद्यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैव वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' [ बृ० ४ । ५ । १३ ] इत्येवजातीयकानुऽगृहीता भविष्यति । सत्यकामत्वादयस्तूपाधिसबन्धाधीनत्वान्न चैतन्यस्वरूपभूताः । अत एव जक्षणादिसकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थम् 'आत्मक्रीड आत्मरतिः' [ मु० ३ । १ । ४ ] इत्यादिवत् । न ह्यद्वितीय आत्मनि द्वितीयसाध्यजक्षणक्रीडामिथुनादीनि वर्णयितु शक्यन्ते 'द्वितीयाद्वै भय भवति' [ बृ० १ । ४ । २ ] इत्यादिश्रुतिविरोधात् । तस्मान्निरस्ताशेषप्रपञ्चेनाद्वितीयबोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते । इदमेव मतं सर्वोपनिषत्समतम् ॥ ६ ॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ ( ३ )**

एवमपि पारमार्थिकचैतन्यस्वरूपमात्राभ्युपगमेऽपि व्यवहारापेक्षयोपन्यासादिभ्योऽवगतस्य पूर्वस्य पूर्वोक्तस्य सत्यकामत्वादिलक्षणस्य ब्राह्मैश्वर्यस्य भावाद्बद्धपुरुषदृष्ट्या मुक्तेऽपि सभवात्सगुणनिर्गुणश्रुत्योरविरोध बादरायण आचार्यो मन्यते । अय भावः—ते एते सविशेषत्वानिर्विशेषत्वे मुक्तिदशाया न युगपत्संभवत परस्परविरुद्धत्वात् । अतः कालभेदेन व्यवस्थापनीये इति प्राप्तेऽभिधीयते—प्रतिपत्तृभेदाद्युगपदेव सभवतः । तथा हि मुक्तप्रतिपत्त्या ब्रह्म निर्विशेषमेव । न हि मुक्ताः पुरुषाः कदाचिदपि सर्वज्ञत्वसत्यसंकल्पत्वादिगुणविशिष्ट ब्रह्माहमिति प्रतियन्ति तत्प्रतिपत्तिहेतुभूताया अविद्याया विनष्टत्वात् । बद्धपुरुषास्त्वविद्यायुक्ताः सन्तो निर्विशेषमेव सर्वज्ञत्वादिगुणविशिष्ट प्रतिपद्यन्ते ते स्वदृष्ट्या निर्विशेषब्रह्मभूता अपि सर्वज्ञत्वादिगुणविशिष्टा इति प्रतियन्ति । अतः प्रतिपत्तृभेदाद्व्यवस्थासिद्धौ किमनेन कालभेदकल्पनेनेति । औडुलोमिः सत्यकामत्वादीनां गुणानां तुच्छत्वमङ्गीकरोति बादरायणस्तु व्यावहारिकसत्यत्वमिति विवेकः ॥ ७ ॥ ( ३ )

**संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥**

पूर्वाधिकरणत्रयेण विदेहकैवल्यं विचार्येदानीमा पादसमाप्तेः सगुणविद्याफलं विचार्यते । तत्रार्चिरादिमार्गेण ब्रह्मलोकं प्राप्तस्योपासकस्य भोग्यवस्तूनां सृष्टौ बाह्यहेतुसहितः संकल्पः कारणमुत तत्संकल्पमात्रमिति संशये लोकदृष्टप्रयत्नान्तरसहितस्य संकल्पस्य हेतुत्वं न तु मानससंकल्पमात्रम् । तथात्वे सत्याशामोदकसमत्वेन भोगाभावप्रसङ्गा-

दिति प्राप्ते ब्रूमः—तुर्नार्थे । संकल्पादेव भोग्यवस्तूनामुत्पत्तिर्न तु संकल्पातिरिक्तसाधनान्तरापेक्षा । कुतः । तच्छ्रुतेः । ' स यदि पितृकामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ' [ छा० ८ । २ । १ ] इत्यादिना संकल्पमात्रादेव भोग्यवस्तुसृष्टिश्रुतेः । एवकारेण साधनान्तरनिरासात् । न च संकल्पकार्याणामाशामोदकसमानत्वं शङ्कनीयं प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य । वाचनिकेऽर्थे सामान्यतो दृष्टासंभवात् । संकल्पादेव चैषां वस्तूनां यावत्प्रयोजनं स्थैर्योपपत्तिः । तस्मात्संकल्प एव मुक्तभोग्यसृष्टौ हेतुः ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥ ( ४ )

अत एवावन्ध्यसंकल्पत्वादेव विद्वान् , अनन्याधिपतिः—न विद्यतेऽन्योऽधिपतिर्नियन्ताऽस्य स तथोक्तः स्वतन्त्र इत्यर्थः । न हि प्राकृतोऽपि संकल्पयन्नन्यस्वामिकमात्मानं संकल्पयति । श्रुतिश्चैतद्विदुषः स्वातन्त्र्यं दर्शयति—' अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ' [ छा० ८ । १ । ६ ] इति ॥ ९ ॥ ( ४ )

## अभावं बादरिराह ह्येवम् ॥ १० ॥

मुक्तस्य मनस्तावत्संकल्पसाधनमित्युक्तं कामसंकल्पादिवृत्तीः प्रति मनस उपादानत्वात् । ' कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ' [ बृ० १ । ५ । ३ । इति श्रुतिरुपादानोपादेयाभेदविवक्षया मन एवेत्याह । एवं संकल्पसाधने मनसि स्थितेऽन्यानीन्द्रियाणि शरीरं च सन्ति न वेति संशये तेषां मनोव्यतिरिक्तानामिन्द्रियाणामभावं बादरिराचार्यो हि यस्मादेवमाह । श्रुतिः—' मनसैतान्कामान्पश्यन्रमते ' [ छा० ८ । १२ । ५ ] ' य एते ब्रह्मलोके ' [ छा० ८ । १३ । १ ] इति । यदि मनसा शरीरेणेन्द्रियैश्च विहरेत मनसेति विशेषणं व्यर्थं स्यात् । तस्मान्मुक्तानां शरीरेन्द्रियाभावः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्त्वाचार्यो मनोवच्छरीरेन्द्रियभावं मुक्तं प्रति मन्यते । कुतः । ' स एकधा भवति त्रिधा भवति ' [ छा० ७ । २६ । २ ] इत्यादिनाऽनेकधाभावविकल्पाम्नानात् । सूत्रस्थविकल्पस्यानेकधाभावोऽर्थः । तस्यानेकधाभावस्य विकल्पश्च । न ह्यनेकविधता विना शरीरभेदेनाऽऽञ्जसी स्यात् । यद्यपि स एकधा भवतीद वाक्यं निर्गुणभूमविद्यायां पठ्यते तथाऽपि विद्यमानमेवेद सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति ॥ ११ ॥

उच्यते—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

अत उभयश्रुतिदर्शनादुभयविधत्वं साध्विति बादरायण आचार्यो मन्यते । यदा सशरीरतां संकल्पयति तदा सशरीरो भवति । यदा त्वशरीरतां संकल्पयति तदा तथा भवति सत्यसंकल्पत्वात्संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा द्वादशाहश्चोदनाद्वया-दहीनः सत्र च भवति तद्वत् ॥ १२ ॥

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

यदा शरीरं नेच्छति तदा तन्वभावे सति यथा संध्ये स्थाने स्वप्नावस्थायां शरीरेन्द्रि-यविषयेष्वविद्यमानेष्वपि मनसैव सर्वं निर्माय स्वाप्निकान्भोगान्भुङ्क्ते तद्वन्मुक्तः सर्वं पित्रादिकं मनसैव निर्माय भोगान्भुङ्क्ते । तन्वभावे संध्यवदुपपत्तेरिति सूत्रस्येदं व्याख्यानम् ॥ १३ ॥

**भावे जाग्रद्वत् ॥ १४ ॥ ( ५ )**

यदा देहमिच्छति तदा संकल्पेनैव देहादि सृष्ट्वा तत्रावस्थितो जाग्रद्दशायामिव भोगा-न्भुङ्क्ते । तस्मादेकस्यापि मुक्तस्य कालभेदेन देहादिभावाभावौ व्यवस्थितौ । तस्मान्मुक्त-पुरुषस्यैच्छिकौ देहभावाभावौ ॥ १४ ॥ ( ५ )

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

भावं जैमिनिर्विकल्पामननात्' [ब्र० सू० ४।४।११] इत्यत्र सशरीरत्वं मुक्तस्योक्तम् । तत्र ' स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा ' [ छा० ७ । २६ । २ ] इति युगपदनेकशरीरग्रह ऐच्छिक आम्नायते । तत्रानेकदेहग्रहणपक्षे देहान्तराणि दारुयन्त्रव-न्निरात्मकानि किं वाऽस्मदादिशरीरवत्सात्मकानीति संशय एकमेव शरीरं सात्मकं शरीरा-न्तराणि निरात्मकानि । कुतः । आत्ममनसोर्बहुभावस्याश्रुतत्वात्कल्पनाभावाच्चेति प्राप्ते ब्रूमः— सर्वाण्यपि शरीराणि समनस्कानि समनस्कत्वात्सात्मकानि । कुतः । कल्पनासंभवाच्छ्रु-तत्वाच्च । अस्ति हि कल्पकं युगपदनेकदेहभोगानुपपत्तिरूपम् । मुक्तेन स्वभोगाय हि संकल्पत्वाद्बहवो देहा विनिर्मिताः । न चैकेनैवाऽऽत्मना मनसा च युगपदनेकदेहाना भोगो दृष्टचरः । तस्मादात्ममनसोर्बहुत्वं कल्प्यम् । यद्यपि नाऽऽत्मानन्त्यं तथाऽपि प्रदीप-वदावेशः संभवति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यत एवमेकोऽपि सन्विद्वानै-श्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । एकेन मनसा संकल्प्य बहुषु मनःसू-त्पादितेषु तैर्मनोभिरवच्छिन्ना आत्मानो बहवः स्युः । यद्यप्यात्मैकस्तथाऽपि मनोभेदाद्भेदः । अतः सर्वाणि शरीराणि सात्मकानि समनस्कानि भोगसाधनानि । तथा हि दर्शयति—

' स एकधा भवति त्रिधा भवति ' [ छा० ७ । २६ । २ ] इत्यादिना । तस्मात्सात्मकाः सर्वदेहाः ॥ १५ ॥

ननु मुक्तस्यानेकधाभावाङ्गीकारे ' तत्केन कं पश्येत् ' [ बृ० ४ । ५ । १५ ] इत्यादिश्रुतिविरोध इत्यत आह—

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ ( ६ )**

स्वाप्ययः सुषुप्तिः ' सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते ' [ छा० ६ । ८ । १ ] इति श्रुतेः । संपत्तिः कैवल्यं ' ब्रह्मैव सन्ब्रह्माप्येति ' [ बृ० ४ । ४ । ६ इति श्रुतेः । तयोरन्यतरामवस्था सुषुप्तिं कैवल्यं वाऽपेक्ष्य विशेषविज्ञानाभाव आम्नायते । यस्मात्तदधिकारेणैवेदमाविष्कृत प्रकटितम् । ' यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति ' [ बृ० ४ । ३ । १९ ] इत्यादिश्रुतयः सुषुप्तौ मानम् । ' एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति ' [ बृ० २ । ४ । १२ ] ' यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन किं पश्येत्केन किं विजानीयाद्विज्ञातारमरे केन विजानीयात् ' [ बृ० २ । ४ । १४ ] इत्यादिश्रुतयः संपत्तौ मानम् । निर्विशेषब्रह्मभाव एव संपत्तिशब्दार्थः ।

' नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ।
निवृत्तिस्तद्वदेवास्य नावगत्याऽऽत्मनोऽपरा ' ॥

इति वचनात् । सगुणविद्याविपाकस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्मान्न पूर्वोक्तविरोधः ॥ १६ ॥ ( ६ )

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥**

ये सगुणब्रह्मोपासका ब्रह्मलोकं प्राप्तास्ते सगुणब्रह्मोपासनान्मनसा सहैवेश्वरसायुज्यं प्राप्तास्तेषां किं निरङ्कुशमैश्वर्यमाहोस्वित्साङ्कुशमिति संशये सति निरङ्कुशमिति तावत्प्राप्तम् ' आप्नोति स्वाराज्यम् ' [ तै० १ । ६ । २ ] ' सर्वेऽस्मै देवा बलिमावहन्ति ' [ तै० १ । ५ । ३ ] ' तेषां सर्वेषु लोकेषु कामचारो भवति ' [ छा० ७ । २५ । २ ] इत्यादिश्रुतिभ्योऽप्रतिहतसंकल्पाच्चेति प्राप्ते ब्रूमः—जगद्व्यापारवर्जम् । जगदुत्पत्त्यादिव्यापार वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं सगुणस्येश्वरस्य प्रसादलब्ध मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्येश्वरस्यैव । कुतः । प्रकरणादितरेषामसंनिहितत्वाच्च । परमेश्वर एव जगद्व्यापारेऽधिकृतः । तमेव प्रकृत्योत्पत्त्याद्युपदेशात् । ' आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत '

[ ऐ० १ । १ ] इत्यादिश्रुतिषु वियदादिजगत्सृष्टिप्रतिपादिकासु सर्वत्र परमात्मैव स्रष्टृत्वेनोपदिश्यते न क्वापि योगिनः । ईश्वरान्वेषणोपासनपूर्वकमितरेषां तत्प्रसादतोऽणिमाद्यैश्वर्यं श्रूयते तेनासंनिहितास्ते । असंनिहितत्वं स्पष्टमाह मन्त्रवर्गः—' को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ' [ ऋ० सं० ८ । ७ । १७ । ६ ] इति । अतो न तेषां जगत्स्रष्टृत्वम् । अन्यथाऽनेकेश्वरत्वे सति समनस्कत्वात्काश्चित्सिसृक्षति कश्चित्संजिहीर्षतीति जगद्व्यवस्था न सिध्येत् । तस्मात्परमेश्वरतन्त्रत्वमेवेतरेषामिति व्यवस्थितिरिति भाष्यकृत आहुः ॥ १७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

अथ यदुक्तम् ' आप्नोति स्वाराज्यम् ' [ तै० १ । ६ । २ ] इत्यादिप्रत्यक्षोपदेशादीश्वरसमानैश्वर्ये सति जगद्व्यापारोऽपि भविष्यतीति चेन्न । आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डले विशेषायतने स्थितः परमेश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिः । यद्वाऽऽधिकारिकस्य ब्रह्मणो मण्डले लोक उपासकानां स्थित्युक्तेस्तदधीनमेव मुक्तानां स्वाराज्यादिकं न स्वतन्त्रमिति । कथमेतदवगम्यत ईश्वरायत्तं मुक्तानां स्वाराज्यमिति । ' आप्नोति स्वाराज्यम् ' एतदनन्तरम्—' आप्नोति मनसस्पतिम् ' [ तै० १ । ६ । २ ] इत्याह । यो हि सर्वमनसां पतिरीश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति । तदनुसारेणैव चानन्तरं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति ' [ तै० १ । ६ । २ ] इत्याह । एवमादिश्रुतिपर्यालोचनया नित्यसिद्धेश्वरायत्तमेवैषामैश्वर्यमित्यववेयम् ॥ १८ ॥

## विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि पारमेश्वरं रूपं न केवलं विकारमात्रवर्ति सवित्रादिमण्डलमात्रवर्ति । तथा हि द्विरूपस्थितिमाह श्रुतिः—

' एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि '

[ ऋ० पुरुष० मं० ३ ] इत्येवमादिः । न च तन्निर्विकाररूपमितरालम्बनाः प्राप्नुवन्तीति शक्यते वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे सति निर्गुणं रूपमनवाप्य सगुण एव पारमेश्वरे रूपे सगुणोपासका अवतिष्ठन्त एवं सगुणेऽपि निरङ्कुशमैश्वर्यमनवाप्य सावग्रहा एवावतिष्ठन्ते । ते च सालोक्यसामीप्यसारूप्यमुक्तिभाजस्तारतम्येन परमेश्वरमुपासीनाः सन्तोऽवतिष्ठन्ते । तेषामैश्वर्यं सातिशयमेव ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

विकारावर्तित्वं परमात्मनः प्रत्यक्षानुमाने प्रत्यक्षं श्रुतिरनुमानं स्मृतिस्ते दर्शयतः । श्रुतिस्तावत्—' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।

तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ' [ क० ५ । १५ ] इत्येवमाद्या । स्मृतिश्च—

' न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ' ॥

[ भ० गी० १५ । ६ ] इत्येवमाद्या । अनुपहितमखण्डसच्चिदानन्दस्वरूपं ब्रह्मैव परमार्थः । तत्प्राप्तिश्चानेकजन्मसंसिद्धानां गुरूपदेशादनुपदमेव ज्ञातात्मतत्त्वानामप्रतिबद्धसाक्षात्काराणामुत्तमाधिकारिणामस्मिन्नेव जन्मनि भवति । ननु ज्ञात आत्मेत्यत्र ज्ञानस्य विशेषणत्वेन ज्ञानविशिष्टस्यैवाऽऽत्मनो मोक्षरूपत्वाद्विशेषणनाशे तदभावप्रसङ्गस्तेन तस्य ज्ञानस्योपलक्षणत्वमेव वक्तव्यम् । तथा च ततः प्रागपि काले मोक्षव्यवहारापत्तिरिति चेन्मैवम् । काकवन्तो देवदत्तस्य गृहा इत्यादावपि काकसंबन्धात्प्रागपि देवदत्तगृहव्यवहारापत्तेः । उपलक्षणस्यापि स्वोत्तरकाल एव व्यावर्तकत्वमिति चेदिहापि तुल्यम् । न हि दृष्टेऽनुपपन्नं नाम । अविद्यायाश्चानादित्वात्प्रागभावनिवृत्तिरूपघटनिवृत्तावपि पुनः प्रागभावानुत्पत्तिवन्नाविद्यानिवृत्तिरूपतत्त्वज्ञाननिवृत्तावप्यविद्यायाः पुनरुत्पत्तिः । ननु तत्त्वमस्यादिवाक्यजन्यज्ञानस्य परोक्षत्वमेव नापरोक्षत्वं शब्दस्यापरोक्षज्ञानजनकत्वादर्शनात् । ज्ञातकारणत्वावच्छेदेन परोक्षज्ञानजनकत्वनियमादिति चेदुच्यते—शब्द एव स्वतः प्रमाणभूतो गुरुशास्त्रविषयाणां महिम्ना साक्षात्कारं जनयति । न च कारणस्वभावभङ्गो मनस इव परोक्षापरोक्षज्ञानजननस्वभावाङ्गीकारात् । एतच्च ' दशमस्त्वमसि ' इत्यादौ दृष्टं न हि दृष्टे नुपपन्न नामेति दिक् । तदेवं विकारावर्तित्वं परब्रह्मणः स्वरूपं तत्प्राप्तिरेव परमपुरुषार्थ इति सूत्रकृदाशयः । अत एवेदं सूत्रद्वयं गतार्थमिति दार्ढ्यार्थं सूत्रकारः सूत्रयामासास्मिन्नुपासकप्रकरण इति द्रष्टव्यम् ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं सगुणब्रह्मोपासकानामैश्वर्यम् । यस्माद्भोगमात्रमेवैषामीश्वरेण समानम् । तथा च श्रुतिः—' यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति ' [ बृ० १ । ५ । २० ] इति । यथा हिरण्यगर्भस्य तल्लोकस्थानि भूतानि भोगसाधनानि तद्वदुपासकस्यापीत्यर्थः ॥ २१ ॥

नन्वेवमैश्वर्यस्य सातिशयत्वेनान्तवत्त्वात्पुनरावृत्तिः स्यादित्यत उत्तरं पठति भगवान्बादरायण आचार्यः—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ ( ७ )

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरं

मदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पुरी यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म [ छा० ८ । ५ । ३ ] यश्चानेकप्रकारैः ' हिरण्यगर्भः समवर्तताग्रे ' इत्यादिमन्त्रार्थवादेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते । कुतः । ' तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ ] ' एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते ' [ छा० ४ । १५ । ५ ] ' ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते ' [ छा० ८ । १५ । १ ] इत्यादिशब्देभ्यः । ऐश्वर्यस्यान्तवत्त्वेऽपि यथाऽनावृत्तिस्तथा वर्णितं ' कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ' [ ब्र० सू० ४ । ३ । १० ] इत्यत्र कार्यब्रह्मप्रलये सति तत्रैवोत्पन्नब्रह्मज्ञाना: सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः सगुणात्पर विशुद्ध ब्रह्म प्रतिपद्यन्त इति । सम्यग्दर्शनविध्वस्ताज्ञानाना तु नित्यसिद्धनिर्वाणपरायणाना सिद्धैवानावृत्तिस्तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । ' अनावृत्तिः शब्दात् ' इति सपूर्णसूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वमवदातम् ॥ २२ ॥ ( ७ )

इति श्रीलक्ष्मीनरहरिसूरिसूनुहरिदीक्षितस्य कृतौ ब्रह्मसूत्रवृत्तौ चतुर्था-
ध्यायस्य चतुर्थः पादः ।

---

## समाप्ता ब्रह्मसूत्रवृत्तिः ।

---

व्यास वसिष्ठनप्तार शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ १ ॥
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शंभुर्भगवान्बादरायणः ॥ २ ॥

' व्यासो नारायणः साक्षात् ' इत्यादिवचनैः सूत्रकारं नारायणं नत्वा तमेव कलावतीर्णं शंकरभगवत्पादं भाष्यकार नमामि ।

कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव च ।
द्वापरे व्यासनामा तु कलौ शंकरनामधृत् ॥

इति वचनात् । यौ शेषवाय्ववताराविति किंवदन्त्यस्ति यद्यपि तथाऽपि तौ न शंकरभगवत्पादमतिरिच्येते । नारायणस्वरूपत्वाच्छंकरभगवत्पादस्य । तयोस्तत्किंकरत्वात् ॥

प्रार्थितो रामरायेण तद्गुरुर्हरिदीक्षितः ।
तद्बोधार्थमिमां वृत्ति व्यधितानुग्रहाद्गुरोः ॥
गजेषुरसभूसंख्ये ( १६५८ ) शकेऽब्दे चानलाह्वये ।
जेष्ठशुक्लत्रयोदश्यां ग्रन्थः सिद्धिमगादयम् ॥